# वैखानसागमकोशः

एकादशं सम्पुटम्

## ९.प्रायश्चित्तप्रकरणम्

द्वितीयो भागः

## १०.तत्त्वज्ञानप्रकरणम्

राष्ट्रियसंस्कृतविद्यापीठग्रन्थमाला – १८६

# वैखानसागमकोशः

एकादशं सम्पुटम्

## ९.प्रायश्चित्तप्रकरणम्

द्वितीयो भागः

## १०.तत्त्वज्ञानप्रकरणम्

प्रधानसम्पादकः

**आचार्यः हरेकृष्ण शतपथी**

कुलपतिः

सम्पादकौ

**आचार्यः लक्ष्मीनरसिंहभट्टः**

**आचार्यः हयवदनपुराणिकः**

विषयविशेषाणां आङ्ग्लसारः

**आचार्यः प्रभाकर आपटे**




राष्ट्रियसंस्कृतविद्यापीठम्

तिरुपतिः

२००९

राष्ट्रियसंस्कृतविद्यापीठग्रन्थमाला -१८६

**वैखानसागमकोशः – एकादशं सम्पुटम्**

**९. प्रायश्चित्तप्रकरणम् द्वितीयो भागः**

**१०.तत्त्वज्ञानप्रकरणम्**

**प्रथमसंस्करणम्** : २००९
**प्रतिकृतयः** : १०००



प्रधानसम्पादकः प्रकाशकश्च

**आचार्यः हरेकृष्णशतपथी**
**कुलपतिः**
राष्ट्रियसंस्कृतविद्यापीठम्, तिरुपतिः, आन्ध्रप्रदेशः, भारतम्

मुद्रणाय सज्जीकृतः

**आगमकोशपरियोजना**
राष्ट्रियसंस्कृतविद्यापीठम्, तिरुपतिः

**मूल्यम् : रू.** 345/-

मुद्रकः स्टूडेण्ट्स अफ्सेट, तिरुपतिः

RASHTRIYA SANSKRIT VIDYAPEETHA PUBLICATION SERIES -186

# VAIKHĀNASA ĀGAMA KOŚA

## Volume XI

## 9.Prāyaśchitta Prakaraṇam

PART - II

## 10.Tatvajñāna Prakaraṇam

*Chief Editor*

**PROF. HAREKRISHNA SATAPATHY**
**Vice-Chancellor**

*Editors*

**PROF. LAKSHMINARASIMHA BHATTA**

**PROF. K. HAYAVADANA PURANIK**

*Topical Summary*

**PROF. P. PRABHAKARA APTE**




**RASHTRIYA SANSKRIT VIDYAPEETHA**

**TIRUPATI**

**2009**

Rashtriya Sanskrit Vidyapeetha Publication Series - 186

**VAIKHĀNASA ĀGAMA KOŚA** - Volume XI

**9. Prāyaśchitta Prakaraṇam Part II**

**10. Tatvajñāna Prakaraṇam**

**First edition : 2009**

**No of copies : 1000**



*Chief - Editor & Publisher*

**Prof. Harekrishna Satapathy**
**Vice-Chancellor**
Rashtriya Sanskrit Vidyapeetha, Tirupati, Andhra Pradesh, India.

Prepared by **Agama Kosa Project**
Rashtriya Sanskrit Vidyapeetha, Tirupati.

**Price : Rs.** 345/-

**Printed at :** Students Offset, Tirupati

---

Data Correction & DTP - N. Venkata Ramana Prasad.
The book has been set-in pages in Computer Unit, Agama Kosa Project.

Grams: Vidyapeetha

Prof. Harekrishna Satapathy
Vice-Chancellor



**Rashtriya Sanskrit Vidyapeetha**
(University established under sec.3 of UGC Act, 1956)
**Tirupati- 517 064 (A.P.)**
(Accredited with A+ Grade by NAAC)

Tel/Fax: 0877 - 2287680
(O) 2287838
(R) 2287826
E-mail : hks_vc@yahoo.com

*" Centre of Excellence in the Subject of Traditional Sastras"*

---

## FOREWORD

The tradition of this country favours the theory that all our activities should be free from flaws and fallacies despite the fact that "to err is human". In course of performing the duties and responsibilities, one is bound to make some mistakes, minor or major, either deliberately or inadvertently. The commission or omission of some acts: in the realm of architecture, iconography as well as rituals is related to so many factors including circumstantial compulsions. Since the basic purpose of creation of human race on the earth is to do good to others and the inner voice of every human being dictates the same only, much care has been taken by our ancient legal luminaries and experts in jurisprudence while presenting the procedure of imposition of punishments to the wrong-doers. It is more reform-oriented than anything else. The intention behind this entire exercise to adopt a reformatory stand is noble. It connotes idea that everything should be brought back to the proper track, without concentrating much on the negative aspects of the episode. Hence the theory of ***Prayaschitta*** or atonement or expiation has been conceived of and introduced by our sages not only in the field of Agamas or Temple rituals but in all spheres of human life.

Atonement or ***Prayaschitta*** is a form of punishment prescribed by our scriptures in consultation with the divine inner voice of the saints and savants of this country to reform the whole process by bringing some positive changes in the minds of the people either connected directly or indirectly with the process.

***"Prayaschitta Prakaranam"*** is an important aspects of Agama Literature. So many scriptures on Agamas have prescribed various types of atonements or expiations for different kinds of lapses or mistakes or irregularities or circumstantial hazards. All these things, no doubt, may occur, while discharging the duties, pertaining to temples or other sacred places, by Sthapatis, Silpis, priests or others. But that should not dampen the true spirit of a pious procedure of divine worship and as such stall the process perpetually. The Sastras, that guide us in our each and every step of movement, prescribe a way out to overcome the impediment and that prescription is nothing but a ***Prayaschitta*** or atonement. The present XI Volume of Vaikhanasa Agama Kosha projects various types of expiations for various types of flaws and lapses. This is the part - II of ***Prayaschitta Prakaranam*** of the concerned volume, that exhaustibly narrates the balance portion of the thrust area. The part I of ***Prayaschitta Prakaranam*** deliberated upon the topics pertaining to some aspects of expiation; whereas the present volume describes the remaining topics such as i) Expiation for flaws during festival ii) Atonement for the occurrences of contamination by non-touchable creatures iii) Pacificatory Rites iv) Expiation for undesirable cannonical admixture v) Renovation vi) Sprinkling Ritual vii)Mounting of sacred garland onto to the diety, purpose of garlanding sacred wreath viii) Mal Feasances.

It is needless to mention that both the parts on the concerned area will be highly useful for the scholars, readers and students having an inclination to know details on ***"Prayaschitta"*** in a methodical manner.

The concluding volume also incorporates a special section on the philosophical

background of Vaikhanasa Agama, called ***10. Tattavajnana Prakaranam***. It is to be noted that Vaikhanasa Agama does not contain Pada-wise fourfold division into Jnana, Yoga, Kriya and Carya. The contents of Kriya Pada and Carya Pada i.e. Temple Architecture, Iconography and Rituals are extensively dealt with, in vols I to XI. However, the contents on Philosophy and Yoga which are briefly treated in Vaikhanasa Agama are covered in ***Tattavajnana Prakaranam*** of conculding volume.

It gives me immense pleasure to learn that with the publication of this XI volume, the Rashtriya Sanskrit Vidyapeetha has been able to fulfil its commitment to the society and scholars to bring out a number of encyclopedic volumes covering all the aspects of ***"Vaikhanasa Agama"*** under Agama Kosha Project, a prestigious and socially relevant intellectual exercise. With the execution of this Major Research Project, now our scholars have taken up the herculian task of preparing encyclopedic volumes on ***"Pancharatra Agama"*** an important branch of Agama literature related to the rites and rituals of Vishnavite Temples and other sacred abodes.

It is specially noteworthy that Vaikhanasa and Pancaratra: the two branches of Vaisnava Agama, respectively govern, both ritually as well as spiritually, the two main Temples under TTD, namely Sri Venkateswara shrine at Tirumala and Sri Padmavati shrine at Tiruchanoor.

May I avail this opportunity to express my profound sense of gratitude to all those who have contributed a lot for the successful execution of this mega-project and wish the forth-coming one a grand success.

**(Harekrishna Satapathy)**
Vice-Chancellor

2-11-2009
Tirupati.

Rashtriya Sanskrit Vidyapeetha ; Tirupati(A.P)



आगमकोशपरियोजना

Āgama Kośa Project

# उपोद्घातः

सुविदितमेवेदं समवगतसर्वशास्त्राणां सङ्ख्यावतां समेषां यदत्र निसर्गकरुणा-वरुणालयस्य श्रुतिशिरसि विदीप्तस्य च भगवतः श्रीनिवासस्य राजधान्यां तिरुपतौ संस्कृतं संस्कृतिं च प्रतिष्ठापयितुं केन्द्रसर्वकारेण संस्थापितमिदं राष्ट्रियसंस्कृतविद्यापीठमासंस्थापना-न्निगमागमशास्त्रसंरक्षणदीक्षम् अभिनवप्रयोगशीलं संस्कृतमातरं संसेवमानं भारते स्थेयसीं प्रतिष्ठामध्यास्त इति।

अध्यात्मचिन्तनप्रधानेऽस्मिन् भारतवर्षे सकललोकोज्जीवनाय प्रवृत्तानां तन्त्रापराभिधानानामागमानां निरन्तरप्रचारः अनादेः कालात्प्रवर्तते । अविच्छिन्नगुरु-शिष्यपंरम्परया आगतो ग्रन्थसन्दर्भ आगमपदेनाभिधीयते। यद्यप्याचार्यमुखादधीत्य वेदानधिगच्छन्ति शिष्या इति वेदा अप्यागमशब्देन व्यवह्रियन्ते तथापि चिरादस्मत्पूर्वजाः वेदान् निगमशब्देन विग्रहाराधनप्रतिपादकत्राण्यागमशब्देन च व्याजह्रुः।

भारतीयसंस्कृतिनिधेः वेदस्योपबृंहणाय प्रवृत्ताः शिवविष्णवादीनामाराध्यदेवानां पारम्यं प्रतिपादयन्तश्चागमाः शैवशाक्तवैष्णवभेदेन त्रेधा भिद्यन्ते। तत्र शैवागमाः कापालकालामुख-पाशुपतशैवभेदेन चतुर्धा भवन्ति। तत्र शैवभेदः पुनः वाम-दक्षिण-सिद्धान्तभेदेन त्रिधा। दक्षिणभेदे अन्तर्भूतानां काश्मीरागमानामुत्तरदेशेष्वेव प्रचुरः प्रचारः, शैवसिद्धान्तागमानां तु दक्षिणदेशेष्वेव प्रचारः। शैवागमाः शिवपारम्यं शिवपूजादिकं च प्राधान्येन प्रतिपादयन्ति। शाक्तागमा दक्षिणाचारवामाचारभेदेन द्विविधा भवन्ति। दक्षिणाचारः प्रायेण वैदिकमार्गानुसारी। वामाचारस्तु वैदिकमार्गपरिभ्रष्ट इति वदन्ति। उभयेऽपीमे शक्तिपारम्यं शक्तिपूजादिकं च विशेषतः प्रतिपादयन्ति। वैष्णवागमाश्च वैखानसपाञ्चरात्रभेदेन द्विविधा भवन्ति। उभयेऽपीमे विष्णुपारम्यं विष्णुपूजादिकं च प्राधान्येन प्रतिपादयन्ति।

पाञ्चरात्रागमाः पुनर्भगवता नारायणेन स्वयमुपदिष्टाः दिव्याः , मुनिभाषिता आप्तोक्ता अदिव्या इति द्विविधाः।

भगवता विखनसा भृग्वत्रिमरीचिकाश्यपेभ्यश्चतुर्भ्यः उपदिष्टः तैश्च प्रचारं नीतः वैखानसागमः।

शैव-वैष्णवाद्यागमानां विषयप्रधानाः आगमकोशग्रन्थाः समेषामागमतत्त्वावबोध-कुतूहलिनां महते उपकाराय कल्पन्त इति विद्यापीठसंस्थापकनिदेशकानां डा. बि. आर्. शर्ममहोदयानामभिसन्धिमनुरुध्य तदानीन्तनेन तिरुपतिकेन्द्रीयसंस्कृतविद्यापीठसंघेन (Kendriya Sanskrit Vidyapeetha Tirupati Society) विमर्शनिपुणानामन्ताराष्ट्रियख्यातिभृतां विद्यापीठसंघाध्यक्षाणां डा. वि. राघवन् महोदयानामाध्यक्ष्ये संशोधनप्रकाशनसमितिः व्यवास्थाप्यत यस्यां संशोधनप्रकाशनमर्मज्ञाः डा. एस्. एम्. कत्रे , डा. पि. एल्. वैद्य, डा. आर्येन्द्रशर्मा , डा.बि. आर्. शर्मा इत्येवं विश्वविख्याताः विद्वांसः सदस्या आसन्। तेषां मार्गदर्शनमनुरुध्य विद्यापीठस्य अनुसन्धानप्रकाशनविभागस्य विद्वद्भिः क्रिस्तूत्तरचतुःषष्ट्यधिकनवशतोत्तरैकसहस्रतमवत्सरतः क्रिस्तूत्तरषडशीत्यधिकनवशतोत्तरैकसहस्रतमवत्सरं यावत् (1964 -1986 A.D) उपलभ्यमानेभ्यः वैखानसपाञ्चरात्रागमग्रन्थेभ्यः, कतिपयेभ्यः शैवागमग्रन्थेभ्यश्च आगमकोशोपयोगिनो विषयाः सङ्कलिताः संशोधिताश्च।

तैर्विद्वद्भिःसङ्कलिताःसंशोधिताः अपेक्षिताश्च वैखानसागमग्रन्थभागाः वैखानसागम-कोशसम्पुटेषु समावेश्यन्त समावेशयिष्यन्ते चेत्येतदत्राविस्मरणीयमास्ते।

समापितविषयसङ्कलनेभ्यो वैखानसागमग्रन्थेभ्य उद्धृतं वैखानसागमकोशस्य प्रथमं सम्पुटमर्चन-वास्तुविधान-आलयनिर्माणसंज्ञकप्रकरणत्रययुतं त्रिनवत्यधिकनवशतोत्तरैक-सहस्रतमे (1993) क्रैस्तवीयसंवत्सरे विद्यापीठेन प्रकाशितम्। निरवरोधं पुनरागमकोश-कार्यस्य निर्वर्तनाय विद्यापीठे आगमकोशपरियोजना मानवसंसाधनविकासमन्त्रालयेन द्व्यधिकद्विसहस्रतमे क्रिस्तुवत्सरे (2002) भूयः प्रकल्पिता।

बेरनिर्माण-बेरप्रतिष्ठा-नित्यार्चन-उत्सव-स्नपन-प्रायश्चित्तप्रकरणगतविषयविशेषाः वैखानसागमकोशस्य द्वितीयसम्पुटमारभ्य दशमसम्पुटपर्यन्तभागेषु प्रकाशिताः। सम्प्रति वैखानसागमकोशस्य एकादशे सम्पुटे प्रायश्चित्तप्रकरणद्वितीयभागस्य तत्त्वज्ञानप्रकरणस्य च विषयविशेषाः उपस्थाप्यन्ते।

किञ्च आगमशास्त्रानुरागिणां विदुषां सुखावबोधाय विविधशीर्षकगतविषयविशेषाणां सारः सम्पुटेऽस्मिन् पृथक् संयोजितः। अधिगताङ्ग्लभाषाणां जिज्ञासूनां कोशगतसंस्कृत-सारभागस्य सुबोधार्थं आचार्य पि. प्रभाकर आष्टे महोदयैः आङ्ग्लभाषयाऽनूदितः सारभागोऽपि अत्र सन्निवेशितो विराजते। एतत्कोशनिर्माणप्रकारविषये तथा क्लिष्टाया आगमशास्त्रीयभाषायाश्च विषये प्रथमसम्पुटे एव विस्तृततयोक्तमेवेति नात्र प्रतन्यते।

वैखानसागमकोशस्य निर्माणकार्ये उपकृतवद्भ्यः विद्यापीठस्य अनुसन्धानप्रकाशन-विभागस्थतदानीन्तनसूरिभ्यः श्रीमद्भ्यः डा. एम्. डि. बालसुब्रह्मण्यम्, डा. मुरलीधरपाण्डेय, डा. आर्. महादेवन्, डा. वि. स्वामिनाथन्, डा. पि. पि. आपटे, डा. यु. शङ्करभट्ट, डा. राघवप्रसाद चौधरी, लक्ष्मीनरसिंहभट्ट, ए. श्रीनिवास अय्यंगार्, पं. के. शठकोपाचार्य, डा. एन्. एस्. रामानुजताताचार्य, के. ए. बालसुब्रह्मण्यम्, डा. उमारमण झा, यशपालखजूरिया, डा.जयप्रसादबलोधी, डा. टि. जि. अनन्तसुब्रह्मण्यम्, एम्. ए. भट्ट, के. रघुनाथन्, श्रीराममिश्र, डा. के. हैमवतीशम्, डा. के. ई. गोविन्दन्, एम्. सायिरामसुब्रह्मण्यशर्मा, सि हेच्. पि. सत्यनारायण, एस्. सुब्बय्य संज्ञकेभ्यः शतशो धन्यवादान् वितरावः।

वैखानसागमकोशस्य एकादशसम्पुटस्य प्रकाशने उपकृतवद्भ्यः प्राच्यप्रतीच्योभय-विद्याविभासुरेभ्यः साहित्यादिविविधशास्त्रकुशलेभ्यः कुलपतिभ्यः आचार्येभ्यः हरेकृष्णशतपथि महोदयेभ्यः, कुलसचिवेभ्यः आचार्येभ्यः ए. गुरुमूर्तिमहोदयेभ्यश्च आधमर्ण्यं प्रकटयावः।

अत्र द्वितीयसम्पुटमारभ्यैकादशसम्पुटपर्यन्तं कोशकार्योऽस्मिन् सर्वात्मना प्रोत्साहं विहितवतां विश्वविद्यालस्यास्य वित्ताधिकारिणां श्रीमतां एस्. आनन्दमहाभागानां चाधमर्ण्यं प्रकटयावः।

ईक्ष्य (प्रूफ) संशोधने सहायकः डा. सुधांशु शेखर महापात्रमहोदयः साधुवादेन स्मर्यते सादरम्। वैखानसकोशग्रन्थस्यास्य टङ्कनकर्मणि तथा पुस्तकसमीकरणकार्ये च सहकृतवन्तं श्री एन्. वेङ्कटरमणप्रसाद्नामानमाशीर्भिः योजयावः।

जगज्जीवातोः श्रीनिवासस्य कृपया वैखानसागमकोशस्य एकादशं सम्पुटमिदं व्युत्पित्सूनाम् आगमतत्वकौतुकिजनानां विदुषां च बहूपकाराय स्यादिति मन्वहे।

तिरुपतिः
दिनाङ्कः २८.९.२००९

**आचार्यः लक्ष्मीनरसिंहभट्टः**
**आचार्यः हयवदनपुराणिकः**

# सूचीपत्रम्



***

# विशिष्टविषयसूची

## ९. प्रायश्चित्तप्रकरणम्

### द्वितीयो भागः

2.

## ७. अस्पृश्यस्पर्शादि प्रायश्चित्तम्

## ८. शान्तिकर्माणि

## ९. तन्त्रसङ्करप्रायश्चित्तम्



## १०. जीर्णोद्धारः

## ११. सम्प्रोक्षणविधिः

## १३. द्वात्रिंशद् अपचाराः

## १०. तत्त्वज्ञानप्रकरणम्



***

### वैखानसागमकोशस्य एकादशं सम्पुटम्

# ९. प्रायश्चित्तप्रकरणम्

### द्वितीयो भागः

### विषयविशेषाणां सारः

## ६. उत्सवदोषप्रायश्चित्तम्

कालोत्सवस्य कालेऽकरणे, अकाले वा करणे, प्रायश्चित्तार्थं त्र्यहं महाशान्तिं कुर्यात्। वैष्णवं विष्णुसूक्तं पुरुषसूक्तं ध्वाजं गारुडं च दशशो जुहुयात्। पञ्चविंशतिकलशैः देवस्य स्नपनं कार्यम्। वैष्णवान् सम्पूज्याचार्यदक्षिणां दत्वा तिथिं नक्षत्रं वाऽभीष्टं पुरस्कृत्यान्यस्मिन् मासेऽवभृथं सङ्कल्प्योत्सवमाचरेत्। अन्यस्मिन् मासेऽपि यद्युत्सवं न कुर्यात् एष एव प्रायश्चित्तविधिः पुनः कार्यः। परस्मिन् वत्सरेऽपि तथा। त्रिवत्सरेभ्यस्तूर्ध्वं सप्ताहं महाशान्तिं कुर्यात्। द्वादशवर्षपर्यन्तमुत्सवलोपे देवस्य पुनः प्रतिष्ठा कार्या।

कालोत्सवलोपे यावद्दिनमुत्सवः कर्तव्य आसीत् तावत्संख्याकेषु दिनेषु पौण्डरीकाग्नौ महाशान्तिं जुहुयात्। तावतीर्गाश्च देवदेवाय दद्यात् । उत्सवमूल्यं द्रव्यं वा दद्यात्। स्नपनं विशेषार्चनं महाहविर्निवेदनं पुण्याहवाचनं ब्राह्मणभोजनं च कारयेत्। द्विगुणमुत्सवं च कारयेत्। तत्तद्वेलोत्सवलोपे तन्त्रेण कृत्वा कालेऽवभृथमाचरेत्। अयं नवाहसप्ताहोत्सवविषये प्रायश्चित्तविधिः। एकाहोत्सवलोपे तु वैष्णवं विष्णुसूक्तं पुरुषसूक्तं च हुत्वा शताष्टकलशैः स्नापयेत्।

उत्सवेऽङ्कुरार्पणलोपे ब्राह्मं सौम्यं पङ्क्तीशं शैषिकं भूमिदैवत्यं वैष्णवान्तं हुत्वा सद्योऽङ्कुरार्पणं कुर्यात्। प्रतिसरबन्धनलोपे वैष्णवं वैष्वक्सेनं सौदर्शनं सौमं नागाधिपदैवत्यं च हुत्वा प्रतिसरं बध्नीयात्।

वर्षधारातिवातादिना उत्सवलोपेऽपि वैष्णवं विष्णुसूक्तं पुरुषसूक्तं श्रीभूमिदैवत्यं च हुत्वा उत्सवं कारयेत्। उत्सवदिनसङ्ख्यायां ह्रासे महाशान्तिं हुत्वा पुनरुत्सवं कुर्यात्। उत्सवमध्ये दीपदण्डनाशेऽपि एवमेव प्रायश्चित्तम्। आपदि तु ध्वजे दीपमारोप्य वैष्णवं शतशो यजेत्।

**ध्वजदण्डपतनादौ प्रायश्चित्तम्**

ध्वजदण्डे वातादिना पतिते अभग्नं ध्वजम् अधिवासादिपूर्वं पुनः तत्स्थाने स्थापयेत्। भग्नं तु विधिनाऽप्सूत्सृजेत्। ततोऽन्यं ध्जजं स्थापयेत्। ध्वजेऽन्त्यजादिस्पृष्टे महाशान्तिं कुर्यात्। ध्वजे कृम्यादिदूषिते बालालयं कृत्वा पश्चात् समीकृत्यार्चयेत्। ताम्रादिना लोहेन कवचादिकरणेऽपि बालालयं कल्पयेत्। ध्वजारोहणे कृते तु बालालयमकृत्वा वास्तुशुद्धिं पञ्चगव्यप्रोक्षणं ध्वजमन्त्रहोमं च कुर्यात्। ध्वजपटादीनां प्रमाणलक्षणादिलोपे गारुडं ध्वाजं च शताष्टकं यजेत्। ध्वजमन्यं लक्षणोपेतं कारयेत्। वैष्णवं विष्णुसूक्तं ध्वाजं च यजेत्। उत्सवमध्ये ध्वजपातश्चेत् गरुडं तस्मादुद्धृत्य यागशालायां संस्थाप्यार्चयेत्।

**ध्वजदेवाद्यपूजने प्रायश्चित्तम्**

ध्वजदेवचक्रविष्वक्सेननन्दीशानामपूजने वैष्णवं तत्तद्दैवत्यं च हुत्वा पुनरभ्यर्च्य निवेदयेत्। ध्वजारोहणे गरुडप्रतिष्ठालोपे वैष्णवं विष्णुसूक्तं पुरुषसूक्तं ध्वाजं गारुडं च शतशो दशशो वा जुहुयात्। ध्वजारोपितस्य गरुडस्य पतने ब्राह्मं प्राजापत्यं सौरं सौम्यम् आग्नेयं व्याहृतीश्च जुहुयात्। गरुडस्य निवेदनलोपे वैष्णवं ध्वाजं गारुडं च हुत्वा द्विगुणं निवेदयेत्। गरुडस्य मुद्गान्ननिवेदनलोपे वैष्णवं वायव्यमाग्नेयमीङ्कारादीन् गारुडं ध्वाजं च हुत्वा मुद्गान्नं निवेदयेत्।

**अधरोत्तरविपर्ययेण ध्वजे आरोपिते प्रायश्चित्तम्**

ध्वजे अधरोत्तरे आरोपिते तु महाशान्तिं हुत्वा ध्वाजं गारुडं च शताष्टकं हुत्वा सप्तकलशप्रोक्षणं च कुर्यात्। ध्वजसंस्थापने दिग्व्यतिक्रमे दिग्दैवत्यं वीशं ध्वाजं

वैष्णवं च जुहुयात्। ध्वजस्य प्रतिष्ठासंस्कारोत्तरं क्षत्रियैर्वैश्यैरुच्छिष्टाशुचिभिर्विप्रैः शूद्रैर्वा स्पर्शने सप्तकलशैः प्रोक्ष्य ध्वाजं गारुडं च जुहुयात्। उच्छिष्टाशुचिभिः शूद्रैः प्रतिलोमैरुदक्यया सूतिकया वा स्पर्शने कृते शताष्टकलशैः प्रोक्ष्य पूर्वोक्तं होमं द्विगुणं कुर्यात्। ध्वजदेवस्य पुनः प्रतिष्ठां कुर्यात्। पर्यग्निपञ्चगव्याभ्यां शुद्धिं कुर्यात्। उत्सवमध्ये चण्डालमहापातकिपतितादिस्पर्शने जाते तं ध्वजं परित्यज्य अन्यं ध्वजं कल्पयेत्। सप्तकलशैः संस्नाप्य औपासनकुण्डे आघारं हुत्वा वैष्णवं विष्णुसूक्तं पुरुषसूक्तं च जुहुयात्।

ध्वजस्य वर्षवातातपैः पक्षिणां विष्ठादिभिः उपघाते सति, प्रमादाद् बुद्धिपूर्वं वा ध्वजे पातिते, अकाले वाऽवरोपिते, शूद्राद्यैरनुलोमैर्वा स्पृष्टे अशुचिं शोधयित्वा उत्सवाधिदैवत्यं षड्वारं जुहुयात्। गारुडं ध्वाजं च सहस्रं जुहुयात्।

ध्वजनाशे आग्नेयं गारुडं ध्वाजं वैष्णवं च हुत्वा ध्वजं कारयित्वा तत्र गरुडमावाह्य पुनरारोपयेत्। उत्सवे ध्वजपूजालोपे वैष्णवं ध्वाजं च शताष्टकं यजेत्। पञ्चविंशतिकलशैः गरुडं स्नापयेत्। ध्वजदेवं सम्पूज्य प्रभूतं निवेदयेत्। ध्वजस्यानुक्तदोषेषु ध्वाजं गारुडं च दशकृत्वो यजेत्। उत्सवे ध्वजारोहणलोपे आघारं हुत्वा दिग्दैवत्यं प्राजापत्यं रौद्रं वैष्वक्सेनं ध्वाजं वैष्णवं विष्णुसूक्तं च जुहुयात्। एकाहिके दिनद्वयोत्सवे च ध्वजारोहणं न कार्यम्। कृते तु पूर्ववदेव प्रायश्चित्तम्। ध्वजारोहणं कृत्वा उत्सवाकरणे महाशान्तिं हुत्वा ध्वजमारोप्य पुण्याहवाचनपूर्वमुत्सवमाचरेत्।

### उत्सवे भेरीपतनादौ प्रायश्चित्तम्

उत्सवघोषणानन्तरं भेर्याः पतने चर्मभेदे यष्ट्यादिपतने वादकानां वा पतने वाद्याधिदैवतं नन्दीशं शैषिकं च जुहुयात्। अन्यां भेरीं प्रकल्प्योत्सवघोषणं कुर्यात्। भेरीताडनलोपे रौद्रं व्याहृतीर्महाव्याहृतीश्च हुत्वा भेरीताडनं कुर्यात्।

ग्रामप्रदक्षिणकाले घोषणेऽकृते वैष्णवं ध्वाजं च हुत्वा घोषणं कुर्यात्। विनैव घोषणं ध्वजे आरोपिते पञ्चविंशतिकलशैर्देवं स्नापयेत्। विष्णुसूक्तं वैष्णवं श्रीसूक्तं

भूसूक्तं चक्रादिसूक्तं च जुहुयात्। नन्दीशं च मूर्तिभिर्यजेत्। देवेशाय महाहविः प्रभूतं वा निवेदयेत्। ग्रामे भूतबलिं दत्वा घोषणपूर्वमुत्सवं कारयेत्। ध्वजारोहणानन्तरमुत्सवाकरणे महाशान्तिहोमं शताष्टकलशस्नपनं महाहविर्निवेदनं ग्रामदेवताबलिं महाभूतबलिं च कृत्वा उत्सवं कुर्यात्। ध्वजारोहणानन्तरं पुनर्घोषणे कृते वैष्णवं ध्वाजं चक्राधिदैवत्यम् इन्द्राधिदैवत्यं च हुत्वा देवस्य स्नपनं कार्यम्। ध्वजं तं त्यक्त्वाऽन्यं प्रकल्प्य घोषणपूर्वं ध्वजमारोपयेत्।

उत्सवादौ स्नपनाभावे प्रायश्चित्तार्थं वैष्णवं विष्णुसूक्तं पुरुषसूक्तं वारुणं च हुत्वा शुद्धोदकैरभिषेचयेत्। यागशालातोरणलोपे दौवारिकमन्त्रैर्जुहुयात्। तत्र दर्भमालालोपे आर्षम् अलङ्कारलोपे श्रीदैवत्यं च जुहुयात्। कुम्भे श्वकाकाद्यैरस्पृश्यैश्च स्पृष्टे प्रतिष्ठोक्तं प्रायश्चित्तं कृत्वान्यं कुम्भमाहरेत्। यागशालायाः कुम्भवेद्या वा प्रमाणतो न्यूनाधिकभावे वैष्णवमाग्नेयं भूमिदैवत्यं च जुहुयात्। देवदेवस्य देव्योश्च सायं प्रातरुत्सवे द्विगुणं हवि र्द्विगुणमर्चनं च यदि लुप्यते, वैष्णवं विष्णुसूक्तं च हुत्वा चतुर्गुणं हविश्चतुर्गुणं चार्चनं कुर्यात्। अन्नबलिपतने नष्टे वा वैष्णवं बलिरक्षकदैवत्यं च हुत्वा बलिमन्यं प्रकल्पयेत्। प्रथमेऽहनि दिग्देवताः समावाह्य प्राच्यादीशान्यान्तं प्रदक्षिणं बलिं दद्यात्। तत्र व्यत्यये निष्कृतिं कृत्वा द्विगुणं बलिं दद्यात्। बलिदाने प्रथमं वास्तुशुद्धिः कार्या। तस्यामकृतायां बलिं दत्वा शान्तिं कुर्यात्। ततो वास्तुशुद्धिं कृत्वा पुनर्बलिं दद्यात्। अकाले बलिदानमासुरं भवेत्। बलिदेशादन्यत्र देवस्य भ्रमणे कृते लघुसंप्रोक्षणं कुर्यात्। अमन्त्रके बलिदाने, विधिवर्जिते वा, बलौ अनुलोमाद्यैर्भक्षिते, पर्युषितेऽत्युष्णे, निवेदनात् प्रागर्वाग्वा शूद्रादिभिर्दृष्टे वा लघु संप्रोक्षणं कार्यम्। द्विगुणं च बलिर्देया।

बलिभ्रमणवेलायां चण्डालः सूतिका वा प्रमादाद्यदि प्रविशेत् सद्यः चक्रशान्तवीशान् बलिबेरं चालयं नीत्वा सप्तकलशैः संस्नाप्य, समभ्यर्च्य हवींषि निवेदयेत्। घोषणदिने प्रोक्ष्य चक्रवीशामितमन्त्रैर्वैष्णवैः बलिरक्षकमन्त्राभ्यां च हुत्वा, पर्यग्निपञ्चगव्याभ्यां वीथिकां शोधयित्वा शिष्टबलिं दद्यात्। घोषणदिने नित्यबलौ लुप्ते

सर्वदैवत्यं विष्णुसूक्तं वैष्णवं च हुत्वा शताष्टकलशैर्देवं स्नापयित्वा घोषणादि कुर्यात्। उत्सवे बलिलोपे कृते बलिरक्षकदैवत्यं दिनदैवत्यं वैष्णवं च हुत्वा बलिं प्रक्षिप्य पुनरुत्सवमाचरेत्। सन्धिबलिलोपे सन्ध्यधिपमनुना वैष्णवैश्च व्याहृत्यन्तं हुत्वा बलिं क्षिपेत्। ग्रामबलिलोपे तद्दैवत्यं वैष्णवं च व्याहृत्यन्तं हुत्वा बलिं क्षिपेत्।

श्वसूकरादिभिर्बलिर्न भक्ष्यः। बलिभुग् वायसः प्रोक्तः, गवादयो मेध्यजन्तवो वा। श्वादिभिर्बलौ भक्षिते शान्तिं जुहुयात्। बलिशेषमनुक्ते स्थाने निर्वाप्य वैष्णवमक्षहमनुं वैष्वक्सेनं गारुडं सौदर्शनं च हुत्वा भूतपीठे बलिं क्षिपेत्। बलिशेषं शूद्रो नाद्यात्। अर्चको बलिशेषभुक्। वास्त्वन्तः शवे सति न बलिभ्रमणं कार्यम्। शवमुद्धृत्य पर्यग्निकरणं कृत्वा पश्चात् बलिभ्रमणं कार्यम्।

वीशादीनामप्येवं द्विगुणं हविरर्चनं च नो चेत् तन्मन्त्रैर्वैष्णवैश्च हुत्वा द्विगुणमभ्यर्च्य द्विगुणं निवेदयेत्। महाहविर्लोपे तु विष्णुसूक्तं वैष्णवं पुरुषसूक्तं प्राजापत्यं च हुत्वा सर्वोपचारैर्देवेशमभ्यर्च्य महाहविर्निवेद्य क्षमस्वेति प्रणम्य पुरुषसूक्तवैष्णवविष्णुसूक्तैः देवेशस्य पादे पुष्पाञ्जलिं दद्यात्। उत्सवे यथोक्तहोमलोपे वैष्णवं विष्णुसूक्तं पुरुषसूक्तं हुत्वा यथोक्तं द्विगुणं जुहुयात्। उत्सवे नित्याग्निव्यतिरिक्ताग्निः कुण्डे यदि प्रणीयते उत्सवो निष्फलो भवेत्। अतो नित्याग्निं प्रणीय द्विगुणं हुत्वा पुनरुत्सवमाचरेत्।

अग्निपूजां विना यदि उत्सवमाचरेत् तदाऽग्निपूजां कृत्वा पुनरुत्सवमाचरेत्। चक्रवीशामितानामर्चने हविर्निवेदने च लुप्ते वैष्णवं विष्णुसूक्तं पुरुषसूक्तं वैष्वक्सेनं गारुडं सौदर्शनं च हुत्वा पुनरभ्यर्च्य निवेदयेत्। कुम्भदेवानामर्चने हविर्निवेदने च लुप्ते तथैवाचरेत्। कुम्भदेवानां नामभिश्च यजेत्। देवालङ्करणेऽकृते वैष्णवं श्रीदैवत्यं च जुहुयात्। पुष्पैर्माल्यैश्च विना शिबिकयाऽपि विना द्विगुणेन हविषाऽपि विना नोत्सवं कारयेत्। तेषां लोपे महासूक्तेन वैष्णवैश्च जुहुयात्। यानालङ्कारलोपे गारुडं वैष्णवं च यजेत्।

नृत्तगेयवाद्यालङ्कारयानाद्यन्यतमहीने सत्युत्सवे ब्राह्मं प्राजापत्यं गारुडं वैष्वक्सेनं वैष्णवान्तं जुहुयात्। स्तोत्रलोपे ब्राह्मं सारस्वतं दिग्दैवत्यं च, भक्तैः परिवृतिहीने वारुणं वैष्णवं वैश्वक्सेनं च, श्वेतच्छत्रादिलोपे वैष्णवं सौम्यं च, चामरादिलोपे वैष्णवं हवीरक्षकदैवत्यं च, अन्यपरिच्छदलोपे श्रीसूक्तं वैष्णवं च, गन्धधूपलोपे बार्हस्पत्यं वैष्णवमार्षं ब्राह्मं च जुहुयात्। दीपलोपे सौरमाग्नेयं वैष्णवं च जुहुयात्।

गेयं नृत्यं वाद्यं धूपो दीपश्चेति पञ्च द्रव्यम्। तद्विना नोत्सवो भवति। तल्लोपे उत्सव आभिचारिको भवति। तदा शान्तिं हुत्वा देवस्य स्नपनं कृत्वा पुनरुत्सवं कारयेत्। आचार्यादिलोपे बार्हस्पत्यं वैष्णवं ब्राह्ममार्षं च, परिजनलोपे विष्णुसूक्तं वैष्णवं च, प्रदक्षिणाभावे विष्णुसूक्तम्, उत्सवान्तेऽर्चनलोपे हविर्लोपे च वैष्णवं, कालेऽतीते विपर्यस्ते वा वैष्णवं च जुहुयात्। आशौचवद्भिरन्यैश्च रथादिस्पर्शने कृते कुशाद्भिः प्रोक्ष्य देवेशमारोपयेत्। तक्षकस्पर्शने तदधिपदैवत्यं जुहुयात्। चण्डालादिस्पर्शने जलेन क्षालियित्वा वास्तुहोमं कुर्यात् । पर्यग्निं कृत्वा पञ्चगव्यप्रोक्षणं कृत्वा रथादिदैवत्यं विष्णुसूक्तं वैष्णवं व्याहृतीश्च जुहुयात्। आचार्ये यजमाने पूजकेऽन्यपदार्थिनि वा नष्टे सद्यः तदन्यं वरयित्वा उत्सवः कार्यः। मानुषं हि कर्म दैवं कार्यं न प्रतिबध्नाति। किन्तु महाशान्तिं कुर्यात्। रथारूढस्य देवस्य तैः स्पर्शे सप्तकलशस्नपनं कृत्वा पुण्याहं वाचयित्वा रथाधिदैवत्यं हुत्वा उत्सवं कारयेत्।

ऋत्विगाचार्यादीनां कलहे भर्त्सने शपने हनने वा वैष्णवमार्षं च जुहुयात्। उत्सवान्ते तीर्थलोपे उत्सवलोपशान्तिं कृत्वा घोषणादिपूर्वकं पुनरुत्सवं कुर्यात्। पश्चात् तीर्थमाचरेत्। उत्सवमौत्सव एव बिम्बे कारयेत्। अन्यबिम्बे कृत्वा शान्तिं कृत्वा पुनरुत्सवमाचरेत्। अन्यालयोत्सवार्थमालयात् बिम्बे बहिर्गते तदुत्सवलोपो यदि तदा क्षिप्रं शान्तिं कुर्यात्। तद्दिनाधिदैवत्यं चक्रं, ब्राह्मं रौद्रमिन्द्रादिदैवत्यं विष्णुसूक्तं वैष्णवं श्रीभूमिदैवत्यमार्षं व्याहृत्यन्तं च जुहुयात्। अष्टचत्वारिंशत्कलशैर्देवस्य स्नपनं कृत्वा उत्सवमाचरेत्। शैलजं दारवं वा कृतमौत्सवं बिम्बमाभिचारिकं भवति। अतो

वैष्णवं पुरुषसूक्तं विष्णुसूक्तं च जुहुयात्। पञ्चाशत्कलशैर्देवस्य स्नपनं च कुर्यात्। उत्सवस्यादौ मध्येऽन्ते च ब्राह्मणभोजनेऽकृते महाशान्तिं हुत्वा द्विगुणं कारयेत्। अवैष्णवकृता पूजा हन्ति पुण्यं पुरातनम्। अतोऽवैष्णवैः पाषण्डैश्च देववहने कृते सहस्रकलशस्नपनं कुर्यात्। दीक्षाङ्गवस्त्रस्य प्रतिसरस्य वा नाशेऽन्यदाहृत्य विष्णुगायत्र्या जुहुयात्। यावद्दीक्षा भवेत् तावद्दीक्षाङ्गस्य परिग्रहः कर्तव्यः। अन्ते तु तद्गता शक्तिः स्वयमेव नश्यति। उत्सवे चक्रादिबिम्बपतने स्नपयित्वा तन्मन्त्रैः वैष्णवैर्विष्णुसूक्तैश्च जुहुयात्। देवदेवस्य पतने तु लोकानां महद्भयम्। तस्मादुद्विग्नमानसो भूत्वा बिम्बमुद्धृत्य प्रक्षाल्य सप्तभिः कलशैः संस्नाप्यार्चयेत्। वैष्णवं विष्णुसूक्तं श्रीभूसूक्तं च हुत्वा सर्वदेवाहुतीश्च हुत्वा ब्राह्मणान् भोजयेत्। देवे यानान्निपतिते पीठाच्च वियोजिते प्रभाच्छत्रायुधाभरणादिभेदे छेदे वा संयोज्य बिम्बशुद्धिं कारयेत्। भूमियज्ञान्ते स्नपनमहाशान्तिहोमपुरःसरं प्रतिष्ठामाचरेत्। पश्चादुत्सवमाचरेत्।

औत्सवबिम्बे पतिते हीनाङ्गे च जाते महाशान्तिं हुत्वा तच्छक्तिं ध्रुवबेरे समारोप्य कौतुकं स्नपनं बलिबेरं वाऽलङ्कृत्यावाह्याभ्यर्च्य दिनेदिने महाशान्तिं हुत्वा महाहोमं च हुत्वा उत्सवं कारयेत्। हीनाङ्गं बेरं पुनःसन्धानं कृत्वा पुनः प्रतिष्ठां कारयेत्। जीर्णबेरपरित्यागविधिना विसृज्य पुनर्बिम्बं कृत्वा प्रतिष्ठाप्य वा उत्सवं कुर्यात्।

उत्सवे यानपतने गारुडं जुहुयात्। ऋत्विजां पतने मुनिमन्त्रैर्वैष्णवेन च जुहुयात्। गायकनर्तकयोः पतने श्रीदैवत्यं वैष्णवं च जुहुयात्। वादकानां वादित्राणां च पतने ब्राह्मं रौद्रं वैष्णवं च जुहुयात्। नन्दीश्वरं च समभ्यर्चयेत्। दीक्षामध्ये पदार्थी ग्रामान्तरं यदि गच्छेत्, अस्पृश्यस्पर्शदोषेण, सुरापानादिना, रोगाच्छौचाद्यसम्भवेन, शवानुगमनेन, प्रेतान्नश्राद्धभोजनेन वा यदि दुष्टो भवेत् तदा महाशान्तिमाचरेत्। श्राद्धकर्तरि नो दोषः। तत्र दाता भवेत् स हि।

उत्सवे धूपपतने यस्यकस्यचिद्दहने मायां संह्लादिनीं किष्किन्धं सुन्दरं चार्चयित्वा वैष्णवं जुहुयात्। दीपपतने आग्नेयं वैष्णवं च जुहुयात्। चामरादीनां पतने मायादीनभ्यर्च्य वायव्यं वैष्णवं च जुहुयात्। चक्रवीशामितादिबिम्बाभावे पृथक्पृथक् पात्रेषु तानावाह्याभ्यर्च्य तत्तद्दैवत्यं हुत्वा पश्चादुत्सवं कारयेत्। चक्रं बलिबेरं च याचयेदिति केचन। याचितं तत्क्रियान्ते पूर्वालयं नीत्वा संस्थाप्य शान्तिं जुहुयात्। वर्षधारासु वात्यासु च उत्सवाचरणे देवेशं संस्नाप्य वैष्णवं विष्णुसूक्तं पुरुषसूक्तं श्रीभूमिदैवत्यं दिग्दैवत्यं वारुणं वायव्यं च जुहुयात्। बिम्बेऽग्निना स्पृष्टे वस्त्रमाभरणं यानं च सर्वं विसृजेत्। बिम्बस्य स्नपनं कुर्यात्। वैष्णवं ब्राह्मं रौद्रं देवीमुनिचक्रादीनामिन्द्रादीनां च जुहुयात्। पायसादि विनिवेदयेत्। उत्सवस्यावभृथनक्षत्रसङ्ख्याक्रमविपर्यासेनावभृथाचरणे उत्सवाधिदैवत्यं तिथिवारनक्षत्र-दैवत्यं च हुत्वा ब्राह्मणान् भोजयेत्। पूर्वरात्रे तीर्थार्थं कौतुकबन्धनेऽकृते वारुणं वैष्णवं तद्दिनदैवत्यं च हुत्वा कौतुकं बध्नीयात्। शयनं तीर्थार्थमकृतं चेत् श्रीभूसूक्तं वैष्णवं शैषिकं च हुत्वा शयनमाचरेत्। दिवैव तीर्थः कर्तव्यः। न रात्रौ। रात्रौ तीर्थकालश्चेत् दिवा न कार्यः। व्यत्यये तु ब्राह्मं रौद्रं विष्णुसूक्तं वैष्णवं तद्दिनाधिपदैवत्यं चक्रादीनां च हुत्वा पुण्याहं वाचयेत्। तैलाभ्यञ्जनचूर्णस्नानयोर्लोपे वैष्णवं ब्राह्मं रौद्रं चक्रादीनां च हुत्वा पश्चादुत्सवमाचरेत्। तीर्थान्तस्नपनलोपे दिग्दैवत्यं वैष्णवं विष्णुसूक्तं च हुत्वा पुनःस्नपनं कार्यम्। चक्रादीनामस्पृश्यस्पर्शे जाते महाशान्तिं हुत्वा सप्तकलशैः संस्नाप्य पुनरुत्सवः कार्यः। चण्डालस्पर्शिना बिम्बे स्पृष्टे देवस्य स्नपनं कुर्यात्। वैष्णवं च जुहुयात्। चण्डालस्य बिम्बातिसामीप्ये जाते दिनत्रयमष्टोत्तरशतकलशस्नपनं कार्यम्। चण्डालादिसन्निकृष्टे देशे देवार्थं नृत्तगेयादिकरणे पर्यग्निवास्तुहोमपुण्याह-वाचनस्नपनानि कार्याणि। चण्डालैरेव नृत्तगेयादि कारयेच्चेदप्येवमेव प्रायश्चित्तं कार्यम्। ध्वजावरोपणेऽकृते ध्वाजं गारुडं वैष्णवं ब्राह्मं च हुत्वा अवरोहयेत्। अवभृथात् पश्चात् सप्ताहान्नवाहाद्वा अन्तरे एव ध्वजावरोहणं विहितम्। तदकरणे ध्वाजं गारुडं ब्राह्मं वैष्णवं हुत्वाऽवरो पयेत्। सप्ताहातिक्रमणे एकाहमुत्सवं शतब्राह्मणभोजनं सर्वदेवाहुतिहोमं महाभूतबलिं ध्वजपूजां च कृत्वा तमवहरोहयेदित्यपि वदन्ति।

ध्वजावरोहणबलिलोपे ध्वजदेवं संपूज्य वैष्णवं तदालयगतपरिषद्दैवत्यं च हुत्वा ध्वजावरोहणं कार्यम्। एकाहोत्सवं स्नापनं महाभूतबलिं च कारयेदित्येके। बलिसन्धौ सुरामांसादिबलिपाते गोमयेनोपलिप्य पुण्याहं वाचयेत्। वास्तुहोमं पर्यग्निं पञ्चगव्यप्रोक्षणं च कृत्वा वैष्णवं विष्णुसूक्तं ब्राह्मं रौद्रं चक्रं वीशं शान्तमिन्द्रादीन् तद्दिनाधिपांश्च हुत्वा पञ्चाशत्कलशैर्देवं स्नापयेत्। सप्तभिः कलशैः चक्रादीन् स्नापयित्वार्चऽयित्वा निवेद्य पश्चादुत्सवमाचरेत्। अनुक्तेषु दोषेषु वैष्णवं विष्णुसूक्तं पुरुषसूक्तं विष्णुगायत्रीं च जुहुयात्। उत्सवकाले वैखानसार्चितबिम्बस्यान्यदेवबिम्ब दृष्टिपथे यद्यागमनं भवेत् तदा तस्य सम्प्रोक्षणं कार्यम्। अर्थात् विष्णोरुत्सवकाले ग्रामेऽन्यदेवोत्सवो न स्यादित्युक्तं भवति। तथा विष्णूत्सवतः पश्चादन्योत्सवोऽपि न कार्यः। अन्योत्सवतः पश्चाद् विष्णूत्सवाचरणं कर्तव्यम्। यदि पश्चात् अन्योत्सवः क्रियते तदा तद्दोषशमनार्थायान्ततो विष्णूत्सवः कार्यः। घोषणाद्यवरोहान्तं यावद् दिनमेकमपि विष्णूत्सवकालेऽन्योत्सवेन साङ्कर्यं दोषाय भवति। तत्र प्रायश्चित्तार्थं सन्धौसन्धौ शोधयित्वा गोमयेनोपलिप्य पुण्याहं वाचयित्वा वास्तुहोमं वैष्णवं ब्राह्मं रौद्रं चक्रादीनां च दिनाधिपदैवत्यं च हुत्वा देवस्याष्टोत्तरशतकलशैः स्नपनं कुर्यात्। चक्रादीनां च स्नपनं कुर्यात्। पायसादि निवेद्य पश्चात् उत्सवं कारयेत्। दुर्गालक्ष्मीसरस्वतीनामुत्सवैः सङ्करस्तु न दोषाय। घोषणाद्यवरोहान्तं यावत् शुभकर्माण्यपि ग्रामे न कार्याणि। कृतेषु तेषूक्तमेव प्रायश्चित्तं कार्यम्। उत्सवस्य उत्सवाहानि संहत्य शरीरमुच्यते। दिनमेकैकमङ्गम्। सन्ध्या च प्रत्यङ्गम्। तथा देवस्य बिम्बं शरीरम्। सुदर्शनादयस्त्वङ्गम्। बलिः प्रत्यङ्गम्। रथरङ्गध्वजच्छत्रचामरादि परिच्छदानि भूषणानि। तत्र शरीरे दोषयुक्ते पुरुषसूक्तमतोदेवादि वैष्णवं यद्देवादि ब्राह्ममैन्द्रं वारुणमालयस्थितदेवानां मूर्तिमन्त्रांश्च जुहुयात्। अधमोत्तमं स्नपनं च कारयेत्। महतीं पूजां कृत्वा पुनरुत्सवमाचरेत्। अङ्गे दुष्टेऽपि होमं पूर्ववदेव कृत्वाऽधमं स्नपनं च कृत्वा शिष्टाहःसु क्रमेण विधिवदुत्सवः कार्यः। प्रत्यङ्गे दुष्टे तु वैष्णवं जुहुयात्। गौणेन विधिना संस्नाप्य शान्तिमन्त्रान्

वाचयित्वा विधिना उत्सवं कारयेत्। भक्तानां ब्राह्मणादीनां कलहे पतने वा ब्राह्मं वैष्णवं च जुहुयात्।

आचार्यादिकलहे क्षते वा तं विसृज्यान्येन कारयेत्। किन्तु तस्य न दीक्षा भवेत्। महाशान्तिं तु कारयेत्। यजमानाचार्ययोः क्षोभे आर्षं वैष्णवं शैषिकं च जुहुयात्। भृत्यवर्गक्षोभे भौतिकं वैष्णवान्तं जुहुयात्। जनसम्बाधाद् गोपुराभ्यन्तरे रक्तस्रावश्चेत् त्वरया तं शोधयित्वा शान्तिहोमं पञ्चगव्यप्रोक्षणं पुण्याहवाचनं च कृत्वा पश्चादुत्सवमाचरेत्। कलहेनाशन्युत्पातादिना वा रथचक्रग्रहेण वा मरणे विष्णुसूक्तं पुरुषसूक्तं वैष्णवं पारिषदमुत्सवाङ्गदेवत्यं च जुहुयात्।

रजस्वलागमने भूमिशुद्धिं वास्तुहोमं पुण्याहवाचनं च कृत्वा वैष्णवं चक्रादीन्द्रादिदैवत्यं च हुत्वा देवस्य स्नपनं वेदाध्ययनं च कुर्यात्। यजमानाशौचे तद्द्रव्येण न पूजयेत्। पूजने च विष्णुगायत्र्या जुहुयात्। पञ्चविंशतिकलशैर्देवं स्नापयेत्। पुण्याहं वाचयेत्। उत्सवे विहितद्रव्यालाभे तत्तद्दैवत्यमन्त्रान् वैष्णवान्तं जुहुयात्। उत्सवमध्ये आचार्यमरणे तत्पुत्रं शिष्यं वाऽऽहूयाचार्यत्वं प्रकल्प्य मुनिमूर्तिभिर्युक्तं विष्णुसूक्तं वैष्णवं ब्राह्मं च जुहुयात्। यजमानमरणे राजानं यजमानं सञ्चिन्त्य शान्तिं हुत्वोत्सवमाचरेत्। राज्ञो मरणे महाशान्तिं कृत्वोत्सवमाचरेत्। देवस्य स्नपनं कृत्वा शान्तिं जुहुयात्। आलयाभ्यन्तरे शस्त्राद्यैर्मरणे महाशान्तिं तद्दिनाधिपदैवत्यं च जुहुयात्। वीथ्यां मृतिसम्भवे तु शेषवीथीं परिभ्राम्य आलयं प्रविश्य देवेशमवरोप्य सप्तभिः कलशैः संस्नाप्य पुण्याहं वाचयेत्। मुद्गान्नं विनिवेद्य क्षमामन्त्रेम प्रणमेत्। अन्तर्वीथ्यां शवे याते वास्तुहोमपर्यग्निपञ्चगव्यैर्वीथीं संशोध्य लोकपालमन्त्रैर्बलिं निर्वाप्य हुत्वा बल्युत्सवादीनि कारयेत्। आलयस्याशीतिदण्डाभ्यन्तरे शवे सति उत्सवं कुर्याच्चेत् स विनश्यति। तच्छीघ्रमपहायैव महाशान्तिं पार्षदं च हुत्वा उत्सवमाचरेत्।

## ७. अस्पृश्यस्पर्शादिप्रायश्चित्तम्

बिम्बस्य सर्पस्पर्शे वस्त्रमाल्यादि संशोध्य शुद्धोदैरभिषिच्य प्रतिष्ठोक्तां शुद्धिं

कुर्यात्। मूषकमण्डूकमार्जारनकुलादीनां गर्भागारप्रवेशे विण्मूत्रादिविसर्जने तद्व्यपोह्य पञ्चगव्यैः प्रोक्ष्य वैष्णवं विष्णुगायत्रीं चाष्टोत्तरशतं जपेत्। बिम्बस्योच्छिष्टाशुचिस्पर्शेऽप्येवमेव शुद्धिं कुर्यात्। प्रथमावरणे सूतिकोदक्यान्त्यजादिभिः प्रवेशे परिषद्देवानामर्चास्थाने स्पृष्टे दर्भोल्मुकेनोद्दीप्य वास्तुस्नपनोक्तमन्त्रैः पञ्चगव्यप्रोक्षणं पुण्याहं च कुर्यात्। नित्याग्नौ दौवारिकद्वारपालकवैष्णवमन्त्रैश्च जुहुयात्। बाह्यावरणे सूतिकादिप्रवेशे मार्जनोपलेपन-प्रोक्षणवास्तुयज्ञैः शुद्धिः। अर्चनकाले सूतिकादिभिर्दृष्टे देवं पञ्चगव्येनाभिषिच्य शुद्धोदकैः संस्नाप्य प्रथमावरणप्रवेश इव हुत्वार्चयेत्।

आलयाभ्यन्तरे सूतिकादिप्रवेशे तत्स्पृष्टहविर्निवेदने च वास्तुहोमपर्यग्निपञ्च-गव्यप्रोक्षणपुण्याहस्नपनानि कृत्वा सप्ताहं वैष्णवं विष्णुसूक्तं पुरुषसूक्तं रौद्रं सौम्यं ब्राह्मं श्रीभूमिसूक्तं च हुत्वा पुनः प्रतिष्ठां कुर्यात्। ब्राह्मणान् भोजयेत्। ध्रुवबेरे कौतुकादिषु च सूतिकादिभिः स्पृष्टेषु प्रथमावरणप्रवेश इव शुद्धिं कृत्वा वास्तुहोमपर्यग्निपञ्चगव्यप्रोक्षण पुण्याहस्नपनानि कृत्वा महाशान्तिं हुत्वा पुनः प्रतिष्ठां कारयेत्।

ध्रुवबेरे कौतुके वा आशौचवद्द्विजैः वेददूषकपाषण्डाद्यैः श्वकुक्कुटादिभिर्वा स्पृष्टे महाशान्तिं हुत्वाऽधिवासं विनैव प्रतिष्ठोक्तं स्नपनं कृत्वा पुनः स्थापयेत्। वैखानसेतरैः तान्त्रिकैः प्रतिष्ठायामर्चने उत्सवस्नपनादिषु वा प्रमादाद्यदि स्पर्शनं क्रियते महाशान्तिं हुत्वाऽधिवासपुरः सरं पुनः प्रतिष्ठापयेत्। अर्चकान्यद्विजैः स्पर्शने कृते शुद्धोदैरभिषेचनं कर्तव्यम्। अभिषिक्तैः क्षत्रियैः स्पर्शनेऽपि तथा। अनभिषिक्तैः क्षत्रियैः स्पर्शनेऽष्ट-चत्वारिंशत्कलशैः स्नपनम्। वैश्यसंस्पर्शेऽष्टोत्तरशतकलशैरभिषेचनं च कार्यम्।

गर्भालये तस्करादिप्रवेशे देवं बालालये स्थापयित्वा द्वित्रमासं स्थलशुद्धिं विधाय महाशान्तिं हुत्वा संप्रोक्षणविधानेन पुनः प्रतिष्ठां कुर्यात्। चोरैः शुत्रभिर्वा बिंम्बेऽपहते यावद् बिम्बं पुनः कुर्यात् तावत्कालं सुवर्णकलशे देवमावाह्यार्चयेत्। देवदेवेन विना देव्यावपहते चेत् देव्यौ विधिना कृत्वा प्रतिष्ठाप्य विवाहं कुर्यात्। देवीभ्यां विना देवेशेऽपहते देव्योरनुगुणं देवबेरं कृत्वा पुनः प्रतिष्ठां कुर्यात्।

प्रथमावरणे चण्डालादिप्रवेशे वास्तुहोमशान्तिहोमौ कृत्वाऽष्टोत्तरशतकलशैः स्नपनं कार्यम्। द्वितीयावरणे तत्प्रवेशे शान्तिं हुत्वाऽष्टोत्तरशतकलशैः स्नपनं कार्यम्। तृतीयावरणे तत्प्रवेशे वैष्णवं हुत्वा चतुर्विंशतिकलशैःस्नपनं कुर्यात्। पञ्चमावरणे तत्प्रवेशे दशकृत्वो वैष्णवं हुत्वा पञ्चकलशैः स्नपनं कुर्यात्। षष्ठावरणप्रवेशे सप्तकलशैः स्नपयित्वा पुण्याहं वाचयेत्। परिवारालयान्तःप्रवेशे तेषां स्नपनं कार्यम्। तत्तन्मन्त्रं वैष्णवं च जुहुयात्। बहिश्चेत् स्नपनं कार्यम्।

प्रथमावरणे द्वितीये वा महापातकिषु नैरन्तर्येण संचरत्सु मासेऽतीते मासमेकं महाशान्तिं हुत्वा पुनः कर्षणादिसंस्कारपूर्वकं महाप्रतिष्ठां कुर्यात्। प्रासादाभ्यन्तरे ब्राह्मे च तेषु संचरत्सु संवत्सरेऽतीते अर्चनादीनि सन्त्यज्य कौतुकादिरक्षणं कृत्वा गर्भागारादिसप्तप्राकारेषु गाः वासयित्वा मासेऽतीते सर्वत्र शुद्धिं कृत्वा मासत्रयं महाशान्तिं जुहुयात्। कर्षणादिपुनःसंस्कारं कुर्यात्। बालालयं संकल्प्य जलाधिवासबिम्ब-शुद्धिस्नपनब्राह्मणभोजनपूर्वकं देवं बालालये प्रतिष्ठाप्य आलयादि सर्वं नवीकृत्य महाप्रतिष्ठां कारयेत्।

शवदूषितकूपजलेनाज्ञानादर्चने कृते तत्पक्वहविर्निवेदने च वैष्णवं यद्देवादिसमन्वितं हुत्वा स्नापयित्वाऽभ्यर्च्य निवेदयेत्। मण्डपे गोपुरे प्रपायां वाऽग्निदाहे महाशान्तिं हुत्वा स्नापयेत्। अग्निदाहेन बेरनाशे मासमेकं महाशान्तिं हुत्वा गर्भालये पर्यग्निपञ्चगव्याभ्यां शुद्धिं कृत्वा बिम्बमन्यत् प्रतिष्ठापयेत्। दारवं मृण्मयं च बेरं धूमाक्रान्तं, शैलं ज्वाला-क्रान्तं च त्यजेत्। घटे भिन्ने घटाकाशं यथा महाकाशे प्रलीयते एवमेव बेरनाशे शक्तिर्विश्वं व्याप्य तिष्ठत्येव। अतो ग्रहशान्तिं पाञ्चभौतिकं च हुत्वा बिम्बमादाय कलशैः संस्नाप्य पुनःप्रतिष्ठान्तं स्थाण्डिले नित्यमर्चयेत्।

मण्डपे गोपुरे महानसेऽग्निशालायां वाहनशालायां सभास्थाने धनस्थाने शयनालये परिवारालये कर्ममण्डपे वा देवदेवस्य सन्निधौ ये निवासं कुर्वन्ति तेषां रौरवे वासो भविष्यति। अतो मानुषनिवासमपहाय पञ्चगव्यकुशोदकैः प्रोक्ष्य वास्तुहोमपूर्वकं देवस्य

पुनःप्रतिष्ठा कार्या। देवालयसमीपे प्रतिलोमनिवेशने देवस्तत्र नार्चनीयः। अन्यथा यजमानस्य राष्ट्रस्य च महद्भयं भवेत्। अतस्तदपनीय सप्तरात्रं महाशान्तिं हुत्वा पुनः प्रतिष्ठा कार्या। प्रतिलोमानां शतदण्डान्तरे, चण्डालादीनां क्रोशादूर्ध्वं च निवासं कल्पयेत्। आलये मनुष्याणां श्वकुक्कुटादीनां वा ताडने छेदने रक्तस्रावमरणादौ जाते तद् व्यपोह्य तद्देशशुद्धिं कृत्वा वास्तुहोमं हुत्वा देवं सप्तभिः कलशैः संस्नाप्य महाशान्तिं हुत्वा पुनःप्रतिष्ठां कारयेत्। आलयाद् बाह्ये तत्सम्भवे पर्यग्निं कृत्वा शुद्धोदकैः संस्नाप्य शान्तिं होमं कुर्यात्। देवेन शवे दृष्टे देवं संस्नाप्य वैष्णवं विष्णुसूक्तं पुरुषसूक्तं च जुहुयात्। प्रथमावरणे गजाश्वादिपशुषु मृतेषु तद्देशं खनित्वा वास्तुहोमं हुत्वा शुद्धोदकैरभिषिच्य वैष्णवं विष्णुसूक्तं पुरुषसूक्तं च जुहुयात्। गर्भालये पशुमरणे चण्डालादिप्रवेशवत् शुद्धिः कार्या। शालानुषक्तशालासु पशुमरणे महाशान्तिं हुत्वा स्नपनं कुर्यात्। दोषसामान्यप्रायश्चित्तं तु वैष्णवहोमेन कुर्यात्।

## ८. शान्तिकर्माणि

कायकृतं पापं द्रव्यदानेन शुध्यति। मानसं प्राणायामेन। द्रव्यकृतं होमेनान्नदानेन दक्षिणाभिः पूजया च। ऋत्विग्भिः कृतं पापं जपैर्ध्यानेन च शुध्यति। मौने प्रमादाद् दोषसम्भवे प्रणवजपः कार्यः। उपवासे भोजनम्। अर्चनायां यथोक्तपूजाऽऽवृत्तिः।

बेरस्य रोदनभाषणादिदर्शनं, ज्वालायुक्ते धूमकेतौ रुधिरस्रावदर्शनं, बिम्बे तृणादीनां कृमिकीटादीनां चोत्पत्तिः, आकाशे ग्रहयुद्धादिदर्शनं, प्रतिसूर्यदर्शनम्, अशनिपातः, महावातः, विमानस्य भेदश्चलनं पातश्च, अकाले पूर्णचन्द्रदर्शनं क्षीणचन्द्रदर्शनं च, क्षीणसूर्यदर्शनं, दिवा नक्षत्रदर्शनम् दिग्दाहो महोल्कापात एवमाद्यद्भुतदर्शने राज्ञो राष्ट्रस्य च विनाशः स्यात्। ततः शान्तिं समाचरेत्। भूकम्पे, अकाले मेघगर्जिते, पांसुवर्षणे, गन्धर्वनगरदर्शने, अपर्वणि चन्द्रसूर्ययोरुपरागे, अकाले शक्रधनुर्दर्शने श्वजम्बुकरोदने, दुर्भिक्षे, सागरक्षोभे, राष्ट्रक्षोभे शत्रुभये, महाव्याधिभये एवमादिषु

दुर्निमित्तेषु दोषशान्तये आलये शान्तिः कार्या। नराणां पापबाहुल्यादपराधबाहुल्याच्च देवा अद्भूतानि सृजन्ति।

अद्भुतं दिव्यमान्तरिक्षं भौमं चेति त्रिविधम्। तत्र द्विव्यं ग्रहयुद्धानावृष्ट्यादि। आन्तरिक्षमुल्कापाताशनिपातपांसुवर्षणगन्धर्वनगरप्रतिसूर्यादि। भौमं चरस्थिरभेदेन द्विविधम्। चरं देशकालस्वभावविरुद्ध युग्माधिकप्रसूतिः, वानरादीनां गोमहिषादिविपरीतयोनिजननं, पक्षिसर्पादीनां विपरीतवर्णाकारादिसम्भव इत्येवमादि। स्थिरं तु प्रतिमारोदनादि, प्रासादादिषु मृगपक्षिसर्पादिप्रवेशनवल्मीकरक्तस्त्रीजननादयः, वृक्षादिषु पतनं फलपुष्पपत्रादीनां विकारादि च। गर्भगृहे जातान्यद्भुतानि ब्राह्मणराजराष्ट्रविनाशकराणि। प्रासादोत्पन्नानि क्षत्रियस्य विनाशसूचकानि। तत्रापि प्रासादे अधिष्ठानोद्भवानि क्षत्रियवंशोद्भवस्य, पादप्रस्तरोद्भवानि मूर्धाभिषेकयोग्यस्य, ग्रीवोद्भवानि युवराजाभिषिक्तस्य, शिखरोद्भवानि महाराजस्य च विनाशसूचकानि। प्रथमावरणे दृष्टान्यद्भुतानि वैश्यस्य द्वितीयावरणादिषु दृष्टानि शूद्रस्य च दुःखकराणि। अग्निकुण्डे जातानि पुरोहितस्य चतुर्मुखस्थाने द्विजातेः, रुद्रालये सर्वजातीनां, गुहालये नृपस्य, वक्रतुण्डालये सेनेशानां, श्रिय आलये राजपत्नीनां, दुर्गालयेऽन्यस्त्रीणां, मातृस्थाने निकृष्टजातीनां, सोमस्थाने ओषधीनां, भास्करालये नृपवाहनशस्त्रजीविनाम्, अन्यदेवालये तत्तद्भक्तानां च भयकराणि। एतेषां शान्तिकर्म सद्य एव समारभेत।

अद्भुतेषु तारतम्यं यथा दिव्यान्यान्तरिक्षाणि चोत्तमोत्तमानि। विद्वद्ब्राह्मणतपस्विषु कालदेशस्वभावविरुद्धं यद् दृष्टं तदुत्तमम्। गोमहिषादिषु मध्यमम्। पक्षिसर्पकृमिकीटादिषु चाधमम्। तथा गर्भगृहे उत्तमोत्तमाः। मुखमण्डपे उत्तमाः। प्रथमावरणे मध्यमाः। शेषा अधमा इति। तथा राजाङ्गणे उत्तमोत्तमाः। ततः परितोऽङ्कणेषु उत्तमाः। अन्तर्वास्तुके मध्यमाः। वास्तुबाह्ये चाधमा इति।

दिव्यान्तरिक्षयोरद्भुतयोश्चिकित्सा नास्ति। शान्तिर्भवति। द्वादशाहाभ्यन्तरे शान्तिं कुर्यात्। द्वादशाहातीते महाशान्तिः कार्या। मासेऽतीते महाशान्तिं सप्ताहं जुहुयात्।

विप्रशतं भोजयेत्। षण्मासातीते तु भगवान् न रमेत। भौमेषु चरेषु निमित्तनैमित्तिकौ देशान्तरे वासयित्वा शान्तिं कुर्यात्। सर्वदेवात्मभूतस्य सर्वशान्तिविधायिनो विष्णोः प्रीत्यर्थं शान्तिहोमादिकं सर्वमुक्तं विधिवदाचरेत्। वायव्यं वैष्णवं रौद्रं ब्राह्मं महाशान्तिं च जुहुयात्। आलयस्थितदेवानां महास्नपनं च कारयेत्। इयं सर्वदुर्निमित्तानां साधारणी शान्तिः।

अग्निदाहदुर्निमित्तशान्त्यर्थं वायव्यमाग्नेयं वारुणमैन्द्रं ब्राह्मं वैष्णवं महाशान्तिं च हुत्वा देवेशस्य विशेषस्नपनं कृत्वा प्रभूतं निवेदयेत्। ग्रामे सर्वत्र भूतबलिं च दद्यात्। भित्त्यादिचालनादौ शान्तिहोमं हुत्वा शक्तितो दक्षिणां दद्यात्। बेररोदनादौ भूमियज्ञं कृत्वा महाशान्तिं सहस्राहुतिपूर्वकं सर्वदैवत्यं वैष्णवं ब्राह्मं रौद्रं सौरं सौम्यं च हुत्वा पुण्याहं वाचयेत्। सूक्तजपवेदाध्ययनमहास्नपनप्रभूतनिवेदनब्राह्मणभोजनानि च कारयेत्। लाजापूपहरिद्रान्नैः ग्रामे सर्वत्र सन्धिषु अर्धरात्रे भूतचैत्यबलिं च दद्यात्।

महाबेरे स्वेदादिदर्शने वैष्णवं विष्णुसूक्तं पुरुषसूक्तमींकारादींश्च हुत्वा सप्तकलशैः स्नपनं हविर्निवेदनं ब्राह्मणभोजनं च कारयेत्। देवालये स्पन्दिते महाशान्तिं हुत्वा विप्रशतं भोजयेत्। अग्न्युल्काशनिधूमादिभिरालये दूषिते ईङ्कारादीन् मिन्दाहुती विच्छिन्नं पारमात्मिकं च हुत्वा ब्राह्मणान् भोजयेत्। चैत्यवृक्षादिपाते आग्नेयं वारुणं सौम्यं महाशान्तिं च हुत्वा वनाधिदेवपूजां कुर्यात्। सहस्रकलशैः स्नपनं कृत्वा महाहविः प्रभूतं च निवेदयेत्। अर्धरात्रौ ग्रामे महाभूतबलिं च दद्यात्। विप्रांश्च भोजयेत्। प्रतिच्छायाप्रातिकूल्ये महाशान्तिं ब्राह्मं वैष्णवं रौद्रमाग्नेयं वारुणं सौरं सौम्यं वायव्यं च हुत्वा विभुं संस्नापयेत्। राज्ञां यजमानस्य च जन्मनक्षत्रे उत्पातदर्शनं चेत् शान्तिं विधिवत् सद्य एव कुर्यात्। आकाशे प्रतिसूर्यदर्शने वैष्णवं सौरं च जुहुयात्। दिग्दाहे वैष्णवं दिग्दैवत्यमाग्नेयं च जुहुयात्। उपलवर्षे वारुणं वैष्णवं च जुहुयात्।

अकाले इन्दुक्षये महाशान्तिं जुहुयात्। आलये बाह्यप्राकारे रक्तस्त्रीदर्शने तं देशं संशोध्य पञ्चवारुणपर्यन्तं मूलहोमं, यद्देवादीन् ईङ्कारादीन् पारमात्मिकं ब्राह्मं

पुरुषसूक्तं वैष्णवं विष्णुसूक्तं च जुहुयात्। महाभूतबलिं च दद्यात्। बेरे रक्तस्त्रिया स्पृष्टे बेरशुद्धिं जलाधिवासं च कृत्वा पुनः प्रतिष्ठां कारयेत्। गर्भगृहे सर्पादिदर्शने तदुद्वास्य गोमयेनोपलिप्य पञ्चगव्यैः प्रोक्ष्य वास्तुशुद्धिं कृत्वा देवं चतुर्विंशतिकलशैः संस्नाप्य एकाहं महाशान्तिं जुहुयात्।

ध्रुवकौतुकादीनां सर्पस्पर्शे देवं शुद्धोदकैः संस्नाप्य महाशान्तिं हुत्वा पुण्याहं वाचयेत्। प्रासादाद् बाह्ये आवरणे सर्पमरणे तद्देशं प्रोक्ष्य वैष्णवादि दिग्देवत्यं च जुहुयात्। पाकस्थानगोपुरादौ सर्पमरणे वैष्णवं तत्स्थानाधिदेवत्यं च जुहुयात्। मक्षिकादर्शने तद् व्यपोह्य शुद्धिं कृत्वा शान्तिं कुर्यात्। अस्पृश्यस्पर्शे स्थूणादिरोहणादौ अकारण-वृक्षपतनादौ च शान्तिं कुर्यात्। आलयाभ्यन्तरे महावातातिवृष्टिचोराद्यभिभवे देवं संस्नाप्य वास्तुहोमपर्यग्निपञ्चगव्यपुण्याहवाचनपूर्वकं विष्णुसूक्तं पुरुषसूक्तं श्रीभूमिदैवत्यं ब्राह्मं रौद्रं प्राजापत्यं च हुत्वा ब्राह्मणान् भोजयेत्।

अत्रानुक्तशान्तिषु सर्वेष्वद्भुतेषु वैष्णवव्याहृत्यष्टाक्षरद्वादशाक्षरविष्णुसूक्तपुरुष-सूक्तैकाक्षरादिसूक्तश्रीभूमिसूक्तैर्हुत्वा देवं संस्नाप्य अभ्यर्च्य हविर्निवेदयेत्। महादोषेषु एतैर्होमैः सह पारमात्मिकमीङ्कारं सर्वदैवत्यं च जुहुयात्। अष्टोत्तरशतकलशैः संस्नाप्याभ्यर्च्य महाहविर्निवेदयेत्।

राज्ञामन्येषां वा गृहेऽद्भुतदर्शनं चेत् तान् गृहान्तरं प्रवेश्य शान्तिं कृत्वा देवस्याभिषेकं कृत्वा देवब्राह्मणानुज्ञया पुनर्गृहप्रवेशं कारयेत्। वृक्षेषु अद्भुतदर्शने सौम्यमिन्द्राग्निदैवत्यं वैष्णवं विष्णुसूक्तं श्रीसूक्तं च हुत्वा यजुःसंहितारण्यकजपः कार्यः। सर्वग्रासोपरागादावद्भुते ब्राह्मणेभ्यः शक्त्या स्वर्णादिदानं कुर्यात्।

शान्तिः पञ्चविधा। उत्तमोत्तमस्य उत्तमस्य मध्यमस्याधमस्य चेति चतुर्विधाद्भुतस्य तथाऽस्पृश्यस्पर्शनस्य च शान्तयः क्रमेणाद्भुतशान्तिः, प्रभूता शान्तिः, महती शान्तिः, शान्तिः, शुद्धिश्चेति पञ्चधा। तत्राद्भुतशान्तिर्यथा - अग्निकुण्डेषु आघारं हुत्वा

ग्रहशान्त्युक्तविधानेन तत्तदैवत्यमष्टोत्तरसहस्रं जुहुयात्। अष्टाक्षरं विष्णुगायत्रीं वैष्णवं विष्णुसूक्तं पुरुषसूक्तं च हुत्वा दक्षिणां दद्यात्। चतुर्वेदानध्यापयेत्। एवं सप्ताहमाचरेत्। अनावृष्टौ शीतकुम्भे सर्वतीर्थमावाह्याभ्यर्च्य, देवाभिमुखे धान्यपीठे सौवर्णमष्टदलपद्मं हेमपात्रे न्यस्य तस्मिन् देवेशमावाह्य तदुपरि सूचीमात्रसुषिरयुक्तं कुम्भं चतुष्पादिकायां न्यस्य, अविच्छिन्नधारया देवेशं सेचयेत्। वेतससमिद्भिः पालाशैर्वा पञ्चवारुणमष्टोत्तरसहस्रं जुहुयात्। ऐन्द्रं च जुहुयात्। एवं त्र्यहादित्रिंशद्दिनान्तं कारयेत्। देवस्य स्नपनं कृत्वा हविर्निवेद्य आचार्यादिभ्यो दक्षिणां दद्यात्। ततः कर्मान्ते वृष्टिः स्यात्।

दुर्भिक्षादिसर्वोपद्रवशान्त्यै क्षीरधारया देवं स्नपयेत्। विष्णोर्नुकाद्यै-रतोदेवाद्यैरष्टाक्षरविष्णुगायत्रीभ्यां चाष्टाधिकसहस्रं जुहुयात्। त्र्यहं पञ्चाहं वा क्षीरेण घृतेन वा स्नपनं कारयेत्।

प्रभूतशान्त्यर्थं यथोक्तहोमान् कृत्वा सप्ताहान्तेऽष्टोत्तरशतमष्टचत्त्वारिंशद्वा कलशानभ्यर्च्याभिषिच्य हविर्निवेदयेत्।

महाशान्त्यर्थं बिल्वपत्रैराज्याक्तैरष्टोत्तरसहस्रमष्टाक्षरेण हुत्वाऽज्येन वैष्णवं विष्णुसूक्तं पुरुषसूक्तं च हुत्वा त्र्यहान्ते देवं स्नपयित्वाऽर्चयेत्। शान्त्यर्थमेकाहे शान्तिं हुत्वा ब्राह्मणान् भोजयेत्। आचार्याय दक्षिणां दद्यात्।

शुद्ध्यर्थं वास्तुहोमं हुत्वाऽष्टोत्तरशतं बिल्वपत्राद्यैः पूर्ववत् हुत्वा पुण्याहं वाचयेत्। आचार्याय दक्षिणां दत्वा ब्राह्मणान् भोजयेत्।

शान्तिः षड्विधाऽपि। महाशान्तिः, अतिशान्तिः, अद्भुतशान्तिः, सामान्यशान्तिः, उत्पातशान्तिः, शान्तिश्चेति। तथा त्रिकालमुत्तमो होमः। रात्रिहीनो मध्यमः। सायं प्रातश्च हीनश्चेदधम उच्यते। सर्वैरुक्तद्रव्यैर्होम उत्तमः। साज्यचरुणा होमो मध्यमः। केवलाज्येन होमोऽधमः। स्नपनं चेदुत्तमः। केवलार्चनं चेन्मध्यमः। केवलहोमोऽधमः। वैष्णवं पुरुषसूक्तं ब्राह्ममैन्द्रं वारुणं यद्देवादि च समाहत्य महाशान्तिर्भवति।

यद्देवादिद्वयमायुष्टेत्यादि तत्तत्सूक्तं च हुत्वाऽतिशान्तिः कार्या। अद्भुतशान्त्यर्थं नवग्रहहोमं नवाहं सप्ताहं पञ्चाहं त्रियहमेकाहं वा कुर्वीत। रात्रौ नाद्भुतशान्तिं चरेत्। अन्यथाऽत्यन्तदुरितावहा भवेत्। सामान्यशान्त्यर्थं हिरण्यश्रृङ्गादिना पुनात्वन्तेन द्वादशाष्टाक्षराभ्यां च सहस्रं जुहुयात्। उत्पातशान्त्यर्थं द्वादशाष्टाक्षराभ्यां शतं जुहुयात्। अल्पदोषे शान्त्यर्थं वैष्णवं मिन्दाहुती विच्छिन्नं विष्णुगायत्रीं शंनोमित्रं विष्णोर्नुकादि च जुहुयात्। सर्वशान्तौ कुम्भन्यासं धान्यपीठे देवार्चनं च कृत्वा विष्णुगायत्र्या विष्णोर्नुकादिभिः अष्टाक्षरेण च होमः कार्यः। अष्टाक्षरेण त्रिलक्षपर्यन्तं होमः प्रशस्यते। यावत्संख्यं हूयते तावत्संख्यं कुम्भजलमभिमन्त्र्य तेन यजमानमष्टाक्षरेण प्रोक्षयेत्। एवं सप्ताहं नवाहं वाऽऽचरेत्। तेन सर्वपापशान्तिः ग्रहकोपशान्तिश्च भवति। सर्वाभीष्टसिद्धिश्च भवति।

महोत्पातशान्त्यर्थं पूर्वमङ्कुरार्पणं कृत्वाऽघारवास्तुहोमपर्यग्निपूर्वकम् ऐन्द्रादिष्वष्टकुण्डेषु इन्द्रादीन् यजेत्। ब्राह्मं रौद्रं विष्णुसूक्तं च जुहुयात्। ततो महाशान्तिम् अतिशान्तिं सर्वशान्तिं प्रभूतशान्तिं केवलशान्तिम् अद्भुतशान्तिं च सप्ताहं सवनत्रयं जुहुयात्। कलशं संस्थाप्य श्रीवत्सादीनि तन्मध्ये विनिक्षिप्य तोये पद्ममध्ये श्रीभूमिसहितं नारायणं ध्यायेत्। अष्टविग्रहैरर्चयेत्। वैष्णवं विष्णुसूक्तं पुरुषसूक्तं श्रीसूक्तं भूसूक्तं एकाक्षरादिसूक्तं पञ्चशान्तिं च जपेत्। आलये विष्णुं कलशैः स्नपयित्वा कुम्भं गर्भागारे आनीय पूर्वोक्तेन सूक्तेन विष्णुं प्रोक्षयेत्। शिष्टेनोदकेन भूमिं राजानं च प्रोक्षयेत्। ब्राह्मणान् भोजयित्वा आचार्याय दक्षिणां दद्यात्।

अशनिपातादिसर्वोत्पातशान्तये राजराष्ट्राभिवृद्धये च खिले प्रोक्तरीत्या श्रीशताष्टकशान्तिमाचरेत्। वैष्णवं विष्णुसूक्तं पुरुषसूक्तं श्रीभूसूक्तमतोदेवादि एकाक्षरादिसूक्तमित्येतैः सप्तभिः सूक्तैश्चतुरावर्त्य यजेत्। सभ्यकुण्डे आचार्यः प्राङ्मुखः वसोर्धारां यजेत्।

ग्रामशान्तिप्रकारो यथा। मासमेकं सुसंत्यज्य अन्यमासं गतो यदि तदा वास्तुशुद्धिं वेदपारायणं च चरेत्। देवस्य स्नपनं एकाहमुत्सवं च कुर्यात्। द्विमासेऽतीते द्विगुणं, त्रिमासेऽतीते त्रिगुणं च कुर्यात्। एवमेव वत्सरान्तं कुर्यात्। संवत्सरे तृतीये तु प्रायश्चित्तं विधीयते। वास्तुशुद्धिपूर्वकं पुण्याहवाचनं कृत्वा अष्टलोकपालमन्त्रैर्हुत्वा शान्तिहोमं पारमात्मिकं यद्देवादि ईङ्कारादि वैष्णवं ब्राह्मं रौद्रं विष्णोर्नुकादि च जुहुयात्। वेदाध्ययनं देवस्य स्नपनं हविर्निवेदनं प्रभूतबलिं चाचरेत्। एवं नित्यं पक्षं सप्ताहं वा कुर्वीत।

चैत्यवृक्षे सभास्थाने देवतायतनेषु च शिवारुतादिशान्त्यै वास्तुशुद्धिं पुण्याहवाचनं पञ्चगव्यप्रोक्षणं च कृत्वा आर्षं भौतिकं वैष्णवं ब्राह्मं पञ्चवारुणपर्यन्तं व्याहृत्यन्तं च हुत्वा सप्तकलशैः देवं संस्नाप्य ब्राह्मणान् भोजयेत्।

अनुक्तानामरिष्टानां मूलमन्त्रद्वयजपहोमैः शान्तिं कारयेत्। लक्षहोम उत्तमः। अष्टसाहस्रपञ्चसाहस्रहोमौ मध्यमाधमौ। तिलगन्धादिपूर्णे रक्तवस्त्रवेष्टिते कलशे वारुणमण्डलं ध्यात्वा तज्जलेन शिष्यं सहस्रं प्रोक्षयेत्। स्नानं वा कारयेत्। एतेन ग्रहदोषव्याधि-पीडोपद्रवरक्तस्त्रीवल्मीकाद्युत्पाताः दुःस्वप्नशत्रुचोरराजभयाद्युपद्रवाश्च शमं यान्ति।

शान्तिप्रायश्चित्तप्रकरणेषु शान्तिवाचने उक्ते पुण्याहं वाचयेत्। होमशान्तिप्रकरणे चरुणा वैष्णवं यजेत्। अर्चनकालोक्ता शान्तिश्चार्घ्यदानरूपा भवति। बलिशान्तिरपि भूतबलिरेव। स्नपनकालोक्ता शान्तिः पञ्चगव्यप्रोक्षणम्। शान्तिर्नाम क्रियया दोषशमनम्।

श्रीशान्तिर्यथा - श्वेताब्जं, तदलाभे रक्ताब्जं बिल्वपत्रं वा साज्यमष्टोत्तरसहस्रं शतं वा जुहुयात्। अनया शान्त्या श्रियं पुष्टिं च लभते।

शर्कराज्ये मधुक्षीरसमन्वितं वैष्णवं विष्णुसूक्तं पुरुषसूक्तं श्रीभूसूक्तमेकाक्षरादिकं च जप्त्वा विष्णुगायत्रीं ध्यात्वा जुहुयात्। अनया पुष्कलाहुतिशान्त्या सुप्रीतो भगवान् हरिः पुत्रं श्रियं जयमायुरारोग्यं च दद्यात्।

## ९. तन्त्रसङ्करप्रायश्चित्तम्

वैष्णवतन्त्रस्यान्यतन्त्रेण शैवादिना सङ्करो दोषावहो भवति वर्णसङ्करद्वारा ग्रामस्य यजमानस्य राज्ञो राष्ट्रस्य च नाशाय भवति। तद्दोषशमनाय साङ्कर्यं परिहृत्य शान्त्यर्थं पौण्डरीकाग्नौ वैष्णवं विष्णुसूक्तं पुरुषसूक्तं पारमात्मिकमीङ्कारादि चाष्टोत्तरसहस्रमष्टोत्तरशतं वाऽष्टाशीतिं वा जुहुयात्। सप्तभिः कलशैर्देवं स्नपयित्वा लघु सम्प्रोक्षणं कुर्यात्।

वैखानसविधिना प्रतिष्ठाप्यार्चने क्रियमाणे पाञ्चरात्रेण अर्चनादि क्रियते चेदपि, सौम्ये वैखानसे मार्गे आग्नेयेन पाञ्चरात्रेण सङ्करो दोषायैव। ग्रामयजमानराजराष्ट्रनाशकर एव। पक्षमेकं महाशान्तिं हुत्वा पञ्चशतावरान् ब्राह्मणान् भोजयित्वा वैखानसविधिना पुनः प्रतिष्ठाप्यार्चयेत्। तद् राजराष्ट्रसमृद्धिकरं भवेत्।

पाञ्चरात्रविधिना प्रतिष्ठाप्यार्चने क्रियमाणे मासमेकं प्रमादतोऽर्चनं लुप्यते चेत्, तदा वैखानसविधिनाऽर्चनं कर्तुं शक्यते, यदीच्छेत्। तत्र दोषो न भवति। तदा वैखानसविधानेन संस्थाप्यार्चयेत्। पाञ्चरात्रेण आग्नेयेन स्थापिते बिम्बे वैखानसेन सौम्येन संस्कारोऽनुमन्यते। न तु सौम्येन स्थापिते आग्नेयेन संस्कारः। यतः सौम्य आग्नेयादुत्तमः। अतः सौम्येन स्थापिते बिम्बे सर्वं सौम्येनैवाचरेत्। महत्यापद्यपि नान्येन सङ्करं कुर्यात्। सौम्यो हि विशेषतो वैदिको भवति। नान्यस्तथा। स ह्यवेदमूलः।

तत्र सङ्करदोषे सद्यः शान्तिं समाचरेत्। प्रतिष्ठोक्तक्रमेणाङ्कुरार्पणाधिवासादीन् कृत्वा कर्षणादिभिः संस्कारैः विमानं बिम्बं च संस्कुर्यात्।

आचार्यसंकरोऽपि दोषावहः। कर्षणादीनि प्रतिष्ठान्तानि नित्यार्चनस्नपनोत्सव-प्रायश्चित्तविशेषार्चनादीनि नित्यनैमित्तिककर्माणि सर्वाणि चैकेनैवाचार्येण, पूर्वं कर्षणकाले वृतेन, कारयेत्। तदभावे तत्पुत्रपौत्रादिना वा कारयेत्।ताननुज्ञाप्यान्यमाचार्यं वा

वरयेत्। सत्याचार्ये नान्यं वरयेत्। यदि वरयेत् तदाशु तत्स्थानस्य ग्रामयजमानयोश्च नाशाय भवेत्। तच्छान्त्यर्थं पौण्डरीकाग्नौ महाशान्तिं हुत्वा आचार्यं नमस्कृत्य क्षमस्वेति याचेत। आचार्यादीनामलाभे तद्रूपं पटे लिखित्वा नमस्कृत्य तत्सन्निधावन्यं युक्तमाचार्यं वरयेत्। युगपद् बहुषु कर्मसु प्राप्तेष्वपि आचार्यं प्रणम्य तत्पुत्रादिभिः कारयेत्। तदभावे त्वाचार्य एव तन्त्रयित्वा करोति।

## १०. जीर्णोद्धारः

राष्ट्रक्षोभेण वा चोरव्याघ्रादिभयेन वा वल्मीकादिभिर्वा विमाने बेरे वा दुष्टे सति बेरमन्यत्र नीत्वा पूजयेत्। वृक्षमूले वाप्यां कूपे वा संस्थाप्य रक्षयेत्। नवीकृत्य पुनः स्थापयित्वा वा पूजयेत्। जङ्गमबेरेषु कौतुकस्नपनौत्सवादिषु भूगुप्तेषु ध्रुवबेरार्चनमपि यदि न स्यात् तदा महाशान्तिं हुत्वा पुनः प्रतिष्ठा कार्या। गृहेऽर्च्यमानमपि बेरं लक्षणान्वितं ध्रुवबेरानुरूपं च लब्धं चेत् तदा तदेवोत्सवार्थं स्नपनार्थं वा स्थापयित्वाऽर्चयेत्। तदा तद्बिम्बस्थितां शक्तिं सूर्यमण्डले निवेश्य तद्बिम्बे ध्रुवात् शक्तिमावाह्य स्थापयेत्। यद्वा ध्रुवात् शक्तिं कुम्भे निवेश्य लौकिकं बिम्बं संस्थाप्य कुम्भादावाह्य पूजयेत्। लौकिकस्य प्रतिष्ठायां लौकिकाग्नौ प्रतिष्ठाहोमः कार्यः।

एकबेरविधानेन लोहबेरे प्रतिष्ठाप्यार्च्यमाने चोरशत्रुभयादिभिः तद् बेरं भूगुप्तं चेत् तस्य स्थाने यथालाभं शिलामयं जङ्गमं बेरं प्रतिष्ठाप्य नित्यपूजां कुर्यात्। चोरादिभयेऽपगते पूर्वतनं बिम्बमादाय तत्र शिलाबेरात् शक्तिमावाह्य पूजयेत्। यद्वा शिलाबेरमचलं प्रतिष्ठाप्य लौहबेरमौत्सवं कल्पयेत्। बेरस्य भूगोपनानन्तरं कूर्चाद्यर्चनलोपे तु प्रायश्चित्तं कार्यम्।

भूगुप्तोद्धृतबेरशुद्धिर्यथा - सुकाले बिम्बमुद्धृत्य संशोध्य पुण्याहं वाचयेत्। अस्पृश्यस्पर्शो जातश्चेत् जलाधिवासादीनि कारयेत्। अङ्कुरार्पणपूर्वकं वास्तुहोमपूर्वं च देवं चतुर्दशकलशैः संस्नाप्य प्रतिसरं बध्वा कौतुकस्नपनौत्सवबलिबेरैः देवीभ्यां च

सहैकशयने शाययेत्। देवेशस्य देव्या अवताराणां च दक्षिणप्रणिधौ, तदालयगत-परिषद्देवानामुत्तरप्रणिधौ चावाहनं कृत्वा आवाहनक्रमेण निर्वापपूर्वकमाज्याहुतीर्यजेत्। वैष्णवं विष्णुसूक्तं पुरुषसूक्तं विष्णुगायत्रीं द्वादशाक्षरं प्राजापत्यं मिन्दाहुती विच्छिन्नं च जुहुयात्। ततः प्रतिष्ठोक्तविधानेन प्रतिष्ठां कारयेत्। मुख्यगौणादिकान् विमृश्य गौणे मुख्यं कुर्वीत, न तु मुख्ये गौणम्। रेखासुषिराङ्गहानि दर्शने बेरं त्यक्त्वा अन्यत् सलक्षणं बेरं सम्पादयेत्। पौराणे आर्षे दैविके स्वयंव्यक्ते च बेरे लक्षणप्रमाणाद्यभावो न दोषाय।

दिनमेकं बेरस्य भुवि जले वा गुप्तिश्चेत् सकृद्धोमः कार्यः। दिनद्वये चेत् द्विगुणं, दिनत्रये चेत् त्रिगुणम्। एवं मासान्तं होमसंख्यां वर्धयेत्। द्विमासोद्धृतबिम्बस्य शुद्धौ तु अष्टाशीत्युत्तरशताष्टवारं जुहुयात्। पञ्चविंशतिकलशैः स्नपनं च कुर्यात्। षण्मासेऽतीते महाशान्तिं जुहुयात्। एकाब्दादिदशाब्दान्तं तु शताष्टकलशैः स्नपनं कृत्वा पुनःप्रतिष्ठा कार्या। दशाब्दादिशताब्दपर्यन्तमपि शताष्टकलशस्नपनं कारयेत्। सहस्राष्टब्राह्मणभोजनं शताष्टगोदानं च यथालाभं वा कार्यम्। शताब्दादिसहस्राब्दान्तमप्येवमेव कार्यम्। सहस्राब्देऽतीते तु बेरनाश एव। न संशयः। यदि न नाशस्तर्हि पूर्ववदेव शुद्धिं कृत्वा प्रतिष्ठापयेत्।

वारिगुप्ते भूगप्ते च चिरकाले गते सति, भक्तानां बहुजन्मकृतात् पुण्यात् भूम्यादिखननकाले बिम्बदर्शनं चेत् तदा अक्ष्युन्मेषरत्नन्यासजलाधिवासाङ्कुरार्पणादीनि त्यक्त्वा अन्यत् पूर्ववदाचरेत्।

चोरैरपहृतं बेरं यदि पुनर्लभ्यते तदा पश्चादन्यबेरप्रतिष्ठायामपि पूर्वबेरमपरित्यज्य अन्यत्र स्थाने संस्थाप्यार्चयेत्। तस्य देव्यौ कौतुकं च न लब्धं चेत् अन्यत् कारयित्वा स्थापयेत्। एवं प्रतिष्ठानन्तरं यदि देव्यौ लभ्येते तदा ताभ्यां च सार्धं पूजा कार्या। राजा राष्ट्रान्तरं जित्वा यदि बेरमानयेत् तदा तदनुरूपं विमानं ध्रुवं च कारयित्वा प्रतिष्ठां कुर्यात्। तद् ध्रुवबेरानुरूपं दृश्यते चेत् तदौत्सवं स्नापनं वा कल्पयेत्।

नानुरूपं चेत् लौकिकं स्थापयेत्। कुम्भं संसाध्य तस्मिन् सूर्यमण्डलादावाह्य कुम्भाद् बेरे समावाह्य पूजयेत्।

विमानस्य परिवारादौ सर्वत्र वैकल्ये जाते बालालयं कृत्वा बेरं पूजयेत्। नवीने विमाने कृते महाशान्तिहोमपूर्वकं बेरं संस्थाप्य सहस्रब्राह्मणभोजनं कारयेत्। गर्भालयशैथिल्येऽप्येवमेव कुर्यात्। महाबेरे बल्मीकतृणकृमिकीटाद्युपहतेऽपि चैवं कुर्यात्। बिम्बस्यातिसमीपे तक्षकादिनिवेशने जाते बिम्बस्य बालालयदेशे वा स्नपनालये वा बालस्थानं प्रकल्प्य स्थावरात् कौतुके शक्तिं निवेश्य तत् पीठे स्थापयित्वाऽर्चयेत्। पुरुषसूक्तं विष्णुसूक्तं पारमात्मिकमीङ्कारादिकं पञ्चवारुणं जयादीरेकाक्षरादिकं च व्याहृत्यन्तं जुहुयात्।

विमाने अकारणात् पतिते भिन्ने वा मासत्रयं महाशान्तिं हुत्वा कर्षणादिना बालालयं कृत्वा जलाधिवासादिना बिम्बशुद्धिम् अशीत्यधिकसहस्रकलशैः स्नपनं च कृत्वा देवं बालालये प्रतिष्ठाप्य आलयादिनवीकरणानन्तरं महाप्रतिष्ठां कारयेत्। विमाने अशनिहते महामक्षिकादियुते च देवं संस्नाप्य विशेषपूजां ब्राह्मणभोजनं च कृत्वा पुनः सन्धानं कारयेत्। अशनिपातादिना विमाने देवे च नष्टेऽपि ध्वजः सुस्थश्चेत् ध्वजस्याराधनं कार्यम्। पुनरालये निर्मिते तमेव ध्वजमाराधयेत्। अतीतेष्वपि त्रिषु वर्षेषु आलयनिर्माणेऽकृते तत्र देवो न रमते। तद् ध्वजं त्यजेत्। विमानस्थूपिनाशे जाते विमानकल्पोक्तवत् सन्धानं कार्यम्। शिखरे निरन्तरं गृध्रादिवासे विष्ठादिकरणे वा वास्तुहोमं पर्यग्निकरणं चाचरेत्।

भुवङ्गादिदोषे मणिकादिद्वारपालेभ्यो गर्भालये स्थानं प्रकल्प्य नवीकरणानन्तरं भूमियज्ञं वैष्णवं विष्णुसूक्तं पुरुषसूक्तं तद्दैवताकमन्त्रं मूर्तिमन्त्रं च जुहुयात्। देवस्य स्नपनं कृत्वा द्वारपालमावाहयेत्। देवालये द्वादशाब्दपर्यन्तमर्चनाभावे गर्भशक्तिर्विनश्यति। तत्र पुनः संस्कारं कृत्वा देवं स्थापयेत्। विधिवत् स्नपनं कारयेत्। वेदविद्भ्योऽन्नादिदानं कुर्यात्। ग्रामे नगरे वा गर्भशक्तिनाशे जाते कर्षण-वास्तुहोम-ग्रहशान्तिपूर्वकं पञ्चाग्निषु

पुरुषसूक्तं विष्णुसूक्तं ब्राह्मं वारुणं ग्रहसूक्तं सर्वदेवत्यं च जुहुयात्। पुण्याहं वाचयित्वा प्रोक्षणं कुर्यात्।

विमानध्रुवयोर्नाशे कौतुकादीन् बालालये प्रतिष्ठाप्यार्चयेत्। कौतुकादीनामपि नाशे बालालये दारवं बिम्बमाहृत्य स्थापयेत्। दोषयुक्तं बेरं विधिवत् त्यक्त्वा मूलालये विधिना मूलबेरं प्रतिष्ठाप्यार्चयेत्। विमाने जीर्णे पतिते वा तथा बृहद्बेरप्रतिष्ठादोषे, परिवारप्रतिष्ठादोषे, विमानतलदोषे वा नवीकरणमुद्दिश्य बालालयनिर्माणं विहितम्। बालालयदिग्व्यवस्था यथा- आग्नेये धनलाभः। दक्षिणे धनवृद्धिः। नैर्ऋत्ये कर्मसिद्धिः। पश्चिमे धनवृद्धिः वायव्ये महद्दुःखम्। उत्तरे कर्मविनाशः। ईशान्ये विघ्नम्। पूर्वे महद्भयम्। तद्देशे बालालयकरणे कर्तुः मरणं निश्चितम्। यथा मूलालयद्वारं तथैव बालालयद्वारमपि भवेत्। बालालयपरिमाणं मूलालयसमं वा तच्चतुर्थांशहीनं वा भवेत्। ऊर्ध्वं कपोततुल्यं वा पादाग्रसमं वा भवेत्। देवस्य शयनागारे शून्यागारे आवरणातीते देशे वा बालालयं न कुर्यात्। बेरे जीर्णादिदोषसंयुक्ते तत्रार्चनं विनाशकारणम्। अतः कालविलम्बमकृत्वा बालालयं कल्पयेत्। यतो द्वादशाहेऽतीते महाशान्तिं जुहुयात्। मासेऽतीते महाशान्तिं हुत्वा विप्रशतं भोजयेत्। षण्मासेऽतीते भगवान् तत्र न रमेत। संवत्सरेऽतीते तु तत्र प्रेतावासो भवेत्। बालागारेऽयथावत् कृते भूमियज्ञं पुनः पुण्याहं शान्तिं च हुत्वा यथावत् कुर्यात्। बालालयमकृत्वा आलयनवीकरणमाभिचारिकं भवेत्। तद्दोषशान्तये नवाहं सप्ताहं पञ्चाहं त्रियहं वा महाशान्तिं हुत्वा बालागारे संस्थाप्य सूर्यमण्डलात् कुम्भे समावाह्यार्चयेत्। विप्रसहस्रं भोजयेत्।

द्वितीयबालालये बिम्बस्थापनार्थं पूर्वं ततः शक्त्याकर्षणं कार्यम्। बालागारस्योत्तरत औपासनकुण्डे आघारवास्तुहोमौ हुत्वा पर्यग्निं कृत्वा बालागारं पञ्चगव्यैः प्रोक्ष्य पुण्याहं वाचयेत्। गन्धतोयपूर्णे कुम्भे नवरत्नानि निक्षिप्य सौवर्णगरुडायुध-मङ्गलादिभिरलंकृत्य कुशकूर्चं प्रक्षिप्य वस्त्रैर्वेष्टयेत्। देवपार्श्वे प्रणवेन कुम्भं न्यसेत्। पुण्यं वृद्धिं च वाचयेत्। 'प्रभो, गेहमिदं ते अनर्हं, जीर्णम्। अतो यावन्नवं कृत्वा

प्रतिष्ठां कारयामहे तावत् कौतुके बिम्बे वस, प्रसीद' इति प्रार्थ्य एक द्वित्रसंवत्सरान् विज्ञापयेत्। ध्रुवबेरात् शक्तिमादाय कूर्चेन बिम्बे निवेशयेत्। देव्यौ मुनी गर्भालयगतानन्यानपि देवान् आवाहयेत्। कुम्भं बिम्बं च समादाय स्नानश्वभ्रे निवेश्य प्रतिष्ठोक्तैः कलशैः स्नापयेत्। प्लोतेन संमृज्य वस्त्राभरणैरलङ्कृत्य पुण्याहं वाचयित्वा पञ्चशयनेषु बद्धप्रतिसरं देवेशं शाययेत्। दक्षिणाग्नौ हौत्रप्रशंसनपूर्वकं देवानावाह्य निरुप्याज्याहुतीर्यजेत्।

द्वितीयबालालये बिम्बस्थापनमेवं यथा - प्रभाते सुप्तं हरिं स्तोत्रध्वनिभिरोङ्कारजयशब्दैर्नृत्तगेयैर्वाद्यघोषैश्चोत्थाप्य शकुनसूक्तेन कुम्भसहितं बिम्बं बालागारं प्रवेशयेत्। रत्नन्यासं विना तत्र स्थापयेत्। कुम्भस्थां शक्तिमादाय बिम्बे निवेशयेत्। देव्यौ मुनीशौ ब्रह्माणं शङ्करं गर्भालयस्थितान् सर्वान् द्वारपालानपि बालालये समावाहयेत्। विमानाधिदेवता बाह्यपरिवारदेवताश्च तत्तत्स्थाने समावाहयेत्। पुण्याहान्ते हविः सम्यङ् निवेदयेत्। अर्चनकाले आवाहनविसर्गौ द्वौ नाचरेत्। उत्सवस्नपनादीनि पूर्ववदाचरेत्।

प्रथमे द्वितीये वा बालालये नष्टे दुष्टे वा मण्डपादौ कौतुकादीन् विधिवदभ्यर्च्य बालालयं नवीकुर्यात्। ततो वास्तुशुद्धिपुण्याहपूर्वकं तत्र संस्थाप्यार्चयेत्। एवमेव प्रासादे मण्डपे कूपे शालादौ दुष्टे संशोध्य वास्तुहोमं जुहुयात्। वैष्णवं विष्णुसूक्तं पुरुषसूक्तं व्याहृतीरङ्गहोमं पारमात्मिकं च जुहुयात्।

अन्यत्र स्थापितयोः ध्रुवकौतुकयोः प्रमादतः स्थापने क्षिप्रं तद्बिम्बं वर्जयित्वा महाशान्तिं कारयेत्। अधस्तलबिम्बस्योर्ध्वतले लोभादज्ञानतो वा पूजने कृते विनश्यति। ततः क्षिप्रं बालागारं प्रकल्प्य शान्तिहोमं हुत्वा स्थापयेत्। जीर्णबेरस्य विसदृशनूतनबेरकरणं पौराणिकविमाने दोषावहं भवति। ततः शान्त्यर्थं विष्णुसूक्तं पुरुषसूक्तं च जुहुयात्। मृण्मयध्रुवबेरे वर्णक्षय स्फुटितादिदोषसम्भवे तत्रस्थां शक्तिं कुम्भजले समावाह्य तं कुम्भं कौतुकादि च मण्डपे न्यस्य कौतुकादौ समावाह्यार्चयेत्। ततः कुम्भे शक्तिमावाहयेत्। द्विदिनेऽतीते कुम्भान्तरे समारोपयेत्। बेरस्य वर्णलेपादीन् कृत्वा संशोध्य वास्तुहोमं पुण्याहं ध्रुवशुद्धिं कृत्वा कुम्भं बिम्बं चाभ्यन्तरं नयेत्। कौतुकादीन् संस्थाप्य न्यासादि

पूर्वकं कुम्भस्थां शक्तिं ध्रुवबेरेऽवरोपयेत्। ध्रुवात् पुनः कौतुकादिष्वावाह्य पूजयेत्। दोषगौरवात् मासादूर्ध्वं कालेऽपेक्षिते तु देवं बालालये संस्थाप्य बेरं शोधयेत्। उपाङ्गे हीने कुम्भे शक्त्यावाहनं कार्यम्। प्रत्यङ्गे हीने तु महाबेरे शक्त्यावाहनं कार्यम्। उपाङ्गप्रत्यङ्गहानौ बालालयकल्पनं नास्ति। अर्धचित्रस्य शैलबेरस्याङ्गोपाङ्गप्रत्यङ्गहानौ तु शक्तिं नीत्वा बालागारे समाहरेत्। बिम्बं भूमौ पिधाय तदूर्ध्वे महाशान्तिं हुत्वा शिलाग्रहणवत् तत्तदङ्गसमुत्पत्तिं तक्ष्णा कारयेत्। महाङ्गे हीने, समीकृतौ अयोग्ये च तत् त्यक्त्वाऽन्यद् बेरं समाहरेत्। संधानयोग्यं तु बेरं यस्त्यजेत् स पापी भवति। तत्कृतं सर्वं विनष्टं भवति।

ततः सन्धानयोग्यं चेत् सन्धानं कार्यम्। महाङ्गादिषु हीनेषु भूमौ पिधाय शान्तिहोमं कृत्वा तद्दिनेऽतीते बिम्बमुद्धृत्य पञ्चगव्यैः प्रक्षाल्य राजतं चेत् अग्नौ द्विर्दग्ध्वा, रौक्मं चेत् सकृद् दग्ध्वा, तद्द्रव्येणैव पूर्ववद् बिम्बं कारयेत्।

पौराणे आर्षे दैविके स्वयंव्यक्तस्थले चावैधमलक्षणमप्रमाणमपि बेरं न दोषावहम्। ब्रह्मरुद्रादिदेवैः पूजितं दैविकम्। ऋषिभिः प्रतिष्ठापितमार्षम्। कर्तुः कालो न निर्दिष्टश्चेत् तत् पौराणिकम्। स्वयमाविर्भवेद् यत् तत् स्वयंव्यक्तम्।

कौतुकं बलिबेरमौत्सवं स्नपनं च रत्नन्यासं विनैव प्रतिष्ठापयेत्। देव्यादिपरिवाराणां बिम्बानि नवीकृत्य रत्नन्यासपूर्वकं शिल्पिभिः सुदृढं कृत्वाऽष्टबन्धं लेपयेत्। वास्तुहोमं कुम्भार्चनमधिवासादि च कारयेत्। बिम्बस्य पीठे चलिते वियोजिते वा रेखासुषिरदर्शने वा पुनः सन्धानं कारयेत्।

ध्रुवे नष्टे नूतनं ध्रुवबेरमाहरेत्। तदा पूर्वतने देव्यौ सुस्थिते चेत् ताभ्यां नूतनध्रुवबेरस्य विवाहं न कारयेत्। स्तम्भोत्पन्नस्य नृसिंहस्य तदा श्रियौ नोत्पन्ने। अतो विवाहो नास्त्येव। ध्रुवबेरे सुस्थिते देव्यौ यदि नष्टे भवतः तदा नूत्ने देव्यौ कारयेत्। तयोस्तु विवाहविधिमाचरेत्। पूर्वं मह्या स्ततः श्रियश्च विवाहपूर्वं प्रतिष्ठा कार्या।

जीर्णोद्धारक्रियया कर्तुर्द्विगुणं फलं भवति। लोकशान्तिः राजराष्ट्रवृद्धिः प्रजानामारोग्यसम्पदभिवृद्धिः काले वृष्टिश्च भवति।

## ११. सम्प्रोक्षणविधिः

जलसम्प्रोक्षणं, लघुसम्प्रोक्षणं, महासम्प्रोक्षणं चेति प्रायश्चित्तं त्रिधा भिद्यते। निमित्ते प्राप्ते सद्यः सम्प्रोक्षणं कार्यम्। तत्र कालनियमो नास्ति। मासनक्षत्रतिथि-वाराद्यवेक्षणमत्र न कुर्यात्।

बहुबेरेषु सत्सु एकस्मिन् स्थावरे जङ्गमे वा अर्चनं लुप्तं चेत् कालातीतं वा चेत् सम्प्रोक्षणं कार्यम्। निर्माल्यपूजने, निवेदितनिवेदने, एकाहार्चनलोपे, नित्यस्नपनलोपे, बलिहोमादिलोपे, नित्योत्सवाकरणे, प्राकाराभ्यन्तरे प्रमादादशुभदर्शने, अस्पृश्यागमने, चण्डालादिप्रवेशने, बिम्बस्यान्यसूत्रिद्विजैः स्पर्शने, बिम्बस्य महावाताघाते, वर्षबिन्दुसेके, विण्मूत्ररुधिरस्रावे, बहुभाषणे, मैथुने, एवमादिनिमित्ते जलसम्प्रोक्षणं कार्यम्।

जलसम्प्रोक्षणविधिर्यथा- आलयाभिमुखे दक्षिणे वा शुद्धे स्थण्डिले पुण्याहाग्निमुखपूर्वं वास्तुहोमं कृत्वा दोषदुष्टं स्थलं पर्यग्निपञ्चगव्याभ्यां संस्कुर्यात्। बिम्बं कलशैरभिषिच्य पञ्चसु कुम्भेषु पञ्चसूक्तजपपूर्वकं पञ्चमूर्तीरावाहयेत्। पञ्चसूक्तं जुहुयात्। कुम्भजलेन बिम्बं प्रोक्ष्य प्रभूतं निवेद्य नित्यार्चनमाचरेत्। तदा तद्बिम्बे देवसान्निध्यं भवेत्।

दोषाधिक्ये समुत्पन्ने लघुसम्प्रोक्षणं कार्यम्। राष्ट्रक्षोभे दुर्भिक्षे, तन्त्रसङ्करे, गर्भागारे चण्डालादिप्रवेशे, त्र्यहादूर्ध्वमालयेऽर्चनलोपे, दीपाभावे, एकरात्रोपरि देवे ग्रामान्तरस्थिते, गर्भागारेऽग्निदाहाशनिपातादौ, बिम्बेऽन्यसूत्र्यर्चिते स्पृष्टे वा, अन्येष्वनुक्तदोषेषु वा लघुसम्प्रोक्षणं विधीयते।

लघुसम्प्रोक्षणप्रकारो यथा- अङ्कुरार्पणवास्तुहोमपूर्वकं पर्यग्निपञ्चगव्याभ्यां सर्वत्र शोधयित्वा देवेशम् अष्टोत्तरशतकलशैरभिषिच्य कुम्भपूजां कुर्यात्।

द्वात्रिंशत्प्रस्थपूर्णान् सप्तदश कुम्भान् तन्तुनाऽऽवेष्ट्य तोयैरापूर्य वेद्यां विन्यस्य पञ्चायुधाष्ट-मङ्गलैरलङ्कृत्य पञ्चसूक्तद्वादशसूक्तादिभिः नवमूर्तीरावाहयेत्। द्वात्रिंशद्विग्रहैरर्चयेत्। पौण्डरीकाग्नौ पञ्चसूक्तं व्यापकत्रयमन्त्रम् ईङ्कारादीन् धात्रादिं मूलहोमं पञ्चवारुणं कूष्माण्डहोमं पारमात्मिकं च हुत्वा विष्णुगायत्रीं पङ्कजैर्बिल्वपत्रैश्चाष्टोत्तरशतं जुहुयात्। कुम्भं शिरसाऽऽदाय ग्राममालयमेव वा प्रदक्षिणं परीत्य देवदेवस्य सन्निधौ न्यस्य तत्तोयं कूर्चेनादाय पञ्चमूर्तिभिः प्रोक्षयेत्। 'शुची वो हव्ये'ति आलये सर्वत्रापि च प्रोक्षयेत्। देवेशाय महाहविः प्रभूतं वा निवेदयेत्। सहस्रं ब्राह्मणान् भोजयेत्। तेन विष्णुसान्निध्यप्राप्त्या राजराष्ट्राभिबृद्धिर्भवति।

महानिमित्ते सम्प्राप्ते महासम्प्रोक्षणं कार्यम्। पूर्वं स्थापितबिम्बस्य न साधारणकर्मणा पुनःस्थापनं शक्यम्। अतो महासम्प्रोक्षणं कार्यम्। महासम्प्रोक्षणविधेर्नूतनस्थापनस्य च स्वल्पो भेदः। तानि च महानिमित्तानि यथा - देवागारे विप्रादिमरणम्। गर्दभाश्व-गजादिनाशः। चण्डालादीनां मरणम्। बिम्बस्य चण्डालादिस्पर्शः। विमानेऽशनिपातादि। उल्कापातपांसुवर्षभूकम्पादि। आलयस्य नवीकरणम्। दुर्भिक्षराष्ट्रक्षोभ परराजाद्युपद्रवाः। बिम्बस्य चिरमन्यालये स्थितिः। त्रिरात्रमतिक्रम्य ग्रामान्तरे स्थितिः। कुण्डगोलक-सूताद्यैरर्चनम्। अन्यानि अनुक्तानि दुरितान्यद्भुतानि च।

महासम्प्रोक्षणप्रकारो यथा- जलाधिवासरहितं नेत्रोन्मीलनवर्जितं च सर्वं प्रतिष्ठोक्तविधानेन कार्यम्। नेत्रयोस्तेजने दष्टिदोषे च जलाधिवासनमक्ष्णोरुन्मीलनं च कर्तव्यम्। जङ्गमप्रतिमानां सर्वासामधिवासनं कार्यम्। आचार्यः स्नात्वा सहस्रं गायत्रीं द्वादशसूक्तानि च जप्त्वा पुण्याहं वाचयेत्। वास्तुहोमानन्तरं पर्यग्निपञ्चगव्याभ्यां सर्वत्र संशोध्य पञ्चविंशतिकलशान् जलपूर्णान् संस्थाप्य नवरत्नानि क्षिप्त्वा नवमूर्तिक्रमेण मन्त्रेणावाहयेत्। देवस्य सहस्रकलशस्नपनं कृत्वा औत्सवं बिम्बं शयने शाययेत्। ध्रुवमात्रं यदि स्यात् तर्हि कूर्चाधिवासं कुर्यात्। पञ्चसूक्तं व्यापकत्रयमन्त्रं विष्णुगायत्रीं च सभ्याग्नौ जुहुयात्। पौण्डरीकाग्नौ पञ्चसूक्तं धात्रादिमन्त्रं पञ्चवारुणं महाशान्तिमन्त्रांश्च

त्रिरावर्त्य जुहुयात्। गार्हपत्यादिकुण्डेष्वपि प्रतिष्ठोक्तविधानतः तत्तद्देवत्यहोमं ऋत्विग्भिः कारयेत्। कुम्भान् कूर्चेन स्पृष्ट्वा आत्मसूक्तं पञ्चसूक्तं स्वस्तिसूक्तं दौर्गं रात्रिमेकाक्षर-मष्टदिक्पालसूक्तानि पञ्चशान्तिमन्त्रांश्च जप्त्वा सभ्याग्नौ यद्देवाद्यैः कूष्माण्डैः सर्वदैवत्यैश्च मन्त्रैर्जुहुयात्। पौण्डरीकाग्नौ विष्णुगायत्र्या पारमात्मिकमन्त्रैरीङ्काराद्यैश्च जुहुयात्। नृत्तगीतादिभिर्वाद्यैश्च रात्रिशेषं नयेत्। प्रातःकाले कलशैः पञ्चसूक्तैर्देवेशं संस्नाप्यालङ्कृत्य मुहूर्ते प्राप्ते कुम्भमादाय स्वस्तिसूक्तं जपन् ग्राममालयं वा प्रदक्षिणीकृत्य देवाग्रतो धान्यपीठे न्यस्य कूर्चेन बिम्बं प्रोक्षयेत्। महाहविर्निवेदयेत्। सहस्रं ब्राह्मणानां भोजयेत्। एवं यो भक्त्या विष्णोः सम्प्रोक्षणं कुर्यात् स प्रतिष्ठाफलमासाद्य विष्णुलोकं गच्छेत्।

## १२. पवित्रारोपणम्

सर्वयज्ञफलप्रदं सर्वदोषोपशमनं च पवित्रारोपणम्। तेन विना कृता पूजा निष्फला राजराष्ट्रविनाशाय च भवति। वर्षे वर्षे तत् कर्तव्यम्। संवत्सरपूजाफलं तेन लभ्यते।

**पवित्रारोपणकालः**

आषाढश्रावणभाद्रपदाश्वयुजमार्गशिरमासेषु सिते पक्षे द्वादश्यां श्रवणनक्षत्रे पवित्रारोपणं प्रशस्तम्। रवौ तुलागते तु निषिद्धम्। ज्येष्ठादि मार्गशीर्षान्तं प्रशस्तमिति केचन। षट्स्वपि दक्षिणायनमासेषु विष्णुपञ्चदिने, श्रावणे कृष्णपक्षद्वादश्यां च विष्णोः प्रशस्तम्। कृष्णाष्टमीचतुर्दश्योः शम्भोः। द्वादश्यां भास्करस्य। षष्ठ्यां स्कन्दस्य। कार्तिके नवम्यां कृत्तिकासु च दुर्गायाः। शुक्ले कृष्णे वा पक्षे पञ्चमीतिथौ उत्तरफल्गुन्योः श्रीदेव्याः।

तिथिषु प्रतिपदग्नेः प्रशस्ता। द्वितीया श्रीदेव्याः। तृतीया भगस्य। चतुर्थी यमस्य। पञ्चमी सोमस्य। षष्ठी गुहस्य। सप्तमी भास्करस्य। अष्टमी दुर्गायाः। नवमी मातृणाम्। दशमी वायोः। एकादशी ऋषीणाम्। द्वादशी विष्णोः। त्रयोदशी शङ्करस्य। चतुर्दशी ब्रह्मणः। पौर्णमासी विष्णोः।

**पवित्रद्रव्यम्**

पवित्रसूत्रं पद्मक्षौमसुवर्णैः कृतमुत्तमम्। रौप्यं मध्यमम्। अधमं सुमङ्गलीभिः कन्याभिर्वा निर्मितं तदलाभे पण्यविक्रयिणः प्राप्तं कार्पासम्।

**पवित्रकल्पनम्**

साधुशीलया ब्राह्मण्या कन्यया वा कृतं केशादिवर्जितं नीलरक्तादिवर्णरहितं अस्थूलमकृशं सर्वतः समं गृहीत्वा गायत्र्या त्रिगुणीकृत्य आपोहिष्ठादिभिः पञ्चगव्येन प्रोक्ष्य दर्भेषु निधाय गायत्रीं जप्त्वा पवित्राणि कल्पयेत्। तत्रोत्तमं पवित्रमष्टोत्तरशतसूत्रैः कृतं ग्रीवापृष्ठमारभ्य बाह्वन्तं भवेत्। मध्यमं चतुःपञ्चाशत्सूत्रनिर्मितमूर्वन्तं भवेत्। अधमं सप्तविंशतिसूत्रैः कृतं नाभ्यन्तं लम्बमानं भवेत्। अष्टोत्तरसहस्रतन्तुभिस्तु बिम्बालम्बप्रमाणा वनमाला अङ्गुष्ठप्रमाणग्रन्थियुता विष्णोः परमप्रिया भवेन्। छन्नगुल्फतला सैव ब्रह्मसूत्रमुच्यते।

इन्द्रादिलोकपालाः श्रीः सरस्वती भास्करः सोमादयः दुर्गा ऋषय इत्यादीनामपि सप्तविंशतिसूत्रैः पवित्रं कुर्यात्। षट्त्रिंशच्चतुर्विंशतिद्वादशग्रन्थियुतं पवित्रं क्रमात् उत्तममध्यमाधमसंज्ञकं भवति। ग्रन्थिश्चोत्तमोऽङ्गुष्ठप्रमाणकः। मध्यमस्तदर्धप्रमाणकः' कनिष्ठस्तु अनामिकामध्यपर्वप्रमाणकः।

परिवारदेवानामाचार्यादीनां च पवित्रमष्टग्रन्थियुतं भवेत्। आचार्यादि॰वित्रं द्वादशग्रन्थियुतं वा भवेत्।

**उपवीतकल्पनम्**

उपवीतं त्रिगुणीकृतेन सूत्रेण विष्णोः सप्तविंशतिग्रन्थि, यजमानाचार्यशिष्य-वह्निकुण्डकुम्भानामष्टग्रन्थि, परिवाराणां च द्वादशग्रन्थि कुर्यात्। कुङ्कुमोशीरचन्दन-सौवर्णराजतचूर्णैर्हरिद्राचूर्णैश्च ग्रन्थीनलङ्कृत्य धूपयेत्।

**पवित्रसंस्कारः**

दशम्यां प्रातः स्नात्वा देवालयं प्रविश्य प्रदक्षिणं कृत्वा पादौ प्रक्षाल्य चाचम्य

अन्तरे प्रविश्य विष्णुसूक्तेन पवित्राणि बध्नीयात्। हरिद्राकुङ्कुमगोरोचनसिन्दूरगैरिकाणि मिश्रीकृत्य वर्णं रचयेत्। तत्र कर्पूरकुङ्कुममिश्रणमुत्तमम्। गोरोचनसिन्दूरमिश्रणं मध्यमम्। हारिद्रगैरिकमिश्रणमधमम्। कुङ्कुमादीनामलाभे हारिद्रमात्रं ग्राह्यम्। एवं कृतेन वर्णेन पवित्रग्रन्थीनलङ्कृत्य उशीराद्यैः शुभैर्द्रव्यैः धूपयेत्।

**यागशालानिर्माणं शोधनं च**

आलयात् पुरतो मण्डपे प्रपायां वा यागशाला कार्या। तन्मध्ये द्विहस्तायतविस्तारां तालोच्छ्रयां वेदिं कृत्वा चतुर्द्वारेषु तोरणपूर्णकुम्भाङ्कुरदर्भमालादिभिरलङ्कृत्य वेद्याः पुरतोऽग्निकुण्डं कृत्वा गोमयेनोपलिप्य पञ्चवर्णैरलंकुर्यात्। बहून् दीपांश्चारोपयेत्। वास्तुहोमं कृत्वा पर्यग्निपञ्चगव्याभ्यां यागशालां शोधयेत्।

**अङ्कुरार्पणम्**

तद्दिनात् पूर्वं नवमे, सप्तमे, पञ्चमे, तृतीये वाऽङ्कुरानर्पयित्वा मुद्गान्नं निवेदयेत्। ततो द्रव्याण्याहरेत्। आचार्यादींश्च वरयेत्।

**भूमण्डलकल्पनम्**

पवित्रमण्डपमध्ये चतुर्दिशं चतुर्हस्तं त्रिहस्तं वा उपपीठं कृत्वा तन्मध्ये जम्बूद्वीपे हस्तमात्रो मेरुः, तत्तुरीयांशहीनाः परितोऽष्टौ कुलाचलाः, तत्परितः त्रिभागांशहीनाः षोडश पर्वताः, इन्द्रादिलोकपालानां नगर्यश्च कर्तव्याः। ततो बहिः सप्तसागराः शाकादयः षड्द्वीपाश्च। ततो बहिः समन्तात् परितो लोकालोकपर्वतश्च।

**सम्भारन्यासः**

पवित्राणि मेरोःशृङ्गोपरि विन्यसेत्। अष्टोपचारद्रव्याणि अष्टकुलाचलोपरि। अष्टमङ्गलानि चाष्टलोकपालनगरीषु। प्लोतवस्त्रोत्तरीयधात्वाभरणहविःपानीयादीनि चाष्टनगरीषु। पुरुषादिपवित्राणि प्रागादिषु कुलाचलेषु। कपिलादिपवित्राणि आग्नेयादिकुलाचलेषु। परिषदां पवित्राणि षोडशपर्वतेषु। एवं सर्वत्र नववस्त्रोपरि न्यसेत्। सागरेषु च सर्वेषु तत्तद्द्रव्यसुपूरितान् सूत्रवेष्टितान् प्रत्येकमष्टौ कलशान् विन्यसेत्।

बहिर्द्वीपेषु तदुपस्नानकलशान् विन्यसेत्। लोकालोकाचलाद् बहिः प्राच्यां वीशं, दक्षिणे चक्रखड्गौ पश्चिमे शरम् उत्तरे पङ्क्तीशम्, ईशान्यादिषु शङ्खखेटकशार्ङ्गकौमोदकी छत्रचामरयुग्मदर्पणध्वजांश्च संन्यसेत्।

**प्रार्थनम्**

विशेषेणार्चनं कृत्वा कार्यं निरूप्य नमस्कृत्य कृताञ्जलिस्तिष्ठन् भगवतो बलेनेत्याद्युक्त्वा अतो देवा इतीरयन् एतत् कर्म क्षमस्वेत्यनुमाननं याचयेत्। एकादश्युपवासं संकल्प्य देवसन्निधौ प्रार्थनासूक्तमुच्चारयेत्।

**आघारहोमः**

यागशालायाश्चतुर्षु द्वारदेशेषु चतुर्वेदपारायणमाचरेत्। पुण्याहं कृत्वा पौण्डरीके सभ्ये वाऽग्निकुण्डे औपासनाग्निकुण्डे वा आघारं जुहुयात्।

**प्रतिसरबन्धः**

वेद्याः पश्चिमे भागे धान्यपीठे दर्भानास्तीर्य पवित्राणि न्यसेत्। पुण्याहं कृत्वा पवित्रेषु पञ्चमूर्तीरावाह्य समभ्यर्च्य, प्रणम्य, प्रतिसरमन्त्रं जप्त्वा धूपदीपादि दर्शयेत्। देवं पाद्यादिभिरभ्यर्च्य स्वस्तिसूक्तेन देवस्य श्रीभूम्योश्च प्रतिसरं बध्नीयात्। आचार्यस्य ऋत्विजां च तथा।

**शय्याधिवासः**

शय्यावेद्यां धान्यपीठे दर्भोपरि पञ्चशयनानि वासांसि वाऽऽस्तीर्य धूपदीपाष्ट-मङ्गलपञ्चायुधानि विन्यस्य वाद्यघोषघण्टानादपूर्वकं शाकुनसूक्तेन पवित्रं शयनमारोपयेत्। नववस्त्रैः प्रच्छाद्य सूत्रं स्पृष्ट्वा पञ्चदश, दश, सप्त, पञ्च वा सूक्तानि, अशक्तौ वैष्णवं वा जपेत्।

वैष्णवं विष्णुसूक्तं पुरुषसूक्तं श्रीसूक्तं भूसूक्तं चेति पञ्चसूक्तम्। विष्णुसूक्तं, पुरुषसूक्तं, श्रीभूसूक्ते, वैष्णवम्, एकाक्षरादिसूक्तं विष्णुगायत्री चेति सप्तसूक्तम्। विष्णुसूक्तपुरुषसूक्तश्रीभूसूक्तैः सह एकाक्षरादिसूक्तं पञ्चसूक्तमिति केचित्। रुद्रसूक्तं

ध्रुवसूक्तं दुर्गासूक्तं रात्रिसूक्तं सारस्वतसूक्तं विश्वजित्सूक्तं सहस्रशीर्षमिति सूक्तमघमर्षण-सूक्तं गोदानसूक्तमात्मसूक्तं चेति दशसूक्तम्। दशसूक्तमेव पञ्चसूक्तेन सह पञ्चदशसूक्तमित्युच्यते।

**परिवारदेवार्चनम्**

पवित्रोपरि सर्वरक्षाकरं चक्रं पूजयेत्। तस्य परितः आवारणत्रयदेवानां प्रादक्षिण्यक्रमेणार्चनं कार्यम्। धान्यपीठे शान्तिगरुडचक्रशङ्खन्यक्षविवस्वन्मित्रमहीधरादि-देवानां कूर्चान्निधाय पाद्याद्यर्घ्यान्तमर्चयित्वा मुद्गान्नकृसरैर्बलिं दद्यात्। स्वपादौ प्रक्षाल्य कर्णे दक्षिणे स्पृशेत्।

**पवित्रारोपणप्रयोगः**

देवेशस्य स्नानासने कलशैः स्नपनं वस्त्रालङ्कारादिकं हविर्निवेदनं च कृत्वा यागशालायां वैष्णवविष्णुसूक्तश्रीभूसूक्तादिभिर्हुत्वा तत्कालं वाचयेत्। प्रतिसरं विसर्जयेत्। अधिवासपवित्रमुत्थाप्य ध्वजछत्रचामरादिभिः नृत्तगेयादिभिःसह तोयधारापुरःसरमालयं प्रदक्षिणीकृत्य देवस्य पुरतो धान्यपीठे स्थापयेत्। अतोदेवादिमन्त्रेण कनिष्ठं पवित्रमारोपयेत्। विष्णोः कर्माणीति मध्यमम्। विष्णोर्नुकमित्युत्तमम्। पुरुषसूक्तेन वनमालां चारोपयेत्। पश्चात् देव्यादीनां कौतुकोत्सवस्नपनबलिबेराणां प्रादुर्भावानां परिषद्देवानां तथाऽग्निकुण्डस्य च सूत्रमारोपयेत्। आलयं मण्डपं च सूत्रेणावेष्टयेत्। पञ्चहविः प्रभूतं निवेद्य बलिमाराध्य बलिभ्रमणं कृत्वा बलिं दद्यात्। यजमानस्य सूत्रं दद्यात्।

श्रीसूक्तभूसूक्तविष्णुसूक्तपुरुषसूक्तानि हुत्वा ईङ्कारीदीन्यपि जुहुयात्। आचार्यादिदक्षणां दत्वा वेदघोषैर्नृत्तवाद्यस्तोत्रध्वनिभिश्च रात्रिशेषं नयेत्। पूर्ववत् प्रतिसरं बध्वा देवं शाययेत्।

### परदिनकृत्यम्

परदिने प्रभाते निर्माल्यं शोधयित्वा नित्यपूजां कुर्यात्। पश्चात् नित्यपूजोक्तमार्गेण नैमित्तिकमाचरेत्। स्नानकाले सर्वेषां सूत्रमादाय स्नानान्ते पुनरारोपयेत्। नित्यहोमादि चाचरेत्। एवं नवाहं सप्ताहं पञ्चाहं त्र्यहमेकाहं वा विशेषतोऽभ्यर्च्य पवित्रं विसृजेत्। सोदकं दक्षिणां ददेत्।

### गृहार्चायां होमे विशेषः

गृहार्चायां पवित्रारोपणहोमे सर्वदैवत्यं पारमात्मिकम् ईकारादींश्च विना सर्वमौपासनाग्नौ जुहुयात्। ब्रह्मादिदेवानां तु तत्तन्मन्त्रैर्हुत्वा जयादीन् कूश्माण्डान् पञ्चवारुणं मिन्दाहुती विच्छिन्नं व्याहृतीश्च जुहुयात्। अन्यत् सर्वं पूर्ववत्।

### पवित्रारोपणफलम्

एवं पवित्रारोपणे कृते संवत्सरार्चनफलं लब्ध्वा सायुज्यमाप्नुयात्। देवदेवोपयुक्तं तत् सूत्रं यो धारयति सोऽश्वमेधायुतफलभाग् भवति। तस्य कायगतं पापं तत्क्षणादेव नश्यति।

### पवित्रविसर्जनकालः

प्रत्यब्दमपि अब्दान्तं पवित्रारोपणमुत्तमोत्तमम्। तदर्धं मध्यमम्। मासं मध्यमम्। अर्धमासं वा। विशेषेण पूजा तु पञ्चाहं कृता उत्तमा। त्रिरात्रकृता मध्यमा। एकाहकृता त्वधमा। तत्र निवेदितमन्नाद्यं सर्ववर्णिनां दापयेत्।

भद्रमण्डलोपरि कुम्भं स्थापयित्वा उभयत्र पवित्रमारोपयेत्। मण्डलं कुम्भश्च विष्णुदैवत्यौ। अतो मण्डले तद्विष्णोरिति, कुम्भे च इदं विष्णुरिति सूत्रमारोपयेत्। मण्डले पूर्वादिचतुर्दिक्षु क्रमात् वासुदेव बलभद्र प्रद्युम्नानिरुद्धाः पूज्याः। तद्बाह्यतोऽष्टदिक्षु इन्द्रादयः पूज्याः। मण्डलगतस्य श्वेतवर्णस्य विष्णुः पीतस्य पुरुषः, कृष्णस्य सत्यः, रक्तस्याच्युतः, कुङ्कुमस्यानिरुद्धश्चाधिदेवाः। तत्तन्नाम्नाभिस्तेऽर्चनीयाः। एवं

मण्डलमर्चयित्वा मण्डलमध्ये कुम्भमपि अष्टविग्रहैरर्चयित्वा सूत्रमारोपयेत्। प्रभूतं च निवेदयेत्। सूत्रविसर्जनदिवसपर्यन्तमेवं कृत्वा ततः परं पूजां होमं पुण्याहं च कृत्वा सूत्राणि सर्वाणि विसर्जयेत्। निर्माल्यं शोधयेत्। विष्वक्सेनमाराध्य आचार्याय सोदकं दक्षिणां दद्यात्। ब्राह्मणभोजनं च कारयेत्।

**आशौचादौ नियमाः**

अङ्कुरार्पणाद् ऊर्ध्वमन्तिमदिवसपर्यन्तं सूतकं मृतकं वा यदि संभवेत् तदा मार्जनेनैव शुद्धिः। नवभिः कलशैर्देवदेवं संस्नाप्य नित्यपूजोक्तमार्गेण विशेषेण पूजयेत्। वेददूषकपाषण्डपापरोगादिभिः अन्त्यजैः श्वकाकादिभिश्च स्पर्शने मण्डपादीनि शोधयेत्। मृद्भाण्डादीनि त्यक्त्वा नवान्यन्यानि गृह्णीयात्। कांस्यादिपात्राणि यथार्हं शोधयेत्। मण्डपादिशुध्यर्थं वास्तुहोमपर्यग्निपञ्चगव्यपुण्याहमहाशान्तिहोमांश्च कृत्वा ब्राह्मणान् भोजयेत्।

**आगमसङ्करप्रतिषेधः**

वैखानसागमेन कर्तुमशक्तश्चेत् बोधायनक्रमो ग्राह्यः। यतो द्वयोरन्तरं किञ्चिदेव भवति। आलयार्चायां गृहार्चायां चोभयत्राप्येवं कुर्यात्। अन्यागमसङ्करस्तु प्रतिषिद्धः। यतस्तेन राजा राष्ट्रं च विनश्यति।

## १३. द्वात्रिंशद् अपचाराः

यानैर्वा पादुकामधिरुह्य वा देवालयगमनं, देवोत्सवाद्यसेवनमित्यादयो द्वात्रिंशदपचारा मुख्याः। सन्ति चानन्ता अन्येऽपचाराः। ज्ञात्वाऽज्ञात्वा वा कृतेषु एष्वपचारेषु क्षमस्वेति देवप्रार्थनैका निरुपद्रवं प्रायश्चित्तम्। प्रायश्चित्तमकुर्वतां रौरवादयो दारुणा द्वात्रिंशन्नारकाः कीर्त्यन्ते।

महापातकिनः कल्पकालं नरकाग्निषु तिष्ठन्ति। पातकिनो ब्रह्मणो दिनम्। उपपातकिनो मन्वन्तरकालम्। अन्ये चतुर्युगं तदर्धं वा। यावन्तो जन्तवः स्वर्गभूपातालेषु सर्वतः सन्ति तावन्त एव सप्तमतलादधस्तनेषु नरकाग्निष्वपि सन्ति। यतो ह्यष्टा-

विंशतिर्नरककोटयः सन्ति। हरिनिन्दां ये शृण्वन्ति तेषां कर्णो नरके यमदूतैः द्रुतताम्रत्रपुसीसादिभिः प्रपूर्यते। देवगृहं गत्वा परदारान् ये पश्यन्ति, ये वा गुरुजनेषु क्रूरदृष्टिं पातयन्ति, तेषां चक्षुरग्निवर्णाभिः सूचीभिर्विध्यते। क्षारादिकैः सर्वं शरीर-मनुलिप्यते। सुतप्तेन तैलेन सिच्यते। धने सत्यपि ये दानं न यच्छन्ति तेषां स्वमांसमुत्कृष्य तिलमात्रप्रमाणतः खादितुं दीयते। सूच्यग्रेण च शोणितं संस्राव्य पातुं दीयते। एवमादिचित्रहिंसास्वपि पापिष्ठा यावत् पापस्य न संक्षयस्तावन्नैव म्रियन्ते। पापक्षयानन्तरं पापशेषेण भुवमासाद्य कृमिकीटादिपापयोनिषु जायन्ते। ततः क्रमेण गोयोनिमासाद्य मनुष्येषु दारिद्र्यरोगादिपापचिह्नैः संयुता जायन्ते। अतोऽपचारा यत्नतः परिहर्तव्याः।

**देवाभिगमनम्**

स्नातो धृतोर्ध्वपुण्ड्रो हरिमुद्दिश्य फलपुष्पहिरण्यादिहस्तः पादचार्येव देवालयं गच्छेत्। वाहनमारुह्य पादुकामधिरुह्य वा गन्तुः पुण्यफलं न स्यात्। अकस्माद् गमनेऽपि वाहनादवरुह्य पादुकाकञ्चुकादि विमुच्य वार्युपस्पृश्य च प्रयतो भूत्वा मन्दिरं प्रविशेत्।

**देवोत्सवसेवनम्**

देवेशस्योत्सवो ग्रामे वा पर्वताग्रे वा दुर्गमारण्येषु वा प्रचलति चेत् तत्र भक्त्या नरो गच्छेत्। पुत्रमित्रपरिजनैः सहैव गत्वोत्सवमादरेण सेवेत। गन्तुकामोऽपि स्वात्मनोऽर्हणादिकमत्र प्रतीक्षते चेत् तस्य पूर्वपुण्यं तत्क्षणादेव नश्यति। गमनोद्यतमन्यं वारयेच्चेत् पतत्येव। विष्णुपञ्चदिनादिषूपोषितो हठादुत्सवं श्रुत्वा तत्क्षणान्न गच्छति चेत् तस्य पापं महद् भवेत्। उत्सवे वर्तमाने यः खट्वामास्थाय शेते स नारकीर्यातना व्रजेत्।

**देवप्रणामः**

देवेशाभिमुखं गत्वा प्रणाममकुर्वतो नास्ति प्रायश्चित्तम्। एकहस्तप्रणामस्तु

विशेषतः परिहर्तव्यः। एकहस्तेन यः प्रणमति, तं च यः प्रत्यभिवादयेत् तावुभावपि नरकं यातः।

**देवप्रदक्षिणम्**

देवस्य पुरस्तादात्मप्रदक्षिणं न कुर्यात्। पुरतो देवे विद्यमाने न ह्यन्यस्य प्रदक्षिणं युक्तम्। मानसार्चने भवतु मानसं प्रदक्षिणम्। हृदये स्थितो निष्कलोऽन्तर्याम्येव सकलो भूत्वा बिम्बे यदा सन्निधापितस्तदा सकलपूजायां नात्मप्रदक्षिणं कार्यम्।

**देवगृहे उच्छिष्टाशुचि प्रवेशनिषेधः**

विण्मूत्रं कृत्वा शौचं नाचरन्नुच्छिष्टो भवति। सोऽनर्हः सर्वकर्मसु। अतस्तेन देवमन्दिरं न प्रवेष्टव्यम्। नखरोमादीनि मन्दिरे न क्षिपेत्। ताम्बूलं चर्वितं न प्रक्षिपेत्। मूत्रं पुरीषं वा न कुर्यात्। रेतोविसर्गं कामादकामतो वा कृत्वाऽस्नातो न प्रविशेत्। तैलाभ्यक्तोऽपि तथा। शवस्य भरणमनुगमनं वा कृत्वा, परगृहे श्राद्धान्नं भुक्त्वा, यज्ञसूत्रमुपवीतमकृत्वा, अकच्छः पुच्छकच्छः नग्नः कौपीनधृग्वा ताम्बूलं खादन् वा उपहारादि भक्षयन् वा न देवमन्दिरं प्रविशेत्। देवसन्निधौ सेवार्थमागतान् श्वपचान् पतितान् वा स्पृष्ट्वा न स्नायात्। देवोत्सवेऽस्पृश्यस्पर्शशङ्कया यः स्नाति तस्य स्वर्गस्थाः पितरो नरके पतन्ति। जातकं मृतकं वाऽऽशौचं प्राप्तो न देवमन्दिरं प्रविशेत्। न देवं पूजयेत्। नोपहारानर्पयेत्। न तीर्थादीनपि सेवेत। नान्यं प्रणमेत्। न वा प्रत्यभिवादयेत्।

**देवगृहे शयननिषेधः**

देवगृहे पादौ प्रसार्य भूमौ शयानः, प्राकारे वा तल्पमधितिष्ठन् नरः सूकरयोनिं सर्पयोनिं वा लभते। स्त्रिया सह शयानो द्वादशजन्मसु षण्ढो जायते।

**देवगृहे योगासननिषेधः**

स्वस्तिकसर्वतोभद्रसिद्धादियोगासनानि चतुरशीतिः शास्त्रसिद्धानि सन्ति। तथाऽन्यानि च। तान्यास्थाय देवाग्रे नोपतिष्ठेत।

**देवगृहे भोजननिषेधः**

गर्भागारेऽन्तरालेऽर्धमण्डपे महामण्डपे चान्नभोजनं न कार्यम्। अन्नं पात्रे विनिक्षिप्यापोऽशनपूर्वं यद् भुज्यते तस्यैव भोजनस्यायं निषेधः। न तु आपोशनं विनाऽञ्जलौ गृहीतप्रसादमात्रभोजनस्य ।

**अन्नविक्रयण निषेधः**

अन्नमुपहारादि च देवगृहे ये विक्रीणते ते घोरं नरकं गच्छन्ति। ये च क्षुधिता जनाः तद् गृहीत्वा भुञ्जते तेऽपि अभक्ष्यभोजनदोषेण युक्ता भवन्ति।

**मुधाभाषणादि निषेधः**

देवगृहं प्रविश्य मुहूर्तं क्षणं वा देवमविचिन्त्य उच्चैर्व्यर्थं सम्भाषणं कुर्वन् सिद्धमन्नं परित्यज्य भिक्षामटन्निव दुर्जन उच्यते। लोकयात्रार्थं देहयात्रार्थं वा सन्त्यनेके प्रदेशाः समयाश्च। हरिनामवर्जिताः सर्वेऽपि ते समया मुधा मिथ्या च। देवगृहे ते निषिद्धाः। न हि देवस्य पुरतः क्वचिदप्यनृतं वदेत्। सत्यस्वरूपो भगवान्। सत्यं तस्मै न गूहयेत्। ये मूढा अनृतं ब्रुवते शपथानि च कुर्वते, विशेषेण देवागारे, ते सान्वयाः प्रणश्यन्ति। देवागारे प्रवर्तमानाः पुण्याख्यानकथा गीतवादित्रनृत्तादींश्च परुषवचनैर्ये लोपयन्ति ते नरकं यान्ति।

**देशभाषा निषेधः**

देवगृहे देवस्य पुरतो देवभाषां परित्यज्य देशभाषासु यो नरः स्तुवीत तस्य महान् दोषो भवेत्। पूजाफलं न भवेत्।

**अवैष्णवशास्त्रालापनिषेधः**

यत्र विष्णुमाहात्म्यं न प्रपञ्च्यते तानि शास्त्राणि, ते च वादाः, प्रतिवादाश्च केवलं जीविका, न पुनर्मोक्षसाधनानि भवन्ति। देवगृहं गत्वा तादृशैः शास्त्रार्थैः मुहूर्तमपि कालं भक्तो न क्षपयेत्। अन्यथा सा देवस्य विमानना भवेत्। यतो हि विज्ञानघनविग्रहो

देवो मानुषाणां विज्ञानाय महान्ति शास्त्राणि सृष्ट्वा तदन्तः प्रविश्य वाच्यवाचकभेदेन स्थित्वा भक्तान् सदोपकुरुते। तन्महिमगन्धविधुरं वाचनं पाठनं लेखनादि च तस्य गेहे कुर्वन् नरोऽक्षरद्रोही भवेत्। स महान् व्यतिक्रमः।

**देवगृहे रोदनादिनिषेधः**

नारी वा पुरुषो वा देवगृहं गत्वा न रोदेत्। नाश्रु पातयेत्। दुःखितो न स्तुवीत। यतो हि तन्मानसं मलम्। मलिनेन मनसा विष्णोः पदे परमे न सेवा कार्या। यावन्ति चाश्रूणि रुदतां देवमन्दिरे पतेयुः तावन्ति वर्षसहस्राणि नरके वासो नियतो भवेत्।

**देवगृहे हिंसानिषेधः**

न तत् परस्य संदध्यात् प्रतिकूलं यदात्मनः। एष चैव हि सङ्ग्रहेण धर्मो नाम। अतोऽहिंसालक्षणो धर्मो वेदप्रणिहितः। अभयं यो ददाति सर्वभूतेभ्यो दयापरः तस्मै अभयं सर्वभूतानि ददति। अतो विशेषेण देवगृहे हिंसा परिहर्तव्या।

**उपवासव्रतम्**

त्रिरात्रं पञ्चरात्रं सप्तरात्रं वा धान्यान्यप्यहिंसन् य उपवासपरो भवति नरः स यावतो धान्यजीवान् नाश्नाति तावद्भिः पुण्यैर्युज्यते। किञ्चाहारस्य वियोगेन शरीरं परितप्यते। तेन चेन्द्रियाणि स्ववशे तिष्ठन्ति। ततो नरः सर्वमवाप्नोति, मनसा यद् यद् इच्छति। व्रतोपवासेन हि प्रीतो भगवान् तस्मै सर्वान् कामान् प्रयच्छति। अत एकादश्यां निराहारो हरिं संपूज्य, श्रीतुलसीयुतं तत्पादतीर्थं प्राश्नीयात्। अन्यथा स रौरवं नरकं व्रजेत्।

**कामक्रोधादिवर्जनम्**

देवगृहं गत्वा नरो न विवदेत। न तत् स्थानं विवादस्य। किञ्च रागादिरहितं हृदयम्, अनृतादिरहितं वचनं, हिंसादिरहितं च शरीरमिति त्रयं ननु केशवाराधानायालम्।

तत्र निर्मलहृदयानां न दोषप्रसक्तिः। अन्यथाऽऽलिङ्ग्यते कान्ताऽन्यथा च दुहिता। योषिति मतिरन्यथा कामुकस्यान्यथा च यतेः। लालेति यतिरुद्विजते, वक्त्रासव इति च कामुकः स्पृहयते। अतो विशुद्धैस्त्रिकरणैर्देवं सेवेत नरः। देवस्य पुरतो विवादं क्रोधजं परिवर्जयेत्। क्रुद्धः पापं न कुर्यात् कः ? क्रुद्धो हन्याद् गुरूनपि। समुत्पतितं क्रोधं क्षमया शमयेत्, अग्निमिवाम्भसा। परापवादं न ब्रूयात्। न मन्युं च महतामुत्पादयेत्, विशेषेण देवसन्निधौ।

**निग्रहानुग्रहनिषेधः**

भगवानेव सर्वज्ञः सर्वशक्तः। अहं तु तत्कृते सर्गे यःकश्चनोऽकिञ्चन इति संचिन्त्य भगवत्सन्निधौ परेषु निग्रहानुग्रहशक्ततामात्मनो न प्रदर्शयेत्। अन्यथा सोऽहंकारी घोरं नरकं गच्छेत्।

**स्त्रीषु साकूतभाषणादि निषेधः**

पुंसां स्त्रीष्वतिसङ्गिनामायुर्यशस्तपोहानिर्भवति। स्त्रीणामपि तथा पुरुषेष्वतिकामिनीनाम्। बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति। तस्माद् देवगृहे स्त्रीषु न मनः प्रहिणुयात्। न तासु साकूतं व्यवहरेत्। न परदारान् गच्छेत्। यावन्तो रोमकूपाः स्त्रीणां गात्रेषु स्युस्तावद् वर्षसहस्राणि नरके वासः परस्त्रीसङ्गिनामिति मन्तव्यम्। किञ्चाश्लीलभाषणेन भगवद्गेहे भक्तानामुद्वेजनमपि न कार्यम्। अन्यथा शतजन्मसु स चण्डालतां यायात्।

**व्याधितानां देवगृहे प्रवेशनिषेधः**

देवगृहेऽपानगन्धविसर्गो न कार्यः। अन्यथा वेदान्तपारगमपि पुरुषं स पातयेत्। वायुनिरोधे व्याधिकोपश्चेद् व्याधितो नार्हति देवागारं प्रवेष्टुम्। एवमेव कुष्ठादिसाङ्क्रामिक पापरोगिणोऽपि न प्रवेष्टुमर्हन्ति देवगृहम्।

### कञ्चुकादिधारणनिषेधः

उपवीतवत् सम्यगुत्तरीयं कृत्वा मन्दिरं प्रविशेत्। न कञ्चुकी। नोष्णीषी। न वा कम्बलाद्यावृताङ्गः। अन्यथा चतुर्दशजन्मसु चण्डालः श्वित्री च जायते।

### परनिन्दनादिनिषेधः

विद्वत्सु त्वहङ्कारो वधान्न विशिष्यते। अतः परनिन्दा परमपुरुषस्यैव निन्दायां पर्यवस्यति। अतो देवाग्रे सा न कार्या। एवं परस्तुतिरपि न कार्या। यतो हि भगवानेव सर्वातिशयेन स्तुत्यः। तदग्रेऽन्यमधिकं पूजार्हं स्तुत्यं च मन्वानो विनश्यति।

### देवोपचारेषु शक्तिलोभनिषेधः

विशेषेणार्चने शक्तौ सत्यामपि गौणकल्पेन देवमर्चयति चेत् स उच्छास्त्रं प्रवर्तमानो न पुण्यभाग् भवति। यत आढ्यो दरिद्रो वा स्वशक्त्यनुसारेणार्चयन् देवं प्रीणयति इति शास्त्रेषूद्घोष्यते। अतो देवपूजायां शक्तिलोभो न कार्यः। अन्यथा पञ्चसु जन्मसु मार्जारतां याति।

### विष्णोरनिवेदितान्नभक्षणनिषेधः

विष्णोरनिवेदितमन्नं विषतुल्यम्। तद्भक्षणेन ब्रह्महत्यादोष आपतति। काले जातानि सस्यादीनि देवेशमभिगन्तुं स्वयं ध्यायन्ति यतन्ते च। तत्प्रातिकूल्यमाचरन् पुरुषो नरकभाग् भवति। ओषधयः सर्वा हि तं शपन्ति। अन्यदेवोच्छिष्टं विष्णोरर्पयन् सद्यश्चण्डालतां गच्छेत्। विष्णोरर्पितमन्योच्छिष्टेन मेलयन् पापी सहस्रजन्मसु श्वा भवति।

### देवं पृष्ठीकृत्यासननिषेधः

देवगृहं गत्वा देवाभिमुख एव स्यात्। न पृष्ठं दर्शयेत्। पार्श्वतश्चरन्नेव बहिर्गच्छेत्।

### देवगृहेऽन्यप्रणामनिषेधः

भगवानेव सर्वातिशयेन पूजार्हः प्रणामार्हश्च। तदग्रे नेतरान् प्रणमेत्। किन्तु

देवगृहं प्राप्तान् वैष्णवान् भगवत्प्रियान् आचार्यर्त्विक्पूजकपरिचारकान् पूजयेदेव। अन्यथा महान् दोषो भवेत्।

**देवगृहे स्वात्मसंमानन निषेधः**

अहंकारेण स्वात्मप्रशंसापरो नरः पतति। शतजन्मसु मृगयोनौ जायते। देवगृहे सेवार्थमागतानां वर्णानामानुपूर्व्यशो निर्दिष्टं स्थानमस्ति। कोऽपि तत् नोल्लङ्घयेत्। गर्भगृहे वैखानससूत्रिण एव प्रविशेयुः। अन्ये द्विजास्तु अन्तराले। तत्स्त्रियोऽपि तत्रैव। क्षत्रिया अर्धमण्डपे। शूद्रा महामण्डपे। म्लेच्छाश्च गोपुराद् बाह्यतः।

**देवनिन्दननिषेधः**

पुरुषोत्तममन्यदेवसमं मन्यमानश्चतुर्दशजन्मसु चण्डालतां याति। देवानपह्नुत्य तद् द्रव्यादि हरन् श्वादियोनिषु जायते। हरिकथायां कथ्यमानायामनादृत्य गच्छन्तो नरास्तोयहीने वने शून्यवृक्षतां, ततः सप्तसु जन्मसु चण्डालतां चाप्नुयुः।

**देवगृहाधिपत्ये दोषाः**

देवेषु गोषु विप्रेषु देवागारेषु चाधिपत्यं बहुदोषकारणम्। भूतिकामस्तु तन्नेच्छेत्। सेवार्थिनां सकाशाद् बलात्कारेण करं गृह्णानः सद्यः पतेत्। देवगृहे भगवतो नाम्ना दत्तमाभरणादि मूल्यवद् वस्तु विहाय, सर्वमन्यदर्चका एव गृह्णीयुः। न पुनरधिपतिस्तत्प्रतिबध्नीयात्। अधिकारगर्वेण देवागारमागत्याकाले सेवितुमिच्छति चेत् दुर्गतिं याति। अन्त्यार्चनावसाने कवाटबन्धनानन्तरं प्रत्यूषे पुनरुद्घाटनं यावद् भविष्यति तावन्नैव कोऽपि देवं सेवितुमिच्छेत्। सोऽकालः। तत्तत्काले मन्त्रतः कवाटबन्धनेऽपि सोऽकाल एव सेवायाः।

**क्षमामन्त्रः**

क्षमामन्त्रोऽयमशेषपापविनाशक्षम उच्यते। जानता स्ववशेन कृतस्त्वपराधः क्षमामन्त्रसहस्रजपेनापि न परिमार्ज्यते। 'अज्ञानात्प्रमादाद्वा जाग्रत्स्वप्नसुषुप्तिषु

स्नानजपयज्ञादि'कर्मकाले मया मम बन्धुभिरर्चकेन गायकनर्तकादिभिर्वा त्रिकरणकृतमपराधसहस्रं क्षमस्व। भगवन् देवदेव पुरुषोत्तम, प्रसीद। तव नित्यानपायिनी देवी माता रमाऽपि प्रसीदतु। युवयोः सर्वेषां सुराणां च प्रसादेनास्माभिरुपचारापदेशेन कृतः सर्वापराधः परिमृष्टोऽस्तु। स्वस्त्यस्त्वि'ति।

## १०. तत्त्वज्ञानप्रकरणम्

### परापरतत्त्वज्ञानम्

भगवत्पूजामार्गाश्चत्वारः। चरितं, क्रिया, ज्ञानं, योगश्चेति। तत्राद्यौ मार्गौ विस्तरेणोक्तौ। अन्त्यौ द्वाविह संक्षेपेणोच्येते।

ज्ञानमत्र तत्त्वज्ञानं विवक्षितम्। तस्य परब्रह्मणो विष्णोर्भाव एव तत्त्वम्। 'तत्त्वं नारायणः पर' इति श्रुतेः। विष्णोर्भावः स्वभावो निष्कलः सकलश्च भवतः। क्षीरे सर्पिरिव, तिले तैलमिव चान्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः। एवं विश्वव्यापनशीलत्वाद् विष्णुरिति निष्कलो भावो भगवतः। स एवान्तर्यामिरूपेण प्राणिनां हृदयाकाशे व्यवस्थितः। स एव च ध्यानेन काष्ठे मथितेऽग्निरिव प्रादुर्भवन् सकल इत्युच्यते।

विष्णोर्विभूतिः श्रीः। विष्णोः सङ्कल्पानुरूपा सा नित्यानन्दमयी चेतन-प्रकृतिरुच्यते। परमपुरुषश्च नारायणः। प्रकृतिपुरुषावेतावनादी। ताभ्यां लोकप्रवृत्तिः। अचेतना प्रकृतिः पञ्चभूतमनोबुध्यहंकाररूपैरष्टधा भिन्ना। तया प्रकृत्या सदा संश्लिष्टा जीवात्मानोऽनाद्यविद्यासञ्चितपुण्यपापफलभोगाय बहुविधेषु शरीरेषु संसरन्ति।

### विष्णुलोकाः

विष्णोः सकाशाद्धिरण्मयमण्डमभवत्। तदन्तर्गतानां सर्वेषां लोकानामुपरि विष्णुलोका आमोदः सम्मोदः प्रमोदो वैकुण्ठश्चेति। तेषु दिव्यलोकेषु सहस्रादित्यसङ्काशे

द्वादशतले हैमे विमाने ब्रह्मदिदेवर्षिगणपरिवृतो देवीभूषणायुधैश्च सहितो विष्णु - महाविष्णु-सदाविष्णु-सर्वव्यापिनारायणरूपैरासीनः परमात्मा विलसति।

**जीवात्मनां देहोत्पत्तिप्रकारः**

विष्णोर्नाभिकमलादुद्भूतो ब्रह्मा जगत् सर्वं सृजति। तत्र प्राणिशरीरोत्पत्तिर्यथा ओषधीभ्योऽन्नम्। अन्नाच्च शुक्लशोणितमेलनेन स्त्रीगर्भाशये नवमासपर्यन्तवृद्ध्या शरीरं प्राणिनामुत्पद्यते। अत एतत् पाञ्चभौतिकम्। तत्र श्रोत्रादिपञ्चज्ञानेन्द्रियाणि शब्दस्पर्शरूपरसगन्धग्राहकाणि भवन्ति। तथा वाक्पाणिपादपायूपस्थाख्यानि पञ्च कर्मेन्द्रियाण्यपि भवन्ति, वचनादानगमनविसर्गानन्दाख्यपञ्चकर्मसाधनानि। तथा मनोबुद्ध्यहंकारचित्ताख्यानि चत्वार्यन्तःकरणानि च भवन्ति। संकल्पविकल्पौ, अध्यवसायः, अनात्मन्यात्मावबोधनम्, अनुभूतार्थस्मरणं चेति चत्वारि तेषां कार्याणि। गलान्तरं वदनं हृदयं नाभिश्चेति चत्वारि तेषां स्थानानि।

**सात्विकादिगुणाः**

सात्विकराजसतामसेति त्रिविधा गुणाः प्राणिषु दृश्यन्ते। अहिंसासत्यास्तेय-ब्रह्मचर्याक्रोधगुरुशुश्रूषाशौचसन्तोषास्तिक्यार्जवानि सात्विकगुणाः। अहं कर्ता भोक्तेत्याद्यभिमानो राजसगुणः। निद्रालस्यमोहादयस्तामसा गुणाः। ऊर्ध्वं गच्छन्ति सात्विकाः। मध्ये तिष्ठन्ति राजसाः। अधो गच्छन्ति तामसाः।

**जाग्रदाद्यवस्थाः**

जागत्स्वप्नसुषप्तितुर्येति चतस्रोऽवस्थाः। सर्वेन्द्रियान्तःकरणयुक्ता जाग्रदवस्था। अन्तःकरणमात्रयुक्ता स्वप्नावस्था। चित्तरूपेणैकेनापि करणेनायुक्ता सुषुप्तिः। अनाद्यविद्यारहितकेवलजीवावस्थितिस्तुर्यावस्था।

**देहे भगवन्मूर्तीनां ध्यानम्**

स्वाङ्गुलीभिः षण्णवत्यङ्गुलो देहः। द्वादशाङ्गुलोन्नतः प्राणवायुः। तत्र मूलाधारे त्रिकोणे वह्निमण्डले जाठराग्निः यज्ञमूर्तिर्द्विशीर्षश्चतुःशृङ्गः सप्तहस्तस्त्रिपादः स्वाहास्वधाभ्यां

पार्श्वयोः सहितः सर्वदैवैश्च सह तिष्ठति। तदूर्ध्वे नवाङ्गुले कन्दस्थाने द्वादशारे कालचक्रे पुण्यपापप्रचोदितः तन्तुपञ्जरमध्यस्थलूतिकाभः प्राणारूढो जीवो भ्रमति। तस्योर्ध्वे नाभौ कुण्डलीभूतसर्पाकारा कुण्डलिनीशक्तिरात्मनः फणेन सुषुम्नानाडीद्वारमुपगुह्य तिष्ठति। तदुपरि हृदये सहस्रज्वालाज्वलिते ज्योतिर्मण्डले देवीभ्यां पारिषदैश्च सहितश्चतुर्भुजः श्रीवत्साङ्को विष्णुमूर्तिस्तरुणादित्यसंकाशो विलसति। तदुपरि नासाग्रे चन्द्रबिम्बे नारायणमूर्तिः शुद्धस्फटिकसंकाशस्तिष्ठति। मूर्ध्नि सुषुम्नाया अग्रे मुक्तिद्वारे षोडशदलपद्मे अमृतधाराभिराप्लाव्यमानो वासुदेवस्तिष्ठतीति ध्यायेत्।

## हृदयकमले विष्णुध्यानम्

अधोमुखं हृदयकमलं प्राणायामैर्विकसितमूर्ध्वमुखं भवति। तस्यान्तः कर्णिकायां महानग्निर्विश्वार्चिर्विश्वतोमुखो ज्वलन्नापादतलमस्तकं शरीरं सन्तापयति। तन्मध्ये पीता भास्वती वह्निशिखा नीवारशूकवत् तन्वी। तस्याः शिखाया मध्ये तप्त जाम्बूनदप्रभः पीताबरधरः श्रीवत्साङ्कः परमात्मा श्रीभूमिभ्यां पारिषदैश्च सहितस्तिष्ठति। तं विष्णुं जिज्ञासुर्ध्यानयोगेन ज्ञानचक्षुषा पश्येत्। ध्यानमथनाविर्भूतं तेजोभासुरं भक्त्या सकलं सङ्कल्प्यावाह्य बिम्बेऽभ्यर्चयेत्।

## शरीरे नाडीचक्रम्

कन्दोद्भूता द्वासप्ततिसहस्रनाड्यः सन्ति शरीरे। तासु मुख्याश्चतुर्दश। इडा पिङ्गला सुषुम्ना सरस्वती वारुणी पूषा हस्तिजिह्वा यशस्विनी विश्वोदरा कुहू शङ्खिनी पयस्विनी अलम्बुसा गान्धारी चेति। आसामाद्यास्तिस्रो मुख्याः। तत्रापि सुषुम्ना। सा मुक्तिमार्गभूता कन्दमध्यान्मूर्धान्तं स्थिता। तस्या दक्षिणभागे दक्षिणनासान्तं पिङ्गला। तस्यां भास्करश्चरति। वामभागे वामनासान्तमिडा। तस्यां चन्द्रश्चरति। सुषुम्नायाः पूर्वभागे मेढ्रान्तं स्थिता कुहूः। जिह्वान्तं स्थिता सरस्वती। पिङ्गलायाः पूर्वभागे दक्षिणपादाङ्गुष्ठान्तं स्थिता यशस्वनी। पायुपर्यन्तं स्थिताऽलम्बुसा। दक्षिणनेत्रान्तं स्थिता पूषा। वामनेत्रान्तं

स्थिता हस्तिजिह्वा। दक्षिणहस्ताङ्गुष्ठान्तं स्थिता वारुणी। दक्षिणकर्णपर्यन्तं स्थिता पयस्विनी। इडायाः पूर्वभागे वामनेत्रान्तं स्थिता गान्धारी। वामहस्ताङ्गुष्ठान्तं स्थिता विश्वोदरा। वामकर्णान्तं स्थिता शङ्खिनी। अन्या अपि कन्दसम्भवाः स्थूलाः सूक्ष्माश्च सहस्रशः सन्ति सिरा अश्वत्थपत्रस्थाः सिरा इव।

**नाडीषु वायुसञ्चारः**

एतासु नाडीषु प्राणापानव्यानोदानसमाननागकूर्मकृकरदेवदत्तधनञ्जयनामानो दश वायवः सञ्चरन्ति। तेषु प्राणादयः पञ्च वायवो मुख्याः। तेषु प्राणापानौ। तयोरपि प्राणो मुख्यः। प्राणस्यास्यनासिकयोर्मध्यं, हृदयनाभिमध्यं, पादाङ्गुष्ठौ चेति पञ्च स्थानानि। स निश्श्वासोच्छ्वासकरः। अपानो नाभिमाश्रित्य विण्मूत्रविसर्जनं करोति। व्यानः सन्धिगतो हानोपादानचेष्टादि करोति। उदानः कण्ठमाश्रित्यान्नपानादिपोषणक्रियां करोति। समानः शरीरे सर्वत्र व्याप्य करचरणादिपोषणं करोति। नागः कण्ठमाश्रित्योद्गारादीन्, कूर्मो नेत्रे समाश्रित्य निमीलनोन्मेषणादि, कृकर उदरं समाश्रित्य क्षुत्पिपासादीनि, देवदत्तः सर्वगस्तन्द्रां, धनञ्जयः सर्वगः शोभादि कर्म च करोति।

**जीवजननम्**

जीवात्मा देहावसाने परलोकं प्राप्य कर्मानुरूपं फलं भुक्त्वा कर्मशेषेणाकाशं प्रविशति। ततो वायुर्भूत्वाऽग्निं प्रविशति। धूमो भूत्वाऽपः। आपो भूत्वाऽभ्रम्। अभ्रं भूत्वा भूमौ वर्षति। ओषधिवनस्पतीन् प्रविशति। ओषधीभ्योऽन्नं भवति। अन्नात् शुक्लशोणिते च भवतः। ततः कर्मानुसारेण तत्तद्योनिं प्रविश्य जायते।

**मोक्षप्राप्तिः**

जायमानो जीवात्मा भगवन्मायया मोहितः कामादिवशात् स्वर्गनरकफलेषु कर्मसु प्रवर्तते। तस्माद् भगवन्तं समाश्रित्य भक्त्योपासीत। उपासनेन प्रसन्नं नारायणं दृष्ट्वा तदनुग्रहेणापुनरावृत्तिकं दिव्यं तल्लोकं प्राप्य कृतकृत्यो भवेत्। तल्लोकप्राप्तिश्च

सालोक्य सामीप्य सारूप्य सायुज्यभेदेन चतुर्विधा। आमोदप्राप्तिः सालोक्यं, प्रमोदप्राप्तिः सामीप्यं, सम्मोदप्राप्तिः सारूप्यं, वैकुण्ठप्राप्तिः सायुज्यमिति।

**चतुर्विधं भगवत्समाश्रयणम्**

भगवत्समाश्रयणं चतुर्विधं यथा - जपो हुतमर्चनं ध्यानं चेति। भगवद्ध्यानपूर्वकं सावित्रीसहितां वैष्णवीमृचमष्टाक्षरं चाभ्यसेत्। स जपः। अग्निहोत्रादिकं हुतम्। गृहे देवालये वा प्रतिमादिषु वैदिकमार्गेण पूजनमर्चनम्। अष्टाङ्गयोगमार्गेण भगवच्चिन्तनं ध्यानमिति। तत्रार्चनं सर्वार्थसाधनम्। तदर्थं परमात्मैव पञ्चधा भवति विष्णुः पुरुषः सत्योऽच्युतोऽनिरुद्धश्चेति। तत्रादिमूर्तिर्विष्णुः पुनश्चतुर्मूर्तिः विष्णुर्महाविष्णुः सदाविष्णुर्व्यापिनारायणश्चेति। विष्णोरंशः पुरुषः। महाविष्णोरंशः सत्यः। सदाविष्णोरंशोऽच्युतः। व्यापिनोंऽशोऽनिरुद्धः।

**अष्ट योगाङ्गानि**

यमनियमासनप्राणायामप्रत्याहारधारणध्यानसमाधयोऽष्ट योगाङ्गानि।

**यमाः**

अहिंसा सत्यमस्तेयं ब्रह्मचर्यं (गृहस्थस्य स्वदाररतिनियमः, अन्येषां सर्वथा मैथुनत्यागः) दया आर्जवं क्षान्तिः धैर्यं मिताशनं शौचं चेति दश यमगुणाः।

**नियमाः**

तपः सन्तोष आस्तिक्यं दानं विष्णुपूजा वेदार्थश्रवणं कुत्सितकर्मसु लज्जा गुरूपदेशे श्रद्धा मन्त्राभ्यासो होमश्चेति दश नियमगुणाः।

**आसनम्**

ब्राह्मं, स्वस्तिकं, पद्मं, गोमुखं, सिंहं, मुक्तं, वीरं, भद्रं, मयूरं चेति नवभेदभिन्नमासनम्।

**प्राणायामः**

प्राणापानसमानयोगः प्राणायामः। रेचकः पूरकः कुम्भकंश्चेति स त्रिविधः। कुम्भके सव्याहृतिकां सप्रणवां गायत्रीम् अन्ते सशिरस्कां त्रिर्जपेत्। ततोऽग्निमण्डलं प्रविश्य तत्रस्थपुरुषेण संयुज्य वह्निना सह वायुमारोप्य, तत आदित्यमण्डलं प्रविश्य तत्रस्थपुरुषेण संयुज्य वह्निना सह वायुमारोप्य, ततश्चन्द्रमण्डलं प्रविश्य तत्रस्थपुरुषेण संयुज्य वह्निना कुण्डलिनीमुखं तप्त्वा वायुमारोप्य सुषुम्नया ऊर्ध्वं नीत्वा हृदयकमलं विकसितमूर्ध्वमुखं कुर्यात्। तत्र परमात्मानं नारायणं पश्येत्।

**प्रत्याहारः**

प्रत्याहारः पञ्चधा भवति। इन्द्रियाणां सर्वेभ्यो विषयेभ्यो बलादाहरणम्। सर्वेषामात्मनामात्मवदीक्षणम्। विहितकर्मणां बहिर्मनसा विना करणम्। पादाङ्गुष्ठादिमूर्धान्तमष्टादशमर्मस्थानेषु वायुमारोप्य धारयित्वा स्थानात् स्थानादूर्ध्वतोऽधस्ताच्च समाकर्षणम्। नाडीमार्गेषु वायुमारोप्य निरोधनं चेति।

**धारणम्**

धारणान्यष्टधा भवन्ति। तेष्वात्मनि मनसः स्थितिर्भवति। हृदयाकाशे, बाह्याकाशे, पञ्चमहाभूतानां स्थानरूपेषु पञ्चसु शरीरावयवेषु च देवानां पञ्च धारणानि, हृदयकमले परमात्मधारणं चेति। पादमारभ्य जानु-पायु-हृदय-भ्रूमध्य-मूर्धपर्यन्तेषु शरीरभागेषु, क्रमात् पृथिव्यादिपञ्चभूतस्थानरूपेषु, क्रमात् अनिरुद्धादिपञ्चमूर्तिधारणमिति।

**ध्यानम्**

ध्यानं निर्गुणं सगुणं चेति द्विविधम्। मध्यदेहान्मूर्धपर्यन्तं भ्रुवोर्मध्ये अन्तरात्मा नारायणः परं ज्योतिर्ज्वलति। प्राणायामैर्विकसितहृदयकमलान्तराकाशे वैश्वानरशिखाया मध्ये परं ज्योतिः परमानन्दविग्रहं नारायणं ध्यायेत्। इदं निर्गुणध्यानम्।

प्राणायामेन ज्वलिताग्निना कुण्डलिनीमुखं दग्ध्वा सुषुम्नया चोर्ध्वं गत्वा

हृदयकमलान्तराकाशे वैश्वानराग्निमध्ये वरुणमण्डले आदिमूर्तिम्, अग्निमण्डले यज्ञमूर्तिम्,अर्कमण्डले विष्णुं, सोममण्डले नारायणमूर्तिं च ध्यायेत्। एतच्च सगुणध्यानं चतुर्विधं सर्वसिद्धिप्रदम्।

**समाधिः**

जीवात्मनः परमात्मसमावस्था समाधिः। अनुष्णोपलमादित्यदर्शनादुष्णत्वमाश्रितमिव भवेत्। तथा परमात्मदर्शनाज्जीवात्मा नित्यशुद्धबुद्धमुक्तस्वभावपरमानन्दमयत्वमिव प्राप्य परमात्मानं सदा पश्यन्ननुभवति। जीवन्मुक्तो भवति। अणिमाद्यैश्वर्यं च प्राप्नोति।

**देहत्यागप्रकारः**

जीवन्मुक्तोऽन्त्यकाले प्राप्ते प्राणायामेन सुषुम्नयोर्ध्वं गत्वा हृदयकमले प्राणमारोप्य तदन्तराकाशे परंज्योतिषि मनोवृत्तिं संयम्य परमात्मानं पश्यन् भ्रुवोर्मध्ये प्राणमारोप्य प्रणवेन प्राणमुत्सृजति। परमात्मना सह वैकुण्ठमवाप्नोति।

एवं सदा ध्यातुमशक्यत्वात् प्रतिमादिषु नित्यं पञ्च मूर्तीर्नामभेदैः समावाह्यार्चयेत्। एतत् समूर्तार्चनं सर्वसिद्धिप्रदम्।

**ब्रह्मण्डविस्तारः**

जम्बू-शाक-कुश-क्रौञ्च-शालमलि-गोमेद-पूष्कराः भूमेः सप्त द्वीपाः। क्रमेणेमे सप्तद्वीपाः क्षार-क्षीर-घृत-दधि-मध्विक्षुरस-शीतोदधिभिः, परिवृताः। भूमेरुपरिष्ठात् भुवः सुवर्महर्जनस्तपःसत्यलोका एकैकस्योपरि सन्ति। भूमेरधस्तात् अतल-वितल-सुतल-प्रतल-तलातल-रसातल-महातलेति सप्त पाताललोकाः सन्ति। ततोऽधस्तात् प्रवलाभस्त्रिलोचनो जटाधरः कपिलोवसति। इदमेकं ब्रह्मण्डम्।

जम्बूद्वीपे भारत-हैमवत-नैषध-मेरु-दैव-वैडूर्य-श्वेत-श्रृङ्ग-गान्धर्वेति नव खण्डाः सन्ति। हिमवद्-हेम-निषध-नील-श्वेत-शतश्रृङ्गेति षट् सीमापर्वताः। तत्र हिमवतो दक्षिणमासमुद्रान्तं भारतम्। हिमवद्धेमयोर्मध्ये हैमवतम् इत्यादिरीत्या नव खण्डा द्रष्टव्याः।

शाकद्वीपे विंशतिःखण्डाः। कुशे त्रिंशत्। क्रौञ्च शाल्मल्योः पञ्चाशत्। गोमेदे सप्ततिः। पुष्करे नवतिरिति।

दर्दुरबर्बरादयो भारते पैशाचदेशाः। सालमुद्गन्धिकादयो हैमवते। घाटहारादयो नैषधे। एवमेव द्वीपान्तरेष्वपि पैशाचदेशाः सन्ति। ते विप्रैर्न वस्तव्याः।

सारसङ्ग्रहीतारौ

**आचार्यः लक्ष्मीनरसिंहभट्टः**
**आचार्यः हयवदनपुराणिकः**

# Vaikhānasa Āgama Kośa

VOLUME- XI

## Summary of the

# 9. Prāyaśchitta Prakaraṇam

Part II

## 6. Expiation for flaws during festival

If the scheduled time for the festival is lapsed, the priest should offer oblation into fire by reciting Vaiṣṇava hymn, Viṣṇu-sūkta, Puruṣa-sūkta and chants pertaining to Flag and Garuḍa for ten times each, by way of expiation. Then ablution of God is to be done with water from twenty five pitchers. And then having adored Vaiṣṇavas, he should offer Daksīṇā to the preceptor. Thereafter, in the next month, having chosen suitable lunar date and constellation, he should commence the festival after resolving concluding rite.

If there occurs omission of festival on single occasion, then he should worship the God presiding over that day. Then he should perform Homa by chanting hymns pertaining to Vaiṣṇava, Viśvaksena, Garuḍa, and the deities presiding over that festival. Then he should doubly perform festival in the evening. If there is lapse of one day festival, then the priest should offer mega-pacificatory oblation and then, next day he should doubly perform the festival.

In case there happens omission of sprouted seed-offering, the priest should offer fire-oblation by serial recitation of hymns pertaining to Brahmā, Soma, Paṅktīśa, Śeṣa, hymn addressed to Goddess Earth and ending with Vaiṣṇava hymn. Then he should immediately offer sprouting seeds. In case there is omission of tying the Pratisara band on the wrist of the image, the priest should first offer oblations into fire by reciting the hymns pertaining to Viṣṇu, Viśvaksena and Sudarśana and then he should tie the Pratisara band.

In case the priest fails to perform festival, even after Flag-hoisting, then he should conduct mega-pacificatory rite and then having hoisted the flag he should celebrate the festival.

In the eventuality of omission of festival owing to torrential rainfall or severe storm, then he should recite Vaiṣṇava hymn, Viṣṇu-sūkta, Puruṣa-sūkta and the hymns addressed to the deities Śrī and Bhūmi while offering fire-oblations. And then he should conduct the festival. In the event of lapse of scheduled day of festival, the priest should conduct the festival again after performance of mega-pacificatory Homa.

At the time of announcement of the festival, if the drum falls down or if the hyde is torn or if the drum sticks slip down or if the drummer himself falls down, then the priest should perform Homa addressed to the presiding deity of musical instruments and offer oblation by chanting hymns pertaining to Nandīśa and Śeṣa. Then he should prepare another drum etc. and arrange instrumental music after Homa with Vyāhṛtis.

If by mistake fresh announcement of festival is made after flag-hoisting, then the priest should perform fire oblation by chanting the hymns- addressed to Viṣṇu, presiding deity of the flag and also disc etc. and Indra etc. Then he should make the announcement again and hoist another flag. In case there is no flag at all, then the priest should perform Homa by chanting Dhvaja-mantra and Vaiṣṇava hymn. Then he should prepare another flag. In case at the time of installing flag-pole, if there happens directional deflection, then the priest should perform Homa with Vaiṣṇava hymn and flag-chant.

If the flag becomes upside down then the priest should perform mega-pacificatory Homa and having also offered fire-oblation, by chanting Mantras pertaining to flag and Garuḍa, then he should hoist the flag again. If at the time of flag-hoisting, installation of Garuḍa is forgotten, then after performing Homa by recitation of Vaiṣṇava hymn, Viṣṇu-sūkta, Puruṣa-sūkta, chants pertaining to flag and Garuḍa, he should conduct installation. After installation of Garuḍa if priest fails to offer food oblation, then he should perform Homa by recitation of Vaiṣṇava chant and Flag-chant and then he should offer food oblation in double quantity. If the priest fails to offer food-oblation containing green gram, then having offered fire oblations by recitation of hymns pertaining to Viṣṇu, Flag and Garuḍa he should offer food-oblation comprising green gram.

Per chance, if the Garuḍa emblem on the Flag happens

to drop down, then the priest should re-hoist it, as before, after performing Homas by recitation of Brāhma, Prājāpatya, Saura, Saumya, Āgneya hymns as well as Vyāhṛtis (Om Bhuḥ Bhuvaḥ Suvaḥ). In the event of destruction or damage of the Flag the priest should conduct fire-oblations by chanting hymns pertaining to sacred fire, Garuḍa, Flag and also Vaiṣṇava hymn. Thereafter having fashioned new Flag, he should mount Garuḍa on the Flag after proper invocation. In the contingency of the Flag being de-hoisted untimely or if it is contaminated by a person who should not touch it, then the priest should perform Homa after addressing hymns pertaining to presiding deities of the festival, Garuḍa and the Flag. Then he should hoist another Flag. He should then sprinkle the same flag with water, taken out of seven pitchers and then serve ablution. During the period after Flag-hoisting and before the concluding day of the festival, if omission of Flag-adoration takes place, then having performed Homa by reciting Vaiṣṇava and Dhvaja-daivatya hymns, the priest should conduct oblation to Garuḍa with water from twenty-five pitchers. Then after worshipping the God presiding over the Flag the priest should offer food-oblation in profuse (prabhūta) quantity.

In the events of lapse of worship and offering of food-oblations to the deity presiding over the Flag, the Disc and to Viśvaksena and Nandīśa, the priest should again offer worship and food-oblation after performing Homa by recitation of hymns addressed to Viṣṇu and those respective deities.

If the cloth sheet of the flag or its staff happen to be deficient in proportion or if Garuḍa happens to be lacking in prescribed characteristics or if there is distortion of preparation of its idol, the priest should conduct fire oblation by reciting hymns pertaining to Garuḍa and the presiding deity of flag.

If at the time of placing of the lamp on the flag-pole, if the flag along with lamp gets lost, then the priest should perform Vaiṣṇava Homa. If some cavity is made by worms etc. in the flag-pole, then having repaired it, the priest should perform purification of the particular place and sprinkle penta-cow-products and perform Homa by chanting Dhvaja-mantra.

If the flag and flag-staff happens to crack, the priest should immerse it in water with proper procedure. If by mistake or by breeze if unbroken flag-pole happens to fall down, then the priest should install it again after performing ritual retention and allied rites. At the beginning of the festival if ablution happens to be omitted, then for the sake of atonement, the priest should perform Homa by reciting Vaiṣṇava hymn, Viṣṇu-sūkta, Puruṣa-sūkta and Vāruṅa hymn. Then he should serve ablution to God with pure water. If the ablutional pitcher happens to be polluted by dog, crow and such other untouchable beings, the priest should procure another pitcher after conducting the atonement as prescribed in the section on installation. In case there occurs either deficiency or excess in the dimension of either the worship-pavilion or the platform meant for pitcher, then the priest should perform Homa by

दिनेषु तावत्सङ्ख्येषु जुहुयाद्भक्तिसंयुतः।।

सवत्सास्तावतीर्गाश्च देवेशाय ददेन्मुदा।
उत्सवस्य च यन्मूल्यं द्रव्यं तद्वाऽथ सन्ददेत्।।

कलशैः स्नापयित्वा तु शतेनाष्टाधिकेन च।
सर्वोपचारैरभ्यर्च्य निवेद्य च महाहविः।।

कृत्वा च महतीं पूजां पुण्याहमपि वाचयेत्।
संस्तूय विष्णुसूक्तेन देवेशं पौरुषेण च।।

ब्राह्मणान् भोजयित्वा तु पुनश्चोत्सवमाचरेत्।
उत्सवं द्विगुणं सम्यक् कारयेदिति केचन।।

समूर्तार्चनयज्ञस्य प्रायश्चित्तमिदं स्मृतम्।
--------------------------------------।।

--------------------------------------।
प्रतिसंवत्सरं चैव वर्धयित्वा तु कारयेत्।।

हीने दिने तथैकस्मिन् तस्य कालोत्सवस्य तु।
हुत्वा पुरुषसूक्तेन वैष्णवैः षड्भिरेव च।।

कूष्माण्डैः ब्राह्ममन्त्राभ्यामैन्द्रैरपि च वैष्णवैः।
मूर्तिभिः परिवाराणां तदालयनिवासिनाम्।।

कलशैः स्नापयित्वा तु समभ्यर्च्य निवेदयेत्।
पूर्वोक्तेन क्रमेणैव चोत्सवं पुनराचरेत्।।

वर्धयित्वा चरेदेवं दिनं प्रति दिनं प्रति।
अतीताहोत्सवं कृत्वा पुनश्शेषं समाचरेत्।।

**स.७२.६ - १४**

प्रत्यब्दं क्रियमाणे च नित्ये कालोत्सवे तथा।।

सर्वस्मिंश्च दिने हीने प्रायश्चित्तं विधीयते।
उत्सवस्य दिनं यावत् तावत्सङ्ख्यादिनेषु च।।

अब्जाग्नौ च महाशान्तिं पूर्वोक्तां जुहुयात्क्रमात्।
तावतीर्गाश्च सन्दद्याद्देवदेवाय भक्तितः।।

उत्सवस्य च यन्मूल्यं द्रव्यं तद्वाऽथ दापयेत्।
पूर्वोक्तविधिना भक्त्या कलशैः स्नापयेद्विभुम्।।

सर्वोपचारैर्देवेशमर्चयित्वा विधानतः।
महाहविर्निवेद्यैव क्षमस्वेति प्रणम्य च।।

सौवर्णैरन्यपुष्पैश्च वस्त्रमाल्यैश्च भक्तितः।
तत्पूजां महतीं कृत्वा पुण्याहमपि वाचयेत्।।

विष्णोर्नुकादिभिः स्तुत्वा पुरुषसूक्तेन चोद्धरेत्।
ब्राह्मणानां यथाशक्ति भोजनं च ततः परम्।।

पुनरुत्सवमारभ्य कारयेच्च यथाक्रमम्।
समूर्तार्चनयज्ञस्य प्रायश्चित्तमिदं स्मृतम्।।

उत्सवं द्विगुणं सम्यक् कारयेदिति केचन।
प्रत्यब्दमेवं सङ्गृह्य कारयेत यथाक्रमम्।।

### ९.६.३ वेलोत्सवलोपे प्रायश्चित्तम्

**प्र.२७.२४४, २४५**

प्रमादाद्बुद्धिपूर्वं वा तत्तद्वेलोत्सवादिषु।

अकृतेषु यथाशास्त्रं कृत्वा तन्त्रेण वै पुनः।।
मन्त्रेण वा पुनः सूक्ष्मं कालेऽवभृथमाचरेत्।

**९.६.४ नवाहादिकालोत्सवव्यत्यये प्रायश्चित्तम्**
**य.४७.५ - १७**

कालोत्सवे व्यतीते तु पूर्वोक्तं होममाचरेत्।।
कलशैः पञ्चविंशद्भिः स्नापयेद्देवमव्ययम्।
महाहविः प्रभूतं वा देवेशाय निवेदयेत्।।
उत्सवोक्तविधानेन पश्चादुत्सवमाचरेत्।
एकवर्षे व्यतीते तु पञ्चाग्नीन् साधयेत्क्रमात्।।
आघारं पूर्ववद्धुत्वा वैष्णवं च सुहूयते।
ब्राह्मं रौद्रं च हुत्वा तु विष्णुसूक्तसमन्वितम्।।
पुरुषसूक्तं च हुत्वा तु होमे होमे प्रति प्रति।
सर्वदेवत्यमन्त्रैश्च सभ्याग्नौ जुहुयात्ततः।।
देवस्य स्नपनं कुर्यात् शताष्टकलशैः क्रमात्।
महाहविर्निवेद्यैव महाभूतबलिं ददेत्।।
पश्चाद्विष्णूत्सवं कुर्याद्राजराष्ट्रविवर्धनम्।
आचार्यस्यर्त्विगादीनां पूर्वोक्तां दक्षिणां ददेत्।।
द्वितीये द्विगुणं कुर्यात् त्र्यब्दे हीने विशेषतः।
पञ्चाग्नीन् साधयेत्पश्चादाघारं पूर्ववच्चरेत्।।
प्राच्यां तु विष्णुसूक्तं तु पुरुषसूक्तं तु दक्षिणे।

एकाक्षरादीनपरे दुर्गासूक्तं तथोत्तरे।।

सभ्ये तु सर्वदैवत्यं हुत्वा शान्तिं तथा चरेत्।
देवस्य स्नपनं कृत्वा सहस्रेणाष्टभिस्ततः।।

महाहविः प्रभूतं वा देवेशाय निवेदयेत्।
मुखवासं च दत्वा तु महाभूतबलिं ददेत्।।

ब्राह्मणान् भोजयेत्तत्र ऋत्विग्भ्यो दक्षिणां ददेत्।
एवं कृत्वा प्रयत्नेन विष्णोरुत्सवमाचरेत्।।

नवाहं वाथ सप्ताहमेकाहं त्रिविधं स्मृतम्।
नवाहस्य तु पूर्वोक्तं सप्ताहस्य तथैव च।।

### ९.६.५ एकाहोत्सवलोपे प्रायश्चित्तम्

**य.४७.१८, १९**

एकाहे तूत्सवे हीने महाशान्तिस्सुहूयते।
वैष्णवं विष्णुसूक्तं च नरसूक्तं यजेत्ततः।।

शताष्टकलशैः स्नाप्य प्रभूतं च निवेदयेत्।
ऋत्विग्भ्यो दक्षिणां दत्वा पुनरुत्सवमाचरेत्।।

### ९.६.६ उत्सवे अङ्कुरार्पणलोपे प्रायश्चित्तम्

**य.४७.४५ - ४७**

अङ्कुरार्पणहीने तु ब्राह्मं सौम्यसमन्वितम्।।

पङ्क्तीशं शैषिकं हुत्वा चक्रं चैव सुहूयते।
जयादिनामसंयुक्तं वैष्णवं चैव हूयते।।

पूर्वोक्तदिनहीने तु सद्यः पुष्पाङ्कुरं भवेत्।

-----------------------------------------।।

**ज्ञा.१०६.१९८**

अङ्कुरार्पणहीने सौम्यं भूमिदैवत्यं वैष्णवान्तं हुत्वा आरभेत।

## ९.६.७ प्रतिसरबन्धनलोपे प्रायश्चित्तम्

**वि.६८.४२१**

उत्सवार्थं प्रतिसरबन्धने हीने वैष्णवं वैष्वक्सेनं सौदर्शनं च हुत्वा, पुनः प्रतिसरं बध्नीयात्।

**प्र.२७.३४३**

**ज्ञा.१०६.१९८**

प्रतिसरबन्धहीने सौम्यं नागाधिपदैवत्यं वैष्णवान्तं हुत्वा बध्नीयात्।

**य.४७.१२८, १२९**

प्रतिसरबन्धने हीने प्रभाते (?) च प्रमादतः।
वैष्णवं चैव हुत्वा तु सौमदैवत्यमेव च।।

प्रतिसरं बन्धयेत्तत्र शेषं पूर्ववदाचरेत्।

## ९.६.८ उत्सवस्य मध्ये विच्छेदे प्रायश्चित्तम्

**वि.६८.४१९, ४२०**

उक्तमासे चोक्तनक्षत्रे अवभृथं सङ्कल्प्य, ध्वजारोहणं कृत्वा, अज्ञानादर्थलोभाद्वा येन केनचिदुत्सवं न कुर्यात् द्वितीयमासे तद्दिने अवभृथं सङ्कल्प्य तद्दिनात् पूर्वं तीर्थाङ्कुरार्थं मृत्सङ्ग्रहणं कृत्वा उत्सवमारभेत।

अस्य प्रायश्चित्तमब्जाग्नौ वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, ध्वाजं, गारुडं, वैष्वक्सेनं, सौदर्शनमुत्सवाधिदेवत्यं च व्याहृत्यन्तं हुत्वा, वैष्णवान् सम्पूज्य, उत्सवं कारयेत्।

**स.७२.३८, ३९**

ध्वजमारोप्य तत्पश्चात् विघ्नश्चेदुत्सवस्य तु।
महाशान्तिं ततो हुत्वा ध्वजमारोप्य पूर्ववत्।।

पुनरुत्सवमारभ्य कारयेत विधानतः।
पुण्याहं वाचयित्वैव शेषं पूर्ववदाचरेत्।।

**वि.६८.४२५**

वर्षधारातिवाताशनिपातविद्युल्लेखायुते काले देवेशस्य उत्सवं न कुर्याच्चेद् वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, श्रीभूमिदैवत्यं च हुत्वा, उत्सवं कारयेत्।

## ९.६.९ उत्सवदिनह्रासे प्रायश्चित्तम्

**प्र.२७.२४० - २४२**

उत्सवाहस्सु हीनेषु प्रायश्चित्तं समाचरेत्।।

वर्धयेद्वैष्णवं कार्यं ह्रासयेन्न कदाचन।
प्रमादाद्वाऽप्यशक्तौ वा कृत्वा सम्प्रार्थयेद्धरिम्।।

महाशान्तिं तु हुत्वैव शेषं कुर्यात्प्रयत्नतः।
एष एव विधिर्वृद्धौ स तु श्रेयोभिवृद्धिदः।।

**९.६.१० उत्सवमध्ये दीपदण्ड (स्तम्भ) नाशे प्रायश्चित्तम्**

**प्र.२७.३२२**

तथैव[1] दीपदण्डस्य भवेत्सर्वत्र च क्रमः।

**९.६.११ ध्वजस्तम्भे दीपारोपणे प्रायश्चित्तम्**

**प्र.२७.३२४**

ध्वजे दीपं समारोप्य वैष्णवं शतशो यजेत्।
आपत्कल्पं प्रवक्ष्यन्ति ध्वजे दीपावरोहणम्।।

**९.६.१२ दीपयुक्तध्वजनाशे प्रायश्चित्तम्**

**प्र.२७.३२५**

दीपयुक्ते ध्वजे नष्टे पूर्ववन्निष्कृतिं चरेत्[2] ।

**९.६.१३ उत्सवे ध्वजदण्डपतनादौ प्रायश्चित्तम्**

**प्र.२७.२८९ - ३०२**

अतः परं प्रवक्ष्यामि ध्वजदण्डे तु निष्कृतिम्।
प्रमादात्पतिते भूम्यां ध्वजे वातादिना दृढे।।

अभग्ने वाथ भग्ने वा ध्वजं तत्र पुनः क्षिपेत्।
अभग्ने तं ध्वजं गृह्य कृत्वा मन्त्रेण तक्षणम्।।

अधिवासादिकं कृत्वा तत्स्थाने स्थापयेद्बुधः।
भग्ने ध्वजे न स ग्राह्यस्तमप्सु विधिना त्यजेत्।।

---

1 ध्वजदण्डपातादिवत्।

2. महाशान्तिसहस्राहुत्यादि चरेत्।

ततोऽन्यं ध्वजमादाय स्थापयेदविलम्बितम्।
चोराद्यैर्बुद्धिपूर्वं वा पातिते पूर्ववद्विधिः।।

तत्राधिकं प्रकुर्वीत शिल्पिभिः तक्षणं पुनः।
अभग्नध्वजवत् कुर्यात् अन्यत् पूर्ववदत्वरः।।

भागेनानुपयुक्तस्य ध्वजस्य त्याज्यतैव हि।
दुष्टभागस्य दानेन न कदाचित् परिग्रहः।।

अथवा सुदृढं गृह्य प्रतिष्ठां महतीं चरेत्।
दुष्टं भागं व्यपोह्यैव प्रमाणं लक्षयेत्पुनः।।

प्रमाणमप्रमाणं वा ध्वजं नान्येन दारुणा।
संयुतां वर्धितां कुर्यादेष सार्वत्रिको विधिः।।

यस्तु ताम्रादिना कुर्याल्लोहेन कवचादिकम्।
बालालयं प्रकल्प्यैव तत्र कार्यं समाचरेत्।।
स्थितमेव ध्वजं कुर्यात् न तु तं चालयेत् क्वचित्।
दग्धं ध्वजं परित्यज्य पुनरन्यं समाहरेत्।।

ध्वजेऽन्त्यजातिभिः स्पृष्टे महाशान्तिमथाचरेत्।
तैः समीपमुपेतैस्तु सहस्राहुतिमाचरेत्।।

पतिते वात्यया चैवं ध्वजस्य शिखरे तथा।
मेखलासु च तत्सर्वं नवीकृत्य यथाविधि।।

ध्वजदण्डे तु संयोज्य प्रतिष्ठां पुनराचरेत्।
ध्वजस्य चलने चापि प्रमादाद् व्रश्चने तथा।।

भग्नाभग्नध्वजस्योक्तनिष्कृतिं तु समाचरेत्।

एष एव विधिः प्रोक्तो दण्डेष्वन्येषु सर्वतः।।

**प्र.२७.३१९ - ३२२**

उत्सवादौ प्रवृत्ते तु उक्तदोषे[1] त्वयं विधिः

ध्वजस्थं गरुडं तस्मादवमुच्य समाहितः।।

नीत्वा तु यागशालायां संस्थाप्य तु समर्चयेत्।

वेणुदण्डं प्रतिष्ठाप्य सद्यस्तस्मिन् प्रयोजयेत्।।

महाशान्तिं तथा कुर्यात् सहस्राहुतिमेव च।

वैष्णवं विष्णुदैवत्यं गारुडं ध्वाजमेव च।।

सौदर्शनं च कूष्माण्डान् शतमष्टाधिकं यजेत्।

**वि.६८.४२१**

ध्वजदण्डे चोराद्यपहृते, हीने, अग्निदग्धे, अशनिनोत्पातिते च वैष्णवं, वायव्यमाग्नेयम्, ईकारादीन्, गारुडं, ध्वाजं च हुत्वा, ध्वजदण्डमारोप्य, पूर्ववत् [2] ध्वजमारोप्य, उत्सवशेषं कारयेत्।

**क्रि.२६.१४**

कृत्वैवं [3] दण्डभङ्गे च ध्वजभङ्गे तथैव च।

भङ्गे च यष्ट्याधाराणां तद्वदन्यत् समाहरेत्।।

---

1. ध्वजपातादिदोषे
2. ध्वजारोहणविधानेन।
3. ध्वजारोहणकाले ध्वजे अधरोत्तरमारोपिते यत् प्रायश्चित्तमुक्तं तत् कृत्वेत्यर्थः।

**९.६.१४ ध्वजस्तम्भोपरि वृक्षादिपतनादौ कर्तव्यक्रमः**

**प्र.२७.३११**

वृक्षाद्यैः पतितैर्नष्टे चालितेऽवनतेऽपि च।
तद्ध्वजं पूर्ववत् कुर्यात् त्रिमासाभ्यन्तरेऽत्वरः।।

**९.६.१५ उत्सवे ध्वजस्तम्भे कृम्याद्युपहतौ प्रायश्चित्तम्**

**प्र.२७.३१२ - ३१४**

कृम्यादिभिर्विहङ्गैर्वा कोटरादौ कृते ध्वजे।
कृत्वा बालालयं पश्चात् समीकृत्यार्चयेत्पुनः।।
रज्जुबन्धाद्यकरणे ध्वजस्यारोहणे कृते।
बालालयं न तत्र स्याद्वास्तुशुद्धिं समाचरेत्।।

प्रोक्षयेत्पञ्चगव्यैस्तु ध्वजमन्त्रेण हूयते।

**९.६.१६ ध्वजपटादीनां प्रमाणलोपादौ प्रायश्चित्तम्**

**क्रि.२६.१ - ३**

अतः परं प्रवक्ष्यामि प्रायश्चित्तमथोत्सवे।
वस्त्रे प्रमाणहीने च ध्वजदण्डे तथैव च।।

वीशे लक्षणहीने च चित्रकर्मविपर्यये।
गारुडं ध्वजदैवत्यं शतमष्टोत्तरं यजेत्।।

कृते सङ्कीर्णवर्णेन प्रायश्चित्तमथाचरेत्।

**नि.३६**

उक्तप्रमाणहीने वा पटे वीशे तथैव च।।

तद्ध्वजं सम्परित्यज्य ध्वजमन्यं प्रगृह्य च।
कारयेल्लक्षणोपेतं पश्चात् कर्म समाचरेत्।।

आरोपिते तदज्ञानात् प्रायश्चित्तं विधीयते।
वैष्णवं विष्णुसूक्तं च ध्वजदैवत्यसंयुतम्।।

साज्यं चरुं यजेत् पश्चात् कूर्चयुक्तेन नित्यशः।
पीठे चावाह्यमभ्यर्च्य(?) हविः सम्यङ्निवेदयेत्।।

## ९.६.१७ ध्वजपतने प्रायश्चित्तम्

**नि.३६**

प्रमादात् पतिते भूम्यां ध्वजे तत्र विशेषतः।
तद्राष्ट्रानर्थदं विद्यात् शीघ्रं शान्तिं समाचरेत्।।

तद्ध्वजं संपरित्यज्य ध्वजमन्यं प्रगृह्य च।
आघारं विधिवद्धुत्वा पौण्डरीके विशेषतः।।

वैष्णवं ध्वजदैवत्यं शक्रशान्तिं तथैव च।
दिग्दैवत्यं च हुत्वा तु सप्तभिः कलशैः क्रमात्।।

तद्ध्वजं स्नपनं कुर्यात् मुद्गान्नं संनिवेदयेत्।
पूर्वोक्तविधिना सम्यक् ध्वजारोहणमाचरेत्।।

**क्रि.२६.१५**

ध्वजे तु पतिते ध्वाजं गारुडं वैष्णवं यजेत्।
प्रोक्षणैः प्रोक्ष्य तत्पश्चात् ध्वजं तत्र सुयोजयेत्।।

**स.७२.४**

ध्वजस्यात्र निपाते तु ध्वजमन्त्रं च गारुडम्।
वैष्णवं जुहुयात् पश्चात् ध्वजमत्र सुयोजयेत्।।

**य.४७.३१ - ३३**

ध्वजे च पतिते भिन्ने तत्काले शान्तिमाचरेत्।
ध्वजदैवं च हुत्वा तु चक्रादीनां सुहूयते।।

इन्द्रादीनां च हुत्वा तु वैष्णवेन समन्वितम्।
गरुडस्नपनं कुर्याद्धविर्भिः संनिवेदयेत्।।

तद्ध्वजं विसृजेद्विद्वान् ध्वजमन्यं प्रकल्पयेत्।
पूर्वोक्तविधिना कृत्वा ध्वजारोहणमाचरेत्।।

**वि.६८.४२५**

ध्वजादीनां पतने ध्वाजं, वारुणं, वायव्यं च जुहुयात्।

**प्र.२७.४१३, ४१४**

[अत्र 'पतने' इत्यस्य स्थाने 'पातने' इति दृश्यते।]

**९.६.१८ ध्वजारोहणे ध्वजदेवादिपूजनलोपे प्रायश्चित्तम्**

**वि.६८.४२०**

ध्वजदेवचक्रविष्वक्सेननन्दीशानामर्चनं निवेदनं वा हीनं चेत्, वैष्णवं, तत्तद्दैवत्यं च हुत्वा, पुनरभ्यर्च्य, निवेदयेत्।

**प्र.२७.३२७, ३२८**

ध्वजदेवस्य चक्रस्य शान्तनन्दीशयोस्तथा।

हीनेऽर्चने वैष्णवं च तद्दैवत्यसमन्वितम्।।

हुत्वैव पुनरभ्यर्च्य पश्चात्कार्यं समाचरेत्।

**९.६.१९ ध्वजारोहणे गरुडप्रतिष्ठालोपे प्रायश्चित्तम्**

**वि.६८.४२०**

ध्वजारोहणे गरुडप्रतिष्ठाहीने वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, ध्वाजं, गारुडं च शतशो हुत्वा, पुनः प्रतिष्ठां कारयेत्।

**प्र.२७.३२५, ३२६**

[अत्र 'शतशः' इत्यस्य स्थाने 'दशशः' इति दृश्यते।]

**९.६.२० ध्वजगरुडपतने प्रायश्चित्तम्**

**वि.६८.४२१**

ध्वजगरुडे पतिते ब्राह्मं, प्राजापत्यं, सौरं, सौम्यम्, आग्नेयं, व्याहृतीश्च हुत्वा, पूर्ववत्[1] घण्टासहितमारोपयेत्।

**९.६.२१ ध्वजारोपितगरुडस्य निवेदनलोपे प्रायश्चित्तम्**

**प्र.२७.३३०, ३३१**

आरोपिते तु गरुडे हीने चैव निवेदने।।

वैष्णवं ध्वजमन्त्रौ च हुत्वा गारुडमेव च।

निवेदयेत्तु द्विगुणं क्षमस्वेत्यनुमानयेत्।।

**वि.६८.४२०**

---

1. ध्वजारोहणोक्तवत्।

**प्र.२७.३३२, ३३३**

मुद्गान्ने तु तथा हीने वैष्णवं वायुदैवतम्।
आग्नेयमींकारादींश्च गारुडं ध्वाजमेव च।।

हुत्वा यत्नेन बहुशः मौद्गिकं च निवेदयेत्।

**वि.६८.४२०**

तस्य[1] मुद्गान्ननिवेदनहीने वैष्णवं ध्वाजं गारुडं च हुत्वा यत्नेन मौद्गिकं निवेदयेत्।

## ९.६.२२ अधरोत्तरध्वजारोहणे प्रायश्चित्तम्

**क्रि.२६.१२, १३**

ध्वजारोहणकाले तु ध्वजे तत्राधरोत्तरे।
महाशान्तिं च हुत्वा तु ध्वजमष्टोत्तरं शतम्।।

गारुडं च तथा हुत्वा कलशैः प्रोक्ष्य सप्तभिः।
समभ्यर्च्य निवेद्यैव पुनरारोपयेद् ध्वजम्।।

## ९.६.२३ ध्वजसंस्थापनदिग्व्यतिक्रमप्रायश्चित्तम्

**नि.३६**

---------------------------पुण्याहमपि वाचयेत्।
वैष्णवं ध्वाजदैवत्यम् आज्येन चरुकृद्यजेत् (?)।।

अष्टोपचारैरभ्यर्च्य मुद्गान्नं संनिवेदयेत्।

---

1. गरुडस्य

ध्वजे संस्थापिते पश्चात् न भवेतु (?) कदाचन।।

तस्मात् सर्वप्रयत्नेन देवदेवं निरीक्षितुम्।
ध्वजसंस्थापनं कुर्यादन्यदिक्प्रोक्षणे सति।।

तस्मात् पूर्वदिशं पश्येत् तद्दैवत्यपुरस्सरम्।
साज्यं चरु क्रमाद्वीशं सध्वाजं वैष्णवं बुधः।।

नित्याग्नौ जुहुयान्नित्यं कारयेदवरोहणम्।

**९.६.२४ संस्कृतध्वजस्य स्पर्शानर्हस्पर्शे प्रायश्चित्तम्**
**क्रि.२६. ३ - ११**

कृते प्रतिष्ठासंस्कारे ध्वजे तत्र[1] विशेषतः।।

संस्पृष्टे क्षत्रियैर्वैश्यैः प्रोक्षणैः प्रोक्ष्य चाहरेत्।
उच्छिष्टाशुचिभिर्विप्रैः शूद्रैः स्पृष्टे तथैव च।।

सप्तभिः कलशैः प्रोक्ष्य जुहुयात् ध्वाजगारुडौ।
(सप्तविंशतिकृत्वः स्यादुच्छिष्टाशुचिभिर्नृपैः।।)

चतुर्विंशतिभिः प्रोक्ष्य कलशैर्द्विगुणं यजेत्।
द्विगुणं तद्वणिक्स्पर्शे स्नपनं होममाचरेत्।।

उच्छिष्टाशुचिभिश्शूद्रैः प्रतिलोमैरुदक्यया।
स्पृष्टे सूतिकया वाथ कलशैस्साष्टकैः शतैः।।

---

1. उत्सवे।

स्नापयित्वा तु पूर्वोक्तं होमं द्विगुणमाचरेत्।
पूर्ववद् ध्वजदेवस्य प्रतिष्ठामाचरेत्पुनः।।

(सवर्णाख्यानुलोमेन संस्पृष्टे क्षत्रियोक्तवत्।
अभिषिक्ताख्यसंस्पर्शे कुर्याद्वैश्योक्तनिष्कृतिम्।।

अन्यानुलोमसंस्पर्शे कुर्याच्छूद्रोक्तनिष्कृतिम्।
वर्णजातिविवेकेन यत्र नोक्ता तु निष्कृतिः।।

तत्क्रमेणैव विहितं प्रायश्चित्तं समाचरेत् ।)
पर्यग्निपञ्चगव्याभ्यां शुद्धिं सर्वत्र कारयेत्।।

**नि.३६**

ग्रामं प्रदक्षिणं (?) मध्ये चण्डालाद्यन्तरैरपि।
महापातकसंयुक्तं सूतिकोदक्ययाऽथवा।।

तथाऽन्यप्रतिलोमैश्च अन्यैश्च पतितैरपि।
ध्वजसंस्पर्शनं चेत्तु तद्ध्वजं सम्परित्यजेत्।।

सप्तभिः कलशैः स्नाप्य चक्रादीनां विशेषतः।
कुण्डमौपासनं कृत्वा आघारं विधिवद्यजेत्।।

वैष्णवं विष्णुसूक्तं च पुरुषसूक्तं यजेत्क्रमात्।
तत्तद्दैवत्यमन्त्रैश्च मूर्तिमन्त्रैश्च संयुतम्।।

चतुरावर्त्य हुत्वा तु ध्वजमन्यं प्रकल्पयेत्।
पूर्वोक्तविधिना सम्यक् सर्वं च पुनराचरेत्।।

ब्राह्मणान् भोजयित्वा तु शक्तितो दक्षिणां ददेत्।

आशौचिद्विजसंस्पृष्टे शूद्रसंस्पर्शने तथा।।

दीक्षितैर्वानुलोमैर्वा पाषण्डैर्वेददूषकैः।
श्वानकुक्कुटकाकाद्यैः सूतकाद्यैस्तथैव च।।

अन्यैरपि निकृष्टैश्च ध्वजसंस्पर्शने सति।
संस्थाप्य सप्तकलशान् तद्ध्वजं प्रोक्ष्य वै बुधः।।

दर्पणं पुरतः स्थाप्य स्नापयेत् तत्र तैरपि।
शान्तिहोमं ततो हुत्वा पुनः कर्म समाचरेत्।।

ध्वजवाहनसंस्पृ (ष्टे) पूर्वोक्तकलशैरपि।
प्रोक्षयेद्दर्पणस्नानविमानध्वजवैष्णवम्।।

नित्याग्नौ जुहुयादाज्यं तच्छेषं पुनराचरेत्।
बिम्बवाहनसंस्पर्शे तदेव स्नपनं चरेत्।।

तत्तद्दैवत्यमन्त्रैश्च वैष्णवं पूर्ववद्यजेत्।
बिडालादिनिकृष्टान्ते (?) निकृष्टैः स्पर्शने यदि।।

आशौचवद्द्विजैरेव वाहनस्पर्शनोक्तवत्।
तैरेव वाहकस्पृष्टौ बिम्बं स्नाप्य कुशोदकैः।।

शुद्धस्नानं ततः कुर्यात् तत्तन्मूर्त्या च हूयते।
आपोहिष्ठादिभिर्मन्त्रैः कुशाद्भिः प्रोक्षयेद्ध्वजम्।।

आशौचिध्वजसंस्पर्शेऽस्पृश्यतः स्पर्शने सति।
शंनो देवीति मन्त्रेण प्रोक्षयेत् कुशवारिभिः।।

### ९.६.२५ ध्वजस्य वर्षाद्युपघातादौ प्रायश्चित्तम्

**प्र.२७.३३३ - ३३९**

वर्षवातातपैस्सम्यगुपघातादिसंभवे।।

विष्ठाद्युपहते चैव पक्षिणामसकृत्सकृत्।
रज्ज्वादित्रुटने चैव प्रमादात् पतनेऽपि च।।

पातिते बुद्धिपूर्वं वा अकालेऽप्यवरोपिते।
शूद्राद्यैरनुलोमैर्वा स्पृष्टे ध्वजगते पटे।।

अशुचिं शोधयित्वान्यत् समीकृत्यासमीकृतम्।
उत्सवाधिपदैवत्यं षड्वारं जुहुयाद् गुरुः।।

गारुडं ध्वजमन्त्रं च सहस्रं चैव हूयताम्।
ततश्शेषं समाप्येत विपरीतं न कारयेत्।।

प्रमादाद्बुद्धिपूर्वं वा पटे दग्धेऽन्यमाहरेत्।
शान्तिं पूर्वोदितां कृत्वा प्रतिष्ठां पुनराचरेत्।।

अवरोहणमुद्वासस्तं च मन्त्रेण कारयेत्।

### ९.६.२६ आरोपितध्वजनाशादौ प्रायश्चित्तम्

**क्रि.२६.१६ - १८**

ध्वजस्य नाशे भेदे च आग्नेयं गारुडं तथा।
ध्वाजं च वैष्णवं हुत्वा कारयित्वैव तद्ध्वजम्।।

आवाह्य गरुडं तत्र पुनरारोपयेद्ध्वजम्।
शिष्टाहेषु प्रपूर्णेषु ध्वजं तमवरोपयेत्।।

**स.७२.५, ६**

आरोपिते ध्वजे नष्टे भिन्ने दग्धे प्रमादतः।
आग्नेयं गारुडं ध्वाजं वैष्णवं जुहुयात्क्रमात्।।

कारयित्वा ध्वजं सम्यक् पुनरारोपयेद् गुरुः।

**य.४७.३४ - ३६**

ध्वजे समुच्छ्रिते भिन्ने पतिते दण्डगे तथा।
तद्दण्डं तद्ध्वजं त्यक्त्वा ध्वजमन्यं प्रगृह्य च।।

दण्डं चान्यं च सङ्गृह्य सुदृढं स्थाप्य यत्नतः।
हुत्वा तु वैष्णवं ध्वाजं प्रत्येकं तु शताष्टकम्।।

देवस्य स्नपनं कृत्वा गरुडं स्नापयेद्बुधः।
पूर्वोक्तविधिना कृत्वा ध्वजारोहणमाचरेत्।।

**ज्ञा.१०५.१९६**

ध्वजपतनभग्नभेदहीनेषु ध्वाजं वैष्णवं व्याहृत्यन्तं हुत्वोत्सवम् आरभेत।

## ९.६.२७ ध्वजपूजालोपे प्रायश्चित्तम्

**य.४७.३७ - ३९**

ध्वजे पूजाविहीने तु उत्सवादिदिनादधः।
वैष्णवं ध्वजदैवत्यं शतमष्टोत्तरं यजेत्।।

कलशैः पञ्चविंशद्भिः स्नापयेद् गरुडं बुधः।
ध्वजदेवं सुपूज्यैव प्रभूतं च निवेदयेत्।।

एवं कृत्वा प्रयत्नेन नित्यपूजां समाचरेत्।
पूजायाश्चोक्तमार्गेण नित्यं रात्रौ बलिं क्षिपेत्।।

**नि.३६**

आरोपणदिनादूर्ध्वम् उत्सवान्तदिनादधः।
ध्वजपूजादिहीने च रात्रौ भूतबलिं तथा।।

सप्तभिः कलशैर्विंशत् स्नपनं सम्यगाचरेत्।
वैष्णवं ध्वजदैवत्यं संध्येशं दशकृद्यजेत्।।

पुनर्गरुडगायत्रीम् अष्टोत्तरशतं यजेत्।
महाभूतबलिं दद्यात् पश्चादुत्सवमारभेत्।।

प्रातः सन्ध्यार्चने हीने सायं द्विगुणमाचरेत्।
दिनद्वयमतीते तु ध्वाजान्तं मूर्तिभिर्युतम्।।

आज्येनैवासकृद्धुत्वा पुनः पूजां समाचरेत्।

**९.६.२८ अनुक्तध्वजदोषसामान्यानां प्रायश्चित्तम्**

**क्रि.२६.२०, २१**

अनुक्तेषु च दोषेषु प्रायश्चित्तं ध्वजस्य च।।

ध्वाजं च गारुडं चैव दशकृत्वो यजेत्पुनः।

**९.६.२९ ध्वजारोहणलोपे प्रायश्चित्तम्**

**नि.३६**

ध्वजारोहणपूर्वं हि उत्सवारम्भ इष्यते।
तस्मात्सर्वप्रयत्नेन उक्तेनारोहणं चरेत्।।

ध्वजस्यारोपणे हीने प्रायश्चित्तं विधीयते।
आलयाभिमुखे कुर्यात् कुण्डमौपासनस्यवत् (?)।।

आघारं विधिवद्धुत्वा परिस्तीर्य च पावकम्।
दिग्दैवत्यं चैव तथा प्राजापत्यं तथैव च।।

रौद्रं च वैष्वक्सेनं च ध्वजदैवत्यसंयुतम्।
वैष्णवं विष्णुसूक्तं च आज्येन जुहुयाद्बुधः।।

विधिना ध्वजमारोप्य उत्सवं सम्यगाचरेत्।

**स.७२.१, २**

अतः परं प्रवक्ष्यामि प्रायश्चित्तमथोत्सवे।
ध्वजारोहणहीनं चेत्प्रायश्चित्तं च कारयेत्।।

दिग्देवानामथाष्टानां मन्त्रान् सर्वाननुक्रमात्।
प्राजापत्यं च रौद्रं च विष्णुसूक्तं यजेद्बुधः।।

**क्रि.२६.१८, १९**

## ९.६.३० एकाहोत्सवादौ ध्वजारोहणे प्रायश्चित्तम्

**स.७२.३**

एकाहिकोत्सवे [1]तद्वदुत्सवे च दिनद्वये।
कृते तत्र ध्वजारोहे प्रायश्चित्तमथाचरेत्।।

## ९.६.३१ ध्वजारोहणानन्तरम् उत्सवाकरणे प्रायश्चित्तम्

**प्र.२७.२६१ - २६४**

ध्वजस्यारोहणं कृत्वा नाचरेद्यदि चोत्सवम्।
अज्ञानादर्थलोभाद्वा मासेऽन्यस्मिन् समाचरेत्।।

---

1. ध्वजारोहणलोपवत् (?)।

न कुर्याच्चेद् द्वितीये तु मासे कर्ता विनश्यति।
तस्मान्निष्कृतिमब्जाग्नौ हुत्वा तूत्सवमाचरेत्।।

वैष्णवं विष्णुसूक्तं च नृसूक्तं चैव गारुडम्।
ध्वाजं शान्तं च चक्रं च तथैवोत्सवदैवतम्।।

व्याहृत्यन्तं च हुत्वा तु वैष्णवान् पूज्य चाचरेत्।

## ९.६.३२ भेरीपतनादौ प्रायश्चित्तम्

**य.४७.२८ - ३०**

उत्सवे घोषणे भेर्याः पतनादिसमुद्भवे।।

चर्मभेदे च तत्काले यष्ट्यादौ पतिते तथा।
वादकानां च पतने हुत्वा वाद्याधिदैवतम्।।

नन्दीशं चैव हुत्वा तु शैषिकं च सुहूयते।
भेरीमन्यां प्रकल्प्यैव पूर्वोक्तं घोषणं चरेत्।।

**नि.३६**

घोषणे पतिते भेर्याः वादके पतितेऽपि च।
रज्जुच्छेदे तथा भेदे चर्मच्छेदे तथैव च।।

यष्टिपाते च दण्डे च वैष्णवाशनसंयुतम्।
गारुडं शैषिकं ध्वाजमाज्येन जुहुयात्तथा ।।

## ९.६.३३ भेरीताडनलोपे प्रायश्चित्तम्

**प्र.२७.३२८, ३२९**

भेरीताडनहीने च रौद्रं च व्याहृतीस्तथा।।

हुत्वा महाव्याहृतीश्च भेरीताडनमाचरेत्।

**वि.६८.४२०**

[अत्र महाव्याहृतिहोमो न विधीयते।]

**९.६.३४ ग्रामप्रदक्षिणभ्रमणकाले घोषणलोपे प्रायश्चित्तम्**

**नि.३६**

ग्रामप्रदक्षिणे काले घोषणेऽत्र विहीनके।
नित्याग्नौ वैष्णवं हुत्वा ध्वजदेवांश्च मूर्तिभिः।।

आज्येन चतुरावर्त्य हुत्वा घोषणमाचरेत्।
विनैव घोषणं चात्र ध्वजेऽप्यारोपिते सति।।

कुण्डे वा स्थण्डिले वापि शान्तिहोमं यजेद्बुधः।
मोहादज्ञानतो वापि उत्सवं कारयेद्यदि।।

कलशैः पञ्चविंशद्भिः स्नापयेद्देवमव्ययम्।
कुण्डं पूर्ववदुद्दिष्टं विष्णुसूक्तं सवैष्णवम्।।

श्रीसूक्तं च महीसूक्तं चक्रादीनां तथैव च।
आज्येन जुहुयात्तत्र परिस्तीर्य च पावकम्।।

नन्दीशं मूर्तिभिः साज्यचरुणा मूर्तिभिर्यजेत्।
महाहविः प्रभूतं वा देवेशाय निवेदयेत्।।

ग्रामे भूतबलिं दद्याद्घोषणं पूर्ववच्चरेत्।
पश्चादुत्सवमारभ्य कारयेदिति शासनम्।।

**य.४७.२३ - २५**

घोषणेन विहीनो यद्युत्सवः क्रियते हरेः।।

हुत्वा तु वैष्णवं ध्वाजं प्रत्येकं तु शताष्टकम्।
कलशैः पञ्चविंशद्भिः स्नापयेद्देवमव्ययम्।।

महाहविर्निवेद्यैव महाभूतबलिं ददेत्।
घोषणं पूर्ववत् कृत्वा चोत्सवं सम्यगाचरेत्।।

**ज्ञा.१०५.१९६**

घोषणे हीने ब्राह्मं प्राजापत्यं सौदर्शनमींकारादीन् दक्षिणाग्नौ जुहुयात्।

**९.६.३५ घोषणादूर्ध्वम् उत्सवाकरणे प्रायश्चित्तम्**

**य.४७.२० - २३**

घोषयित्वोत्सवे हीने सभ्यादीन् साधयेत्क्रमात्।
महाशान्तिं च हुत्वा तु पूर्वोक्तं होममाचरेत्।।

स्नपनं देवदेवस्य शताष्टकलशैश्चरेत्।
महाहविर्निवेद्यैव दक्षिणा च प्रदीयते।।

तद्ग्रामदेवतानां च बलिं द्विगुणमाचरेत्।
महाभूतबलिं दद्यान्मध्यरात्रौ विशेषतः।।

घोषणं पूर्ववत्कृत्वा चोत्सवं सम्यगाचरेत्।

**नि.३६**

घोषयित्वोत्सवे हीने तत्सर्वं नाशयत्युत।
तस्मात्सर्वप्रयत्नेन महाशान्तिं यजेत्पुनः।।

देवस्य स्नपनं कुर्यात् पूजयित्वा निवेदयेत्।
ब्राह्मणान् भोजयित्वा तु पश्चादुत्सवमाचरेत्।।

## ९.६.३६ ध्वजारोहणानन्तरं पुनर्घोषणे प्रायश्चित्तम्

**य.४७.२६ - २८**

ध्वजारोहे कृते पश्चाद्घोषणं चेत्पुनर्यदि।
वैष्णवं ध्वजदैवत्यं चक्रादीनां च हूयते।।

इन्द्रादीनां च हुत्वा तु देवस्य स्नपनं चरेत्।
तद्ध्वजं संव्यपोह्यैव ध्वजमन्यं प्रकल्पयेत्।।
घोषणं पूर्ववत्कृत्वा ध्वजारोहणमाचरेत्।

## ९.६.३७ उत्सवस्य क्रमव्यतिक्रमे प्रायश्चित्तम्

**य.४७.१ - ५**

अथोत्सवस्य वक्ष्यामि प्रायश्चित्तं तपोधनाः।
अज्ञानादर्थलोभाद्वा मोहाद्वा यत्प्रमादतः।।

तत्तद्दोषं समुद्दिश्य प्रायश्चित्तं प्रवक्ष्यते।
ग्रामादिषूत्सवं कुर्यात्पूर्वं रुद्रोत्सवं(वो?) भवेत्।।

पश्चाच्चैवोत्सवं विष्णोः कुर्याद् ग्रामाभिवृद्धये।
रुद्रोत्सवे कृते विष्णोः उत्सवे त्वकृते सति।।

व्याधिदुर्भिक्षचोराद्यैस्तद्ग्रामस्य च नाशनम्।
तद्दोषशमनार्थाय प्रायश्चित्तं च कारयेत्।।

महाशान्तिं च कृत्वान्ते विष्णोरुत्सवमाचरेत्।

**९.६.३८ उत्सवारम्भस्नपनलोपे प्रायश्चित्तम्**

**वि.६८.४२१**

उत्सवादौ स्नपने हीने वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, वारुणं च हुत्वा, शुद्धोदकैरभिषेचयेत्।

**प्र.२७.३४१, ३४२**

**स.७२.३३, ३४**

देवस्य स्नानहीने तु तोयमन्त्रेण वारुणैः।।

वैष्णवैरपि मन्त्रैश्च[1] स्नापयेच्च पुनस्तथा।

**क्रि.२६.१०८**

**९.६.३९ यागशालायां तोरणलोपे प्रायश्चित्तम्**

**प्र.२७.३४५**

तोरणानामलाभे तु हुनेद्दौवारिकान् मनून्।

**वि.६८.४२२**

**९.६.४० यागशालायां दर्भमाललोपे प्रायश्चित्तम्**

**प्र.२७.३४५**

हीनायां दर्भमालायाम् आर्षं हुत्वेतरा[2] क्रियात्।।

**वि.६८.४२२२**

---

1. जुहुयादित्यनुवर्तते।
2. उत्सवक्रियाम्

**९.६.४१ यागशालालङ्कारलोपे प्रायश्चित्तम्**

**वि.६८.४२२**

अलङ्कारहीने श्रीदैवत्यं च जुहुयात्।

**प्र.२७.३४६**

**९.६.४२ यज्ञशालायां कुम्भवेदिप्रमाणन्यूनतातिरेके प्रायश्चित्तम्**

**वि.६८.४२२**

यज्ञशालायां कुम्भवेद्यां प्रमाणहीनायाम् अधिकायां च वैष्णवमाग्नेयं भूमिदैवत्यं च जुहुयात्।

**प्र.२७.३४४**

**९.६.४३ कुम्भे अस्पृश्यस्पर्शे प्रायश्चित्तम्**

**क्रि.२६.७४, ७५**

कुम्भे स्पृष्टे श्वकाकाद्यैः अस्पृश्यैश्च तथैव च।।

प्रायश्चित्तं प्रतिष्ठोक्तं कृत्वाऽन्यं कुम्भमाहरेत्।

**९.६.४४ एककालमुत्सवलोपे प्रायश्चित्तम्**

**वि.६८.४२२**

प्रातःकाले बलिं निर्वाप्य, उत्सवे हीने वैष्णवं, वैष्वक्सेनं, गारुडं, तदुत्सवाधिदैवत्यं च हुत्वा साये द्विगुणमुत्सवं कारयेत्। साये हीने प्रातर्द्विगुणं वर्धयेत्।

एककालोत्सवश्चेत्, द्विकालं बलिं निर्वाप्य, सायाह्ने चोत्सवं कारयेत्। तत्कालातीतं पूर्वे वा कृतं चेत् पूर्ववत् कृत्वा उत्सवं कारयेत्।

**प्र.२७.३४६ - ३४९**

**य.४७.४७ - ५०**

एककालोत्सवे हीने वैष्णवं च सुहूयते।।

नरसूक्तसमायुक्तं देवानामाहुतीर्यजेत्।
ब्राह्मं रौद्रं च हुत्वा तु दिनादीनां च संयुतम्।।

इन्द्रादीनां च हुत्वा तु चक्रादीनां सुहूयते।
प्रातरुत्सवमारभ्य पश्चात्सद्य उत्सवं चरेत्।।

साये चोत्सवहीने तु वैष्णवं च सुहूयते।
कलशैः पञ्चविंशद्भिः स्नापयेद्देवमव्ययम्।।

**क्रि.२६.३६, ३७**

उत्सवं द्विगुणं केचित् प्रातर्हीने दिने दिने।
एककालोत्सवे हीने पूर्वोक्तं होममाचरेत्।।

उत्सवं च तथा कुर्याच्छेषं पूर्ववदाचरेत्।

**स.७२.१८**

एककालोत्सवे हीने पूर्वोक्तं[1] होममाचरेत्।
देवदेवस्य देव्योश्च सायंप्रातस्तथोत्सवे।।

**ज्ञा.१०६.१९७**

एककालोत्सवे हीने तद्दिनाधिपमभ्यर्च्य शान्तिं हुत्वा आरभेत। द्विकाले हीने द्विगुणमुत्सवमाचरेत्।

---

1. एकदिनोत्सवलोपोक्तम्

## ९.६.४५ एकदिनोत्सवलोपे प्रायश्चित्तम्

**स.७२.१५ - १७**

प्रत्येकस्मिन् दिने हीने तस्य कालोत्सवस्य तु।
हुत्वा पुरुषसूक्तेन चाज्यं षड्भिश्च वैष्णवैः।।

यद्देवाद्यैश्च कूष्माण्डैः ब्राह्मैरैन्द्रैश्च वारुणैः।
तदालयस्थदेवानां मूर्तिहोमं च हूयते।।

कलशैः स्नापयित्वैव यथाशक्ति निवेदयेत्।
पूर्वोक्तेन क्रमेणैव शेषं सम्यक् समाचरेत्।।

**य.४७.५१ - ५३**

अपरेऽथ दिने कुर्यादुत्सवं द्विगुणं भवेत्।
दिनेनैकेन हीने तु महाशान्तिं यजेत्ततः।।

सभ्ये च सर्वदैवत्यं हुत्वा चैव यथाविधि।
स्नापयेत्पञ्चविंशद्भिः प्रभूतं च निवेदयेत्।।

मुखवासं च दत्वा तु पुनरुत्सवमाचरेत्।

## ९.६.४६ दिनद्वयोत्सवलोपे प्रायश्चित्तम्

**य.४७.५३, ५४**

दिनद्वयोत्सवे हीने शेषं सर्वं समाचरेत्।।

हीनोत्सवस्य शान्तिं च पूर्वोक्तविधिना चरेत्।
उत्सवं च पुनः कृत्वा घोषणादि तथा भवेत्।।

## ९.६.४७ द्विगुणहविरर्चनलोपे प्रायश्चित्तम्

**स.७२.१८ - २०**

देवदेवस्य देव्योश्च सायं प्रातस्तथोत्सवे।।

हविषि द्विगुणे हीने हीने च द्विगुणार्चने।
वैष्णवं विष्णुसूक्तं च हुत्वा तत्र चतुर्गुणम्।।

अर्चयित्वा हविश्चापि सम्यग्दद्याच्चतुर्गुणम्।

**क्रि.२६.६५ - ६७**

**वि.६८.४२३**

देवस्य द्विगुणार्चने हीने हविर्निवेदने च हीने वैष्णवं शान्तिं हुत्वा द्विगुणमभ्यर्च्य हविर्निवेदयेत्।

**प्र.२७.३७३, ३७४**

## ९.६.४८ विहितहोमलोपे प्रायश्चित्तम्

**वि.६८.४२३**

यथोक्तहोमे हीने वैष्णवं विष्णुसूक्तं पुरुषसूक्तं त्रयस्त्रिंशत्कृत्वो हुत्वा यथोक्तं जुहुयात्।

**प्र.२७.३७४, ३७५**

**क्रि.२६.७१**

आवाह्य पात्रे पुष्पेषु वीशशान्तौ सुसंन्यसेत्।
होमहीने तु जुहुयात् द्विगुणं तु यथाविधि।।

**स.७२.२०**

मूर्तिहोमे तथा हीने द्विगुणं जुहुयात्क्रमात्।

## ९.६.४९ नित्यादन्यत्राग्नौ होमे प्रायश्चित्तम्

**क्रि.२६.७८ - ८०**

नित्याग्निव्यतिरिक्ताग्निर्यदि कुण्डे प्रणीयते।।

उत्सवो निष्फलस्तस्मादग्निं नित्यं प्रणीय च।
हुत्वा तद् द्विगुणं प्रोक्तं पुनश्चोत्सवमाचरेत्।।
(आतीर्थदिवसादग्निमविच्छिन्नं च रक्षयेत्।)

## ९.६.५० पञ्चद्रव्यवैकल्ये प्रायश्चित्तम्

**य.४७.१२५, १२६**

[1]मोहादज्ञानतो वापि कारयेदुत्सवं यदि।।

आभिचारिकमित्युक्तं शान्तिस्तत्रैव हूयते।
देवस्य स्नपनं कृत्वा पश्चादुत्सवमाचरेत्।।

## ९.६.५१ अग्निपूजालोपे प्रायश्चित्तम्

**य.४७.१२७**

अग्निपूजाविहीनं तु कारयेदुत्सवं यदि।
अग्निपूजां च कृत्वा तु पश्चादुत्सवमाचरेत्।।

---

1. पञ्चद्रव्यं विनेत्यध्याह्रियते

## ९.६.५२ बलिद्रव्यबलिपात्रपतनादौ प्रायश्चित्तम्

**वि.६८.४२२, ४२३**

बलिद्रव्ये, पात्रे वा, भूमौ पतिते, भिन्ने, नष्टे वा पूर्ववत्[1] प्रायश्चित्तं हुत्वा, भूतपीठे बलिशेषं (तदनुक्तस्थाने बलिशेषं निर्वपेच्चेत्, वैष्णवं, अक्षहन्तृमन्त्रं, वैष्वक्सेनं, गारुडं सौदर्शनं च हुत्वा, भूतपीठे बलिशेषं) क्षिपेत्।

**प्र.२७.३७०, ३७१**

## ९.६.५३ अन्नबलिपतने प्रायश्चित्तम्

**स.७२.४७ - ५०**

पतितेऽन्नबलौ तद्वदर्घ्ये वापि बलौ पुनः।
देवदेवं समभ्यर्च्य हविः सम्यङ्निवेद्य च।।

बलिरक्षकमभ्यर्च्य होमं च जुहुयाद्वसोः।
जुह्वादिषु च पात्रेषु सङ्गृह्यैकं स्रुवं विना।।

धारयाज्यस्य होतव्यं स्वाहाकारं विनैव तु।
सूक्तैश्च पञ्चभिश्चैव वसोर्धाराहुतिः स्मृता।।

पूर्ववद्बलिमासाद्य चार्चयित्वा समुद्धरेत्।

**क्रि.२६.११७, ११८**

**वि.६८. ४२४**

भूमौ पतिते अन्नार्घ्यपुष्पबलौ पूर्ववद्बलिमापाद्य वैष्णवं, बलिरक्षकदैवत्यं च जुहुयात्।

---

1. बलिलोपवत्।

**य.४७.५८, ५९**

बलौ भूतबलौ चैव भूम्यां च पतिते यदि।
बलिरक्षकमन्त्रं च चक्रादीनां सुहूयते।।

तद्बलिं विसृजेद्विद्वान् बलिमन्यं प्रकल्पयेत्।
पूर्ववद्बलिमापाद्य सह चक्रादिना नयेत्।।

**ज्ञा.१०६.१९७**

बलिपतने बलिरक्षकमभ्यर्च्य ध्वाजं वैष्णवं हुत्वा बलिमुद्धरेत्।

**खि.३७.२९**

बलौ भूमौ निपतिते येन केनापि हेतुना।
हुनेच्छान्त्यै वैष्णवं तु पुनः संसाधयेद्बलिम्।।

**नि.३६**

पतिते भूतबलौ भूम्यां क्रिमिकेशादिभिर्युतम्।
अस्पृश्यस्पर्शनं चेत्तु तद्द्रव्यं विसृजेत्पुनः।।

बलिमन्यं समासाद्य दद्याद्भूतबलिं क्रमात्।
अज्ञानात् कारयेच्चेत्तु तद्बलीनात्र चाचरेत् (?)।।

तदालयगतानां तु समीशानां च मूर्तिभिः (?)।
बलिरक्षकसंयुक्तम् आज्येन जुहुयात्पुनः।।
चक्रादिभिस्समायुक्तं पुनर्भूतबलिं ददेत्।
आराधिते बलौ तत्र क्रिमिकेशादिभिर्युतम्।।

भूम्यादिपतिते भिन्ने तद्बलिं विसृजेत् पुनः।
तद्बहिः कलशैः स्नाप्य देवेशं च तथैव च।।

वैष्णवं विष्णुसूक्तं च बलिरक्षकसंयुतम्।
तथा चक्रादिभिर्युक्तं हुत्वा चाज्यं चरुं ततः।।

पूर्ववद्बलिमाराध्य पश्चाच्छेषं समाचरेत्।

### ९.६.५४ बलिदाने देवाह्वानव्यत्ययादिप्रायश्चित्तम्

**प्र.२७.३४९ - ३५३**

दिग्देवतास्समावाह्य प्रथमेऽहनि पूजयेत्।।

प्राच्यादि बलिदानं स्यात् ईशानान्तं प्रदक्षिणम्।
देवाह्वाने व्यत्ययस्स्यात् व्यतीहारोऽथवा भवेत्।।

पूर्वोक्तां निष्कृतिं कृत्वा द्विगुणं तु बलिं ददेत्।
ब्रह्मणश्च दिगीशानां बलिदानं तु नैत्यिकम्।।

अदाने निष्कृतिं कृत्वा पूर्वोक्तं षड्गुणं बलिः।
चतुष्पथादिदेवानां वृक्षादीनामथेच्छया।।

प्रथमावाहनादर्वाक् व्यत्यये पूर्वनिष्कृतिः।

### ९.६.५५ बलिदाने वास्तुशुद्धिलोपे प्रायश्चित्तम्

**प्र.२७.३५३ - ३५५**

प्रथमं वास्तुशुद्धिः स्याद्यत्र वै दीयते बलिः।।

आन्तं शुद्ध्यन्ति रथ्यास्ताः शुद्ध्यन्ति समये पुनः।
अकृतायां वास्तुशुद्धौ दद्याद्रथ्यासु चेद्बलिम्।।

शान्तिं कृत्वा तु पूर्वोक्तां वास्तुशुद्धिं पुनर्बलिः।

## ९.६.५६ बलिदाने अकालकृतप्रायश्चित्तम्

**प्र.२७.३५६, ३५७**

अकाले बलिदानं स्यादसुरप्रीतिवर्धनम्।।

अकाले तु बलिं दत्वा काले तु त्रिगुणं बलिः।

## ९.६.५७ बलिदेशादन्यत्र देवभ्रमणे प्रायश्चित्तम्

**प्र.२७.३५७, ३५८**

बलिभ्रमणदेशः स्याद् देवस्य भ्रमणाय हि।।

नान्यत्र चर्या देवस्य लघुप्रोक्षणमन्यथा।

## ९.६.५८ अमन्त्रकबलिदानादौ प्रायश्चित्तम्

**प्र.२७.३६४ - ३६६**

बलावमन्त्रकं क्षिप्ते संक्षिप्ते विधिवर्जिते।
भक्षिते चानुलोमाद्यैः पूर्वोक्तां निष्कृतिं चरेत्।।

बलौ पर्युषितेऽत्युष्णे तथा चैवानिवेदिते।
निवेदनात् प्रागर्वाग्वा दृष्टे शूद्रादिभिर्बलौ।।

पूर्वोक्तां निष्कृतिं कृत्वा सर्वत्र द्विगुणं बलिः।

## ९.६.५९ प्रमाणहीनबलिनिवेदने प्रायश्चित्तम्

**नि.३६**

बलिप्रमाणे हिने च बिम्बानां स्था विधिः।
पञ्चाशत्कलशैः स्नाप्य देवेशं च विशेषतः।।

पूर्वोक्तैरेव विज्ञाते स्पर्शनादिषु सत्सु वै।
निवेदितो --------- हविष्यपि निवेदिते।।

त्रियहं च महाशान्तिं पञ्चाहं च तथैव च।
शेषक्रियाहि यत्सर्वं यथापूर्वं तथा चरेत्।।

द --------------- पन्ने चेवादि निवेदिते।
शुद्धोदस्नान ---------------------------।।

**९.६.६० बलिभ्रमणे चण्डालादिप्रवेशप्रायश्चित्तम्**
**क्रि.२६.८६ - ८९**

बलिभ्रमणवेलायां चण्डालः सूतिकाऽथवा।
प्रमादात् प्रविशेत्सद्यः चक्रादीनालयं नयेत्।।

चक्रशान्तौ च वीशं च बलिबेरं पृथक्पृथक्।
संस्नाप्य सप्तकलशैः प्रोक्षयित्वा बलिं तथा।।

चक्रवीशामितानां च मन्त्रैरपि च वैष्णवैः।
बलिरक्षकमन्त्राभ्यां शतमष्टोत्तरं यजेत्।।

पर्यग्निपञ्चगव्याभ्यां शोधयित्वाथ वीथिकम्।
दत्वा शिष्टबलिं पश्चात् पुनः कर्म समापयेत्।।

**९.६.६१ बलिभ्रमणे चण्डालादिसंनिकर्षे प्रायश्चित्तम्**
**नि.३६**

बलिभ्रमणकालेऽस्मिन् यथापूर्वं तथाचरेत्।
तत्काले सन्निकृष्टे तु चण्डालादिभिरेव च।।

तच्छीघ्रमालयं गत्वा महाशान्तिं सुहूयते।
जलाशये बलिं क्षिप्त्वा चक्रादीनां विशेषतः।।

पञ्चाशत्कलशैर्देवं पञ्चविंशद्भिरेव च।
बलिबिम्बं यदि स्याद्वै सप्तभिः कलशैरपि।।

स्नापयित्वा समभ्यर्च्य हवींषि विनिवेदयेत्।
ब्राह्मणान् भोजयित्वाऽथो शक्तितो दक्षिणां ददेत्।।

पूर्ववद्बलिमावाह्य प्रणामं सम्यगाचरेत्।
अतीव सन्निकृष्टेऽपि वाहकस्पर्शनादिभिः।।

महाशान्तिं त्र्यहं हुत्वा प्रतिष्ठादीनि पूर्ववत्।
एकाहं वा महाशान्तिम् उत्सवं पुनरारभेत्।।

**९.६.६२ उत्सवे नित्यबलिलोपे प्रायश्चित्तम्**

**य.४७.४० - ४२**

हीने बलावथैकस्मिन्सर्वदेवाहुतीर्यजेत्।
पश्चाद्रात्रौ बलिं कुर्याद् द्विगुणं बलिमाचरेत्।।

एवं संवर्धयित्वा तु बलिं सम्यक्समाचरेत्।
तद्घोषणदिने चैव हीने नित्यबलौ तथा।।

सर्वदेवाहुतीर्हुत्वा विष्णुसूक्तं सवैष्णवम्।
देवस्य स्नपनं कुर्याच्छताष्टकलशैः पुनः।
पूर्वोक्तेन विधानेन घोषणादि तथाचरेत्।।

**नि.३६**

लये स्थाप्य शान्तिं कुर्यात् त्वरान्वितः।

वैष्णवं विष्णुसूक्तं च व्याहृत्यन्तं प्रति प्रति।।

हुत्वा श्रीभूमिदैवत्यं चक्रादीनां तथैव च।
ब्राह्मं रौद्रं तथेन्द्रादिदिग्देवानां क्रमाद्बुधः।।

तद्दिनाधिपदैवत्यं पूर्वमाज्येन हूयते।
देवस्य स्नपनं कुर्यात्पञ्चाशत्कलशैरपि।।

अर्चयित्वा निवेद्यैव पुरुषसूक्तेन लयेत् (?)।
पुनर्भूतबलिं दद्यात् पश्चादुत्सवमाचरेत्।।

## ९.६.६३ बलिं विना उत्सवाचरणे प्रायश्चित्तम्

**य.४७.५६, ५७**

बलिहीनोत्सवं कुर्याद्वैष्णवं च सुहूयते।।

बलिरक्षकदैवत्यं दिनदैवत्यमेव च।
बलिं प्रक्षिप्य तत्काले पुनरुत्सवमाचरेत्।।

**प्र.२७.३६९, ३७०**

बलिप्रदानहीने तु वैष्णवं बलिरक्षकम्।।

हुत्वा तु निष्कृतिं कुर्यात् बलिदानं पुनस्तदा।

**वि.६८.४२२**

बलिप्रदाने हीने बलिरक्षकदेवत्यं दिग्दैवत्यं च हुत्वा, तथैव बलिप्रदानं कारयेत्।

**नि.३६**

तथैव बलिहीने तु बलिरक्षकसंयुतम्।

तदालयगतानां तु सन्धीशानां च मूर्तिभिः।।

आज्येन जुहुयात्तत्र पुनर्भूतबलिं ददेत्।

**९.६.६४ सन्धिबलिलोपे प्रायश्चित्तम्**

**स.७२.५०, ५१**

सन्धौ च बलिहीनं चेत्तत्सन्ध्याधिपमूर्तिना।।

जुहुयाद्वैष्णवैश्चैव व्याहृत्यन्तं यथाक्रमम्।

बलिं पश्चात् क्षिपेत् तत्र पूर्वोक्तेन क्रमेण वै।।

**ज्ञा.१०६. १९७**

**खि.३७.३३**

सन्धीशबलिहानौ तु तन्मन्त्रैश्शान्तिमाचरेत्।।

**स.७२.२२, २३**

ग्रामे बलौ तथा हीने तद्देवस्यैव मूर्तिभिः।।

जुहुयाद्वैष्णवं चापि व्याहृत्यन्तं प्रति प्रति।

बलिं पश्चात्क्रमेणैव विधिना निर्वपेद्बुधः।।

**क्रि.२६.८०, ८१**

**९.६.६५ उत्सवानुक्तदेवबलिं विना उत्सवाचरणे प्रायश्चित्तम्**

**नि.३६**

उत्सवानुक्तदेवानां तत्तत्काले बलिं ददेत्।

तेषां तत्र विहीने च उत्सवं कारयेद्यदि।।

तत्तद्दैवत्यमन्त्रं च विष्णुसूक्तं च वैष्णवम्।

प्रत्येकं व्याहृतीर्हुत्वा मूर्तिमन्त्रैश्च हूयते।।

पूजयित्वा निवेद्यैव पश्चादुत्सवमाचरेत्।

### ९.६.६६ उत्सवे बलिभोक्तृविपर्यासे प्रायश्चित्तम्

**प्र.२७.३६२, ३६३**

श्वसूकरादिभिर्दुष्टैः न भक्ष्यो बलिरुच्यते।

बलिभुग्वायसः प्रोक्तो गोमुरव्या मेध्यजन्तवः।।

विपरीते महान् दोषस्तन्मन्त्रैर्हावयेच्छतम्।

बलिशेषं न शूद्रोऽद्यादर्चको बलिशेषभाक्।।

### ९.६.६७ बलिशेषप्रक्षेपस्थानविपर्यासे प्रायश्चित्तम्

**प्र.२७.३७२, ३७३**

बलिशेषमनुक्ते तु स्थाने बुद्ध्या तु निर्वपेत्।

वैष्णवं चाक्षहमनुं वैष्वक्सेनं च गारुडम्।।

सौदर्शनं च हुत्वैव भूतपीठे बलिं क्षिपेत्।

### ९.६.६८ वास्त्वन्तः शवपाते बलिभ्रमणविवेकः

**प्र.२७.३५५, ३५६**

अन्तश्शवे वास्तुनि तु न बलिभ्रमणं चरेत्।।

शवमुद्धृत्य पश्चात्तु पर्यग्निकरणं भवेत्।

### ९.६.६९ रात्रिबलेः पूर्वं शवपाते प्रायश्चित्तम्

**नि.३६**

रात्रौ भूतबलेः पूर्वं मरणे सति वै बुधः।।

तच्छीघ्रं संव्यपोह्यैव पुण्याहमपि वाचयेत्।

पञ्चगव्यैः समभ्युक्ष्य ततो भूतबलिं ददेत्।।

### ९.६.७० वीशादिद्विगुणार्चनलोपे प्रायश्चित्तम्

**क्रि.२६.६७, ६८**

हविषो द्विगुणे हीने वीशशान्तानपायिनाम्।।

द्विगुणं तान्समभ्यर्च्य द्विगुणं च निवेदयेत्।

### ९.६.७१ चक्रादिहविर्निवेदनलोपे प्रायश्चित्तम्

**स.७२.२१, २२**

चक्रादीनां हविर्हीने तन्मन्त्रैर्वैष्णवैर्यजेत्।

द्विगुणं तान्समभ्यर्च्य द्विगुणानि निवेदयेत्।।

उत्सवं चक्रहीने च नाचरेदिति शासनम्।

### ९.६.७२ महाहविर्लोपे प्रायश्चित्तम्

**स.७२.७८ - ८१**

महाहविर्विहीने च विष्णुसूक्तेन वैष्णवैः।

हुत्वा पुरुषसूक्तेन प्राजापत्येन हूयते।।

सर्वोपचारैर्देवेशमर्चयित्वा विधानतः।

महाहविर्निवेद्यैव क्षमस्वेति प्रणम्य च।।

विष्णोर्नुकादिभिर्देवं पुरुषसूक्तेन चोदयेत्।
सर्वदोषस्य शान्त्यर्थं पुरुषसूक्तेन वैष्णवैः।।

विष्णुसूक्तेन देवस्य पादे पुष्पाञ्जलिं ददेत्।
**क्रि.२६.१५० - १५२**

**९.६.७३ चक्रवीशामितार्चनादिलोपे प्रायश्चित्तम्**

**वि.६८.४२३**

चक्रवीशामितानां ----------------चार्चनं हविर्निवेदनं च हीनं चेत्, वैष्णवं विष्णुसूक्तं पुरुषसूक्तं वैष्वक्सेनं गारुडं सौदर्शनं च हुत्वा पुनरभ्यर्च्य निवेदयेत्।

**प्र.२७.३७५ - ३७७**

**९.६.७४ वीशादिपूजालोपे प्रायश्चित्तम्**

**क्रि.२६.७५ - ७८**

वीशानपायिपङ्क्तीशशान्तानां यागमण्डपे।।

हीनेऽर्चने तु तन्मन्त्रैस्तद्दिगग्नौ जुहोति च।
त्रेताग्निर्यदि शान्तस्य यजेदाहवनीयके।।

सर्वेषां जुहुयात्सभ्ये मन्त्रानेकाग्निकल्पने।
द्विगुणं च समभ्यर्च्य द्विगुणं च निवेदयेत्।।

अतीतदिवसाद्येवं प्रायश्चित्तं समाचरेत्।

## ९.६.७५ कुम्भदेवार्चनादिलोपे प्रायश्चित्तम्

**वि.६८.४२३**

कुम्भदेवानां चार्चनं हविर्निवेदनं च हीनं चेत् वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, वैष्वक्सेनं, गारुडं, सौदर्शनं च हुत्वा पुनरभ्यर्च्य निवेदयेत्।

**क्रि.२६.७२ - ७४**

हीने कुम्भस्थदेवानां सायं प्रातस्तथार्चने।
एकादशोपचारेषु हीनेषु च तदर्चने।।

कारयेदर्चनाहीनप्रायश्चित्तोक्तनिष्कृतिम्।
कुम्भस्थानां च देवानां नामभिश्च यजेत्पुनः।।

पुनर्द्विगुणमभ्यर्च्य द्विगुणं च निवेदयेत्।

## ९.६.७६ देवालङ्कारलोपे प्रायश्चित्तम्

**प्र.२७.३७७, ३७८**

देवालङ्करणे हीने श्रीदैवत्यं च वैष्णवम्।।

हुत्वालङ्कारमासाद्य विधिना भूषयेद् गुरुः।

**वि.६८.४२३**

[अत्र वैष्णवश्रीदैवत्यहोममात्रं विधीयते। ]

**स.७२.२४**

देवस्याभरणैर्हैमैर्बहुवर्णाम्बरैरपि।
अलङ्कारविहीने तु श्रीसूक्तं वैष्णवं यजेत्।।

**क्रि.२६.९५, ९६**

**९.६.७७ पुष्पादिभिर्देवालङ्करणलोपे प्रायश्चित्तम्**

**स.७२.२५ - २७**

सुगन्धैर्बुहुभिः पुष्पैर्माल्यैरपि विशेषतः।
देवालङ्कारहीने तु महीसूक्तेन वैष्णवैः।।

रथरङ्गविहीने तु शिबिकां वाऽथ कारयेत्।
शिबिकायां विहीनायां हीनेऽलङ्करणे तथा।।

हविषि द्विगुणे हीने चोत्सवं नाचरेद्बुधः।

**क्रि.२६.९६ - ९८**

**९.६.७८ यानालङ्करणलोपे प्रायश्चित्तम्**

**स.७२.२७**

यानेऽलङ्कारहीने तु गारुडं वैष्णवं यजेत्।।

**क्रि.२६.९९**

**९.६.७९ ध्वजादिलोपे प्रायश्चित्तम्**

**स.७२.२८**

ध्वजादिषु विहीनेषु ध्वजमन्त्रेण वैष्णवम्[1] ।

**क्रि.२६.९९**

**९.६.८० नृत्तगेयलोपे प्रायश्चत्तम्**

**स.७२.२८**

नृत्तगेयविहीने तु रौद्रं ब्राह्मं च वैष्णवम्।।

**क्रि.२६.१००**

---

1. यजेदित्यनुवर्तते

**वि.६८.४२३**

नृत्ते गेये च हीने वैष्णवं रौद्रम्।

**प्र.२७.३८०**

**ज्ञा.१०६.१९७**

नृत्तगेयवाद्यालङ्कारयानाद्यन्यतमहीने ब्राह्मं प्राजापत्यं गारुडं विष्वक्सेनं वैष्णवान्तं हुत्वा सम्यक् कुर्यात्।

**९.६.८१ स्तोत्रलोपे प्रायश्चित्तम्**

**वि.६८.४२३**

स्तोत्रे हीने ब्राह्मं सारस्वतं ------------- जुहुयात्।

**प्र.२७.३८०**

**स.७२.३१**

स्तोत्रध्वनिविहीने तु दिग्दैवत्यं च वैष्णवम्।

**क्रि.२६.१०३**

**९.६.८२ भक्तपरिवृतिलोपे प्रायश्चित्तम्**

**वि.६८.४२३**

भक्तैः परिवृतौ हीन[1] वारुणं वैष्णवं वैष्वक्सेनं च ------------ जुहुयात्।

**प्र.२७.३८१**

**स.७२.३२**

यजेद्भक्तजने हीने वैष्वक्सेनं च वैष्णवम्।।

1. हीनायां (?)

### ९.६.८३ श्वेतच्छत्रादिलोपे प्रायश्चित्तम्

**वि.६८.४२३**

छत्रपिञ्छादौ हीने वैष्णवं सौम्यं --------------जुहुयात्।

**स.७२.२९**

श्वेतच्छत्रादिहीने तु सौम्यवारुणवैष्णवान्[1] ।

**क्रि.२६.१००**

**प्र.२७.३८१**

वैष्णवं शान्तदैवत्यं हीने पिञ्छादिके तथा।।

### ९.६.८४ चामरादिलोपे प्रायश्चित्तम्

**वि.६८.४२३**

चामरादौ हीने वैष्णवं, हवीरक्षकदेवत्यं च जुहुयात्।

**प्र.२७.३८२**

### ९.६.८५ परिच्छदलोपे प्रायश्चित्तम्

**स.७२.२९**

अन्यपरिच्छदे हीने श्रीमन्त्रं वैष्णवं यजेत्।।

**क्रि.२६.१०१**

---

1. यजेदित्यग्रिमेणान्वेति

## ९.६.८६ गन्धधूपलोपे प्रायश्चित्तम्

**क्रि.२६.१०१, १०२**

गन्धधूपविहीने तु बार्हस्पत्यं सवैष्णवम्।।
जुहुयादार्षकैर्मन्त्रैः ब्राह्ममन्त्रसमन्वितम्।

**स.७२.३०**

गन्धधूपविहीने तु बार्हस्पत्यं च वैष्णवम्।

**ज्ञा.१०६.१९७**

धूपहीने बार्हस्पत्यम् (जुहुयात्)।

## ९.६.८७ दीपलोपे प्रायश्चित्तम्

**स.७२.३०**

दीपे न्यूने तथा सौरमाग्नेयं वैष्णवं यजेत्।।

**क्रि.२६.१०२**

**ज्ञा.१०६.१९७**

दीपहीने अग्निसूक्तं हुत्वा आग्नेयं (जुहुयात्)।

## ९.६.८८ आचार्यादिलोपे प्रायश्चित्तम्

**क्रि.२६.१०३, १०४**

आचार्यादिषु हीनेषु बार्हस्पत्यं सवैष्णवम्।।

जुहुयादार्षकैर्मन्त्रैर्ब्राह्ममन्त्रसमन्वितम्।

**स.७२.३१, ३२**

आचार्यऋत्विजां हीने बार्हस्पत्यं च वैष्णवम्।।

जुहुयादार्षकैर्मन्त्रैर्ब्राह्मणान् सुसमर्चयेत्।

### ९.६.८९ परिजनलोपे प्रायश्चित्तम्

**क्रि.२६.१०७**

हीने परिजने हुत्वा विष्णुसूक्तं सवैष्णवम्।

### ९.६.९० प्रदक्षिणलोपे प्रायश्चित्तम्

**स.७२.३३**

क्रमात्प्रदक्षिणे हीने विष्णुसूक्तेन वै यजेत्।

**क्रि.२६.१०७**

### ९.६.९१ उत्सवान्तार्चनालोपे प्रायश्चित्तम्

**क्रि.२६.१११ - ११३**

उत्सवान्तेऽर्चनाहीने तथा हीने हविष्यपि।।

हुत्वा तं वैष्णवं मन्त्रं द्विगुणं च समर्चयेत्।
द्विगुणं च हविर्दद्यात् क्षमस्वेति प्रणम्य च।।

प्रायश्चित्तावसाने तु पूर्ववच्छेषमाचरेत्।

**स.७२.३४, ३५**

### ९.६.९२ अर्चनकालन्यूनतादौ प्रायश्चित्तम्

**स.७२.३६**

काले न्यूने विपर्यासे कालेऽतीते ततस्तथा।
जुहुयाद्वैष्णवैः षड्भिराज्यमष्टशतं बुधः।।

**९.६.९३ उत्सवे गौणमुख्यव्यवस्थायां गौणमुख्यदोषे प्रायश्चित्तम्**

**स.७२.३७**

गौणस्य च तथा न्यूने गौणेन विधिना तथा।
मुख्यस्य तु तथा हीने मुख्येन स्थापयेद्विभुम्।।

**क्रि.२६.११६**

**९.६.९४ अलङ्कारैकदेशन्यूनतायां प्रायश्चित्तम्**

**स.७२.४०**

अलङ्कारैकदेशेऽपि न्यूने शान्तिं तथैव च।

**९.६.९५ उत्सवे कालातिक्रमे प्रायश्चित्तम्**

**क्रि.२६.११३, ११४**

कालातीते तु जुहुयाच्छतं ब्राह्मं च वैष्णवम्।।
मिन्दाहुती च विच्छिन्नं विष्णुसूक्तं यजेत्तथा।

**स.७२.४५, ४६**

काले व्यतिक्रमे हीने प्रायश्चित्तं यजेद्बुधः।
आघारं विधिवद्धुत्वा नित्यहोमाग्निकुण्डके।।

तस्य शान्तिः सुहोतव्या वैष्णवं ब्राह्मसंयुतम्।
मिन्दाहुतिं च विच्छिन्नं वैष्णवं च यजेत्ततः।।

**ज्ञा.१०६.१९७, १९८**

कालातीते ब्राह्मं वैष्णवं (जुहुयात्)। ------------ तत्कालातीते ब्राह्मं वैष्णवान्तं जुहुयात्। अतः समानीयाराधयति। सूरिषु ब्राह्मं वैष्णवं बार्हस्पत्यं सारस्वतं हुत्वा अभिपूजयेत्।

### ९.६.९६ उत्सवे आशौचिद्विजात्यादिभी रथादिस्पर्शे प्रायश्चित्तम्

**नि.३६**

आशौचवद् द्विजान्यैश्च रथादिस्पर्शने सति।
कुशाद्भिः प्रोक्ष्य देवेशम् आरोप्योत्सवमाचरेत्।।

तक्षकस्पर्शने चैव प्रक्षाल्याद्भिर्विशेषतः।
तस्यैवाधिपदैवत्यमाज्येनैवाष्टकैर्यजेत्।।

तत्रैवाधिपमावाह्य अर्चयित्वा हरिं प्रभुम्।
तदारोप्योत्सवं कुर्यात् चण्डालादिस्पर्शने सति।।

क्षालयित्वा जलेनैव वास्तुहोमं सुहूयताम्।
पर्यग्निं कारयित्वैव प्रोक्षयेत्पञ्चगव्यकैः।।

तस्यैवाधिपदैवत्यं विष्णुसूक्तं च वैष्णवम्।
प्रत्येकं व्याहृतीर्हुत्वा शेषं पूर्ववदाचरेत्।।

### ९.६.९७ उत्सवे अनर्हैः रथस्थभगवद्बिम्बस्पर्शे प्रायश्चित्तम्

**नि.३६**

बिम्बसंस्पर्शने पञ्चविंशतिः कलशैरपि।
देवस्य स्नपनं कुर्यात् महाशान्तिं क्रमाद्बुधः।।

आज्येन विष्णुगायत्रीं शतमष्टोत्तरं यजेत्।
पूजयित्वा यथान्यायं हविर्भिः सन्निवेदयेत्।।

हुत्वा पुरुषसूक्तेन पुनरुत्सवमाचरेत्।

### ९.६.९८ यजमानादिनाशे प्रायश्चित्तम्

**प्र.२७.२४७ - २४९**

आचार्ये यजमाने वा पूजकेन्यपदार्थिनि।।

नष्टे सद्यस्तदान्यं तु वरयित्वा समाचरेत्।
न दैवं प्रतिबध्नाति कार्यं यत् कर्म मानुषम्।।

देवेशमनुमान्याथ महाशान्तिं तु पञ्चके।

### ९.६.९९ उत्सवे अनर्हैः भगवदारूढरथस्पर्शे प्रायश्चित्तम्

**नि.३६**

सूतकप्रेतकाशौचद्विजार्धे ? तद्विशेषतः।
देवरे(दे?)वसमायुक्तस्यन्दने स्पर्शने सति।।

सप्तभिः कलशैः स्नाप्य पुण्याहं वाचयेत् ततः।
तस्यैवाधिपदैवत्यं शान्तिं हुत्वोत्सवं चरेत्।।

तस्मिन् वाहकसंस्पृष्टे पूर्ववत् स्नपनं चरेत्।
गारुडं शान्तिकं हुत्वा कारयेदुक्तवत् क्रियाम्।।

### ९.६.१०० उत्सवे ऋत्विगाचार्यादिसंक्षोभे प्रायश्चित्तम्

**ज्ञा.१०६.१९७**

ऋत्विगाचार्यादीनां सङ्क्षोभे सप्तर्षिदैवत्यं वैष्णवान्तं जुहुयात्।

### ९.६.१०१ उत्सवे ऋत्विगाचार्यसंक्षोभादौ प्रायश्चित्तम्

**क्रि.२६.१३३, १३४**

ऋत्विगाचार्य सङ्क्षोभे भर्त्सने शपने तथा।।

केनचिद्धनने तेषां चतुर्दशभिरार्षकैः।
षड्भिश्च वैष्णवैर्हुत्वा पुनः कर्म प्रवर्तयेत्।।

**स.७२.६४, ६५**

[अत्र 'शपने' इत्यस्य 'हनने' इत्यस्य च स्थाने 'पतने' इत्येव दृश्यते।]

## ९.६.१०२ उत्सवे चक्रादिपतने प्रायश्चित्तम्

**ज्ञा.१०५.१९६**

चक्रामितगरुडादिपतने गारुडं वैष्णवं सौदर्शनं वैष्वक्सेनं सौरं सौम्यं वैष्णवं जुहुयात्।

## ९.६.१०३ उत्सवे तीर्थलोपे प्रायश्चित्तम्

**य.४७.५५, ५६**

पर्याप्ते चोत्सवे यत्र तीर्थे चैव विहीनके।
हीनोत्सवस्य शान्तिं च पूर्वोक्तविधिना चरेत्।।

घोषणाद्युत्सवं कुर्यात्पश्चात् तीर्थं समाचरेत्।

## ९.६.१०४ औत्सवेतरबिम्बे उत्सवाचरणे प्रायश्चित्तम्

**य.४७.६०, ६१**

उत्सवार्थं तु यद्बिम्बं तद्बिम्बे चोत्सवं चरेत्।
(बिम्बेऽन्ये(?) चोत्सवं कुर्याद्धुनेदुत्सवशान्तिकम्।।

कृत्वा शान्तिं विधानेन पुनरुत्सवमाचरेत्।
उत्सवं चैव तत्सर्वमौत्सवे तु समाचरेत्।।)

## ९.६.१०५ अन्यालयस्योत्सवार्थम् औत्सवबिम्बस्य बहिर्गमने प्रायश्चित्तम् य.४७.६२ - ७०

अन्यालयस्योत्सवार्थमालयस्य बहिर्गते।
तदुत्सवे विहीनेपि कश्चिद्देवगतेपि वा।।

तदालयगते चैव क्षिप्रं शान्तिं च कारयेत्।
तद्दिनाधिपमन्त्रं च चक्रादीनां सुहूयते।।

इन्द्रादीनां च हुत्वा तु ब्राह्मं रौद्रसमन्वितम्।
विष्णुसूक्तं च हुत्वा तु वैष्णवं च सुहूयते।।

श्रीभूमिभ्यामृषिभ्यां च व्याहृत्यन्तं प्रति प्रति।
देवस्य स्नपनं कुर्याच्चत्वारिंशद्भिरष्टकैः।।

बलिं प्रक्षिप्य तत्काले पुनरुत्सवमाचरेत्।
चक्रादीनां तथा कुर्याद्बलिबेरस्य वै तथा।।

अन्यालयस्योत्सवार्थं कौतुकं च न चालयेत्।
उत्सवं चैवमुद्दिश्य त्रिसन्धिषु निवेदयेत्।।

अहीनं चोत्सवं कुर्याद्दिनोत्सवविधानतः।
शान्तिं कुर्यात्तथा पश्चात् पुनरुत्सवमाचरेत्।।

रथाङ्गशिबिकायां वा देवमारोपयेद्धरिम्।
याने रथे गतं देवं गारुडं होममाचरेत्।।

वैष्णवं चैव हुत्वा तु ब्राह्मं रौद्रं सुहूयते।
पूर्वोक्तेन विधानेन पुनरुत्सवमाचरेत्।।

## ९.६.१०६ आभिचारिकस्यौत्सवबिम्बस्य उत्सवाचरणे प्रायश्चित्तम्

**य.४७.८१ - ८४**

शैलजं दारवं चैव औत्सवं नैव कारयेत्।।

कारयेच्चेत् तदज्ञानादाभिचारिकमुच्यते।
एतद्दोषस्य शान्त्यर्थं प्रायश्चित्तं च कारयेत्।।

पौण्डरीकाग्निमादा(धा)य वैष्णवं जुहुयाच्छतम्।
पुरुषसूक्तं च हुत्वा तु विष्णुसूक्तं च वैष्णवम्।।

प्रभूतं बलिमाहृत्य तद्ग्रामे तु बलिं ददेत्।
देवस्य स्नपनं कुर्यात्प्रभूतं च निवेदयेत्।।

**नि.३६**

शैलजं दारवं बिम्बं मोहादज्ञानतोपि वा।
उत्सवं कारयेच्चैतत्प्रायश्चित्तं विधीयते।।

पौण्डरीकाग्निमाधाय महाशान्तिं (?) सुहूयताम्।
देवस्य स्नपनं कुर्यात् पञ्चाशत्कलशैरपि।।

पूजयित्वा निवेद्यैव ब्राह्मणान् भोजयेत्ततः।
ग्रामभूतबलिं दद्यात् स्वे स्थाने स्थापयेत्प्रभुम्।।

अर्चनोक्तक्रमेणैव[1] नित्यपूजां समाचरेत्।

1. अर्चनाधिकारोक्तक्रमेणैव।

**९.६.१०७ देवस्य विलम्बेन प्रत्यागमने प्रायश्चित्तम्**
**प्र.२७.३८४ - ३८६**

देवं प्रत्यागतं दृष्ट्वा पुनरन्योत्सवं चरेत्।
दिनव्यपाये कुर्याच्च तत्कालनियतोत्सवम्।।

अतीतमुत्सवं चापि तन्त्रेणात्र समाचरेत्।
तद्दिनेप्यप्रमादाच्चेत् भूयात् कालस्य यापनम्।।

न जह्यादेव कुर्याच्च तत्कालोचितमुत्सवम्।
अत्र प्रमादे तु भवेत् पूर्वोक्तैव हि निष्कृतिः।।

**९.६.१०८ उत्सवे ब्राह्मणभोजनलोपे प्रायश्चित्तम्**
**प्र.२७.३९८, ३९९**

आदौ मध्ये तथान्ते च हीने ब्राह्मणभोजने।
त्रिवारं तु महाशान्तिं हुत्वा ब्राह्मणभोजनम्।।

द्विगुणं कारयेच्चैव वैष्णवानां तु पूजनम्।
पुनाति पूजितस्सद्यः पाप्मभ्यो वैष्णवस्सकृत्।।

**९.६.१०९ पाषण्डादिभिः भगवद्वहने प्रायश्चित्तम्**
**प्र.२७.४००, ४०१**

अवैष्णवैश्च पाषण्डैरूढे देवे त्वनर्थकृत्।
तद्दोषशान्तये कुर्यात् सहस्रकलशाप्लवम्।।

अवैष्णवकृता पूजा हन्ति पुण्यं पुरातनम्।

## ९.६.११० दीक्षाङ्गवस्त्रादिनाशे प्रायश्चित्तम्

**प्र.२७.३८८ - ३९१**

दीक्षाङ्गस्य तु वस्त्रस्य तथा प्रतिसरस्य वा।
नाशे तत्र महान् दोषस्तदान्यत् पुनराहरेत्।।

सहस्रं विष्णुगायत्रीं हुत्वा शान्तिमथाचरेत्।
यावद्दीक्षा भवेत्तावत् दीक्षाङ्गस्य परिग्रहः।।

अन्ते तु तद्गता शक्तिस्स्वयमेवावहीयते।
अथवा मोचनं कुर्यादिति केचिद्वदन्ति हि।।

तत्र पूर्णाहुतिं कालं प्रवदन्ति विपश्चितः।

## ९.६.१११ बिम्बस्य अस्पृश्यस्पर्शे प्रायश्चित्तम्

**य.४७.१११, ११२**

अस्पृश्यैः स्पर्शने चैव देवस्य स्नपनं भवेत्।।

वैष्णवं चैव हुत्वा तु पौरुषं च सुहूयते।
वैष्णवं ब्राह्मसंयुक्तं रौद्रं चैवं सुहूयते।।

**खि.३७.३२**

बिम्बे त्वस्पृश्यसंस्पर्शे पूर्वोक्ता[1] शान्तिमाचरेत्।

---

1. वाहनादिपतने विहिताम्

## ९.६.११२ आसनादौ बिम्बपाते प्रायश्चित्तम्

**नि.३६**

------------ देवदेवस्य प्रायश्चित्तं विधीयते।
स्यन्दने वाथ याने वा समारोप्योत्सवं चरेत्।।

आसने वाथ तल्पे वा -- तत्र - विशेषतः।
बिम्बं निपतितं चेत्तु तदुद्धृत्य त्वरान्वितः।।

कलशैः पञ्चविंशद्भिः स्नापयित्वा विधानतः।
तद्दिनाधिपदैवत्यं गारुडं वैष्णवं क्रमात्।।

आज्येनाष्टशतं हुत्वा पश्चादुत्सवमाचरेत्।

## ९.६.११३ देवबिम्बपतने प्रायश्चित्तम्

**स.७२.५२ - ५५**

भूमौ तु पतिते बिम्बे भीतश्चोद्विग्नमानसः।
शीघ्रमुद्धृत्य तद्बिम्बं क्षमस्वेति प्रणम्य च।।

शुद्धतोयैश्च संस्नाप्य नमस्कृत्वार्चयेत्क्रमात्।
विष्णोर्नुकादिभिश्चैव स्तुत्वा चैकाक्षरादिना।।

चतुर्विंशतिभिश्चैव कलशैः स्नापयेद्विभुम्।
हविः सम्यङ् निवेद्यैव वैष्णवं जुहुयाच्छतम्।।

विष्णोर्नुकादिभिः स्तुत्वा क्रमादुत्सवमाचरेत्।

**क्रि.२६.११९ - १२१**

**ज्ञा.१०५.१९६**

देवदेवस्य पतने लोकानां च महद्भयम्। तस्मादुद्विग्नमानसो भूत्वोद्धृत्य

बिम्बं प्रक्षाल्य सप्तभिः कलशैः संस्नाप्य शान्तिं हुत्वा आचार्यं सम्पूज्योत्सवमारभेत।

**खि.३७.२१ - २३**

प्रमादात्पतिते बिम्बे भूमौ संस्नाप्य वारिणा।।

स्नापयेत्कलशैर्द्वादशभिः शान्तिं समाचरेत्।
आज्येन चरुणा चैव जुहुयाद्वैष्णवं ततः।।

विष्णुसूक्तं च जुहुयादुत्सवं पुनराचरेत्।

**नि.३६**

भूम्यां निपतिते बिम्बे पञ्चाशत्कलशैरपि।
स्नापयित्वा प्रधानाग्नौ पुरुषसूक्तं च वैष्णवम्।।

आज्येन सर्वदैवत्यम् आज्यमिश्रं चरुं पुनः।
अष्टोत्तरशतं विष्णुगायत्र्या तं च (?) हूयते।।

वेदानध्यापयित्वा तु ब्राह्मणान् भोजयेत्ततः।
शक्तितो दक्षिणां दद्याद् उत्सवं पुनराचरेत्।।

**य.४७.७४ - ७६**

भूमौ च पतिते बिम्बे स्नापयेच्च शताष्टकैः।।

कलशैस्स्नापयेद्देवं वारिणा चाभिषेचयेत्।
वैष्णवं विष्णुसूक्तं च श्रीभूसूक्तं च हूयते।।

ब्राह्मणान् भोजयेत्तत्र सर्वदेवाहुतीर्यजेत्।
अन्नदानं च कृत्वा तु पुनरुत्सवमाचरेत्।।

## ९.६.११४ चक्रादिबिम्बपतने प्रायश्चित्तम्

**स.७२.५५ - ५७**

चक्रं शान्तं तथा वीशं पाञ्चजन्यस्य बिम्बकम्।।

भूमौ तु पतितं चेत्तु स्नापयित्वा विधानतः।
तस्य मन्त्रैश्च जुहुयान्मूर्तिमन्त्रैर्यथाक्रमम्।।

वैष्णवं चैव हुत्वा तु विष्णुसूक्तं यजेद्बुधः।
अर्चयेत्तं च देवेशमुत्सवं सम्यगाचरेत्।।

**क्रि.२६.१२२, १२३**

**वि.६८.४२४**

एतेषा[1] पतने पूर्ववदुद्धृत्य स्नापयित्वा तत्तद्दैवत्यं वैष्णवं च जुहुयात्।

**प्र.२७.४०.४०५, ४०६**

**नि.३६**

चक्रवीशतथाशान्तपतनादौ विशेषतः।
शान्तिहोमं च हुत्वा तु तत्तन्मन्त्रं च हूयते।।

शेषं पूर्ववदुद्दिष्टं बिम्बं तद्वत्समाचरेत्।

## ९.६.११५ देवेशस्य यानात् पतने प्रायश्चित्तम्

**वि.६८.४२४**

देवेशे यानात् पतिते शीघ्रमुद्धृत्य 'क्षमस्वे' ति प्रणम्य शुद्धोदकैरभिषिच्य वैष्णवं विष्णुसूक्तं पुरुषसूक्तं दिनाधिदेवत्यं च हुत्वा पुनरुत्सवं कारयेत्।

**प्र.२७.४०१ - ४०३**

---

1. चक्रवीशशान्तानाम्।

**य.४७.७३, ७४**

यानाच्च पतिते बिम्बे वैष्णवं च सुहूयताम्।
तद्दिनाधिपमन्त्रं च जुहुयाच्च शताष्टकैः।।

कलशैः स्नापयेद्देवं वारिणा चाभिषेचयेत्।

### ९.६.११६ यानात् उत्सवबिम्बस्य पतनेन पीठवियोगादौ प्रायश्चित्तम्

**स.७२.५८ - ६०**

यानान्निपतिते बिम्बे देवे पीठाद्वियोजिते।
पीठं भिन्नं प्रभाच्छत्रमायुधाभरणादिकान्।।

भिन्नान् च्युतांश्च संयोज्य बिम्बशुद्धिं समाचरेत्।
पूर्ववद्भूमियज्ञान्ते स्नापनं च समाचरेत्।।

महाशान्तिं च हुत्वैव प्रतिष्ठामाचरेत्पुनः।
एवं कृत्वा यथामार्गं पश्चादुत्सवमाचरेत्।।

**क्रि.२६.१२४ - १२७**

**ज्ञा.१०५.१९७**

यानाद्यदि पतिते बिम्बे पीठात् प्रभेदः, पुनस्संयोज्य संशोध्य भूमियज्ञं कृत्वोत्सवं कुर्यात्।

प्रभायुधाभरणादीनां भेदे चैवं कृत्वा सप्तभिः कलशैः संस्नाप्य शान्तिं हुत्वारभेत।

### ९.६.११७ उत्सवे बिम्बस्य पीठाद्वियोजने प्रायश्चित्तम्

**खि.३७.२३, २४**

पीठाद्वियोजिते बिम्बे योजयित्वा यथा पुरा।।

शान्तिहोमं च हुत्वा तु लघुसम्प्रोक्षणं चरेत्।

## ९.६.११८ उत्सवे यानात् पतनेन अङ्गहानौ प्रायश्चित्तम्

**वि.६८.४२४**

यानात् पतिते हीनाङ्गे पद्माग्नौ महाशान्तिं हुत्वा, तच्छक्तिं ध्रुवबेरे समारोप्य, कौतुकं स्नपनं बलिबेरं वा अलङ्कृत्य, आवाह्याभ्यर्च्य, उत्सवं कारयेत्।

बेराभावे पात्रे रत्नं सुवर्णं वा निक्षिप्य, आवाह्य, अभ्यर्च्य, दिने दिने महाशान्तिं महाहोमं च हुत्वा, उत्सवं कारयेत्।

हीनाङ्गं तद्बेरं पुनः सन्धानविधिना संधानं कृत्वा, पुनः प्रतिष्ठां कारयेत्।

**प्र.२७.४०६ - ४११**

**क्रि.२६.१२७ - १३१**

पतनादङ्गहीनः चेत् ध्रुवे शक्तिं निवेश्य च।।

जीर्णबेरपरित्यागविधिं कृत्वा विसृज्य च।
पुनर्बिम्बं च कृत्वा तु प्रतिष्ठाप्य यथाविधि।।

उत्सवं पुनरारभ्य कारयेदिति शासनम्।
अथोत्सवस्य शेषं तु कौतुकेनार्चयाथवा।।

आचरेदुत्सवं बिम्बं कारयेदिति केचन।
चक्रवीशामितादीनामेवमेव समाचरेत्।।

सहस्रकृत्वो जुहुयादुक्तमन्त्रैश्च मूर्तिभिः।

**स.७२.६१, ६२**

पतनादङ्गहीनं चेद्बिम्बं सम्यग्व्यपोह्य च।
जीर्णबेरपरित्यागविधिं कृत्वा विसृज्य च।।

पुनर्बिम्बं च कृत्वा तु पूर्वोक्तेन क्रमेण वै।

बिम्बशुद्ध्यादिकं सर्वं कृत्वा स्थापनमाचरेत्।।

**नि.३६**

तं मृजेप्यङ्गवैकल्ये(?)विधिना तं परित्यजेत्।
स्नपने वाप्यभावे तत्कौतुके चोत्सवं चरेत्।।

पञ्चाशत्कलशैः स्नाप्य यागस्थाने विधानतः।
अब्जाग्नौ वां प्रधानाग्नौ महाशान्तिं सुहूयताम्।।(?)

पूजयित्वा निवेद्यैव ब्राह्मणान् भोजयेत्ततः।
शक्तितो दक्षिणां दद्यादुत्सवं पुनराचरेत्।।

औत्सवं मुख्यलोहेन कृत्वा स्थाप्य विधानतः।
पुनस्तु कालेऽनुप्राप्ते औत्सवे उत्सवं चरेत्।।

सौवर्णे राजते बिम्बे त्वङ्गविश्लेषिते यदि।
उभौ बिम्बौ न -- त्याज्यं लोहवत् कारयेद्बुधः।।

तद्द्रव्येण पुनर्बिम्बं कारयेल्लक्षणान्वितम्।
पूर्वोक्तेन विधानेन प्रतिष्ठां चोत्सवं चरेत्।।

सौवर्णं राजतं ताम्रं पूर्वपूर्वात् परावरम्।
तस्मात् द्रव्याधिकेनैव कुर्याद्धीनं न चाचरेत्।।

नानाद्रव्यकृतं बिम्बं न त्याज्यं वै अकारणात्।

## ९.६.११९ उत्सवे बिम्बस्य अङ्गहानौ प्रायश्चित्तम्

**ज्ञा.१०५.१९६**

अङ्गहीनं यदि भवेत्तद्विसृज्य अन्यदादाय तदर्चास्थितां शक्तिं तत्रावाह्य संस्नाप्य पूर्ववत्[1] प्रायश्चित्तं हुत्वा उत्सवं कुर्यात्।

## ९.६.१२० उत्सवे बिम्बस्य अङ्गभेदप्रायश्चित्तम्

**खि.३७.२६**

अङ्गभेदे तु सम्पन्ने प्रतिमां विधिना त्यजेत्।।

## ९.६.१२१ उत्सवे बिम्बस्य उपाङ्गसन्ध्यादिभेदने प्रायश्चित्तम्

**खि.३७.२४, २५**

उपाङ्गसन्ध्यादिभेदे चरुणा वैष्णवं यजेत्।।

शान्तिं च पूर्ववत्कृत्वा पुनस्संस्थापनं चरेत्।

**य.४७.७८**

उपाङ्गे च विहीने च योजयित्वा यथाविधि।
स्नापनं पूर्ववत्कृत्वा पुनरुत्सवमाचरेत्।।

**नि.३६**

## ९.६.१२२ उत्सवे बिम्बस्य प्रत्यङ्गहानौ प्रायश्चित्तम्

**खि.३७.१७ - २१**

प्रत्यङ्गहीने जुहुयादष्टोत्तरशताहुतीः।

---

1. उत्सवे देवदेवपतनवत्

वैष्णवं मन्त्रमावर्त्य प्रायश्चित्तं भविष्यति।।

गौणेन विधिना स्नाप्य शान्तिमन्त्रांश्च वाचयेत्।

ततः शेषं तु विधिना कारयेदुत्सवं बुधः।।

दिनाश्रितेषु न्यूने तु विधिरेष प्रकीर्तितः।

------------------------------------ ।।

एषाऽङ्गोपाङ्गप्रत्यङ्गदोषनिष्कृतिरीरिता।

**खि.३७.२५, २६**

भिन्ने तु यदि प्रत्यङ्गे प्रमादात्सद्य एव तु।।

सन्धाय तुल्यलोहेन स्थापनं पूर्ववच्चरेत्।

### ९.६.१२३ उत्सवे यानपतने प्रायश्चित्तम्

**क्रि.२६.१३१**

यानानां पतने चैव गारुडं होममाचरेत्।।

### ९.६.१२४ उत्सवे यानपतनाद्भेदने प्रायश्चित्तम्

**य.४७.७२**

भूमौ च पतिते याने भिन्ने[1] पूर्ववदाचरेत्।।

---

1. अन्यदेवयानादिभिर्देवेशार्चनवत्।

### ९.६.१२५ उत्सवे रङ्गादिनिपाते प्रायश्चित्तम्

**स.७२.६३**

रङ्गादीनां निपाते च ब्राह्मं वैष्णवसंयुतम्।
हुत्वा पश्चात्पुनः स्थाने कुर्यादित्येव शासनम्।।

**क्रि.२६.१३२**

### ९.६.१२६ उत्सवे ऋत्विक्पतने प्रायश्चित्तम्

**खि.३७.३१**

ऋत्विजां पतने चैव मुनिमन्त्रैः हुनेत्तथा।
वैष्णवेन च हुत्वा तु शान्तिं सम्यक्समाचरेत्।।

### ९.६.१२७ उत्सवे आचार्यादिपतनादौ प्रायश्चित्तम्

**वि.६८.४२५**

आचार्यादीनां पतने, सङ्क्षोभे च आर्ष, वैष्णवं च जुहुयात्।

**प्र.२७.४१३**

### ९.६.१२८ उत्सवे गायकनर्तकपतने प्रायश्चित्तम्

**वि.६८.४२५**

गातुर्नर्तुश्च पतने श्रीदेवत्यं वैष्णवं च (जुहुयात्)।

**प्र.२७.४१२**

**स.७२.६४**

गातुर्नतुश्च(?) पतने श्रीदेव्या होममाचरेत्।

**क्रि.२६.१३३**

### ९.६.१२९ उत्सवे गायकादिपतनादौ प्रायश्चित्तम्

**य.४७.११५, ११६**

नर्तके गायके चैव देवदासीषु चैव हि।
पतिते चाग्निना दग्धे भर्त्सने हननेपि च।।

तत्राऽग्नेयं च हुत्वा तु वैष्णवं जुहुयाक्रमात्।
'श्रिये जाते'ति हुत्वा तु शैषिकं च सुहूयते।।

### ९.६.१३० उत्सवे वादकपतने प्रायश्चित्तम्

**वि.६८.४२५**

वादकानां पतने ब्राह्मं रौद्रं च---- ( जुहुयात् )।

**प्र.२७.४१२**

### ९.६.१३१ उत्सवे वादकादिपतनादौ प्रायश्चित्तम्

**ज्ञा.१०६.१९७**

वादकगायकनर्तकाप्सरसां पतने भर्त्सने क्रोधे ब्राह्मं गारुडं वैष्णवं हुत्वोत्सवमारभेत।

**य.४७.११७**

वादित्रवादकानां च पतने भिन्नदाहयोः।
ऋत्विजां चैव पतने मुनीनां होममाचरेत्।।

### ९.६.१३२ उत्सवे वादित्रादिपतने प्रायश्चित्तम्

**स.७२.७०, ७१**

वादित्राणां निपतने वादकानां तथैव च।

नन्दीश्वरं समभ्यर्च्य वैष्णवं रौद्रसंयुतम्।।
ब्राह्ममन्त्रं तथा हुत्वा पश्चात्कर्म समाचरेत्।

**क्रि.२६.१३९**
[अत्र 'रौद्र' - इत्यस्य स्थाने 'सौर'- इति दृश्यते।]

## ९.६.१३३ उत्सवे पदार्थिदोषप्रायश्चित्तम्

**प्र.२७.२५० - २५५**
ग्रामान्तरं प्रयाते तु दीक्षामध्ये पदार्थिनि।।

अस्पृश्यस्पर्शदोषेण सुरापानादिना तथा।
अनुक्तदोषैर्वा दुष्टे(?) रोगाच्छौचाद्यसंभवे।।

शवाद्याशौचयोग्ये वा शवानुगमने तथा।
वाहने दाहने चैव प्रेतान्नश्राद्धभोक्तरि।।

श्राद्धस्य याजके श्राद्धशिष्टभोक्तरि भोक्तरि।
दोषस्स्याद्विधिना तत्र महाशान्तिमथाचरेत्।।

श्राद्धकर्तरि नो दोषस्तत्र दाता भवेत्स हि।
परान्नेन मुखं दग्धं हस्तौ दग्धौ प्रतिग्रहात्।।

परस्त्रीभिर्मनो दग्धं ब्रह्मशापः कुतः कलौ।
दीक्षामध्ये नान्यदीक्षां गर्भदीक्षां विना चरेत्।।

## ९.६.१३४ उत्सवे धूपपतनादौ प्रायश्चित्तम्

**स.७२.६६, ६७**
धूपानां पतने चैव दहने यस्य कस्यचित्।।

मायां संह्लादिनीं चैव किष्किन्धं सुन्दरं तथा।
अर्चयित्वाथ सम्पूज्य वैष्णवं होममाचरेत्।।

**क्रि.२६.१३५**

बार्हस्पत्यैश्चतुर्भिश्च धूपादिपतने यजेत्।।

## ९.६.१३५ उत्सवे दीपपतने प्रायश्चित्तम्

**स.७२.६६**

दीपानां पतने चैव आग्नेयं वैष्णवं यजेत्।

**क्रि.२६.१३५**

## ९.६.१३६ उत्सवे चामरपतनादौ प्रायश्चित्तम्

**क्रि.२६.१३६, १३७**

पतने चामरादीनां दहने येन केनचित्।
तद्धारकाणां पतने व्यजनानां तथैव च।।

मायां संह्लादिनीं चैव किष्किन्धं सुन्दरं तथा।
अभ्यर्च्य वायुदैवत्यं वैष्णवं होममाचरेत्।।

**य.४७.११३, ११४**

छत्रपिञ्छवितानादौ प्रमादाद्येन केनचित्।
दहने पतने चैव तत्राग्नेयं सवैष्णवम्।।

चामराणां च पतने भिन्ने चैवाग्निदूषिते।
मायासंह्लादिनीमन्त्रं वैष्णवं च हुनेत्क्रमात्।।

## ९.६.१३७ उत्सवे ध्वजदहनादौ प्रायश्चित्तम्

**ज्ञा.१०६.१९७**

ध्वजपिञ्छचामराम्बरादीनां दहने पतने गारुडमाग्नेयं वैष्णवान्तं जुहुयात्।

## ९.६.१३८ उत्सवे ध्वजादीनां निपातादौ प्रायश्चित्तम्

**स.७२.६८**

ध्वजादीनां निपाते च दहने च विशेषतः।
वैष्णवं ध्वजदैवत्यं जुहुयाद्बुधसत्तमः।।

**क्रि.२६.१३८**

## ९.६.१३९ उत्सवे वाहनादिपतने प्रायश्चित्तम्

**खि.३७.३०**

पतिते वाहनादौ तु पतने च पदार्थिनाम्।
दशकृत्वस्तु चरुणा वायव्यं वैष्णवं यजेत्।।

## ९.६.१४० उत्सवे चक्रवीशादिबिम्बलोपे प्रायश्चित्तम्

**वि.६८.४२४**

चक्रवीशशान्तानां बिम्बाऽऽभावे पृथक् पृथक् पात्रेषु समावाह्याभ्यर्च्य तत्तद्दैवत्यं हुत्वा पश्चादुत्सवं कारयेत्।

**क्रि.२६.६८ - ७०**

उत्सवं चक्रहीनं तु नाचरेदिति शासनम्।।

कारयेदुत्सवार्थं तु अथवा चानपायिनम्।
चक्रं च बलिबेरं च याचयेदिति केचन।।

याचितं तत्क्रियान्ते तु नीत्वा पूर्वालयं पुनः।
संस्थाप्य शान्तिं हुत्वा तु पूर्वस्थाने निवेशयेत्।।

**९.६.१४१ उत्सवे उक्तद्रव्यलोपे प्रायश्चित्तम्**

**ज्ञा.१०६.१९८**

यद्द्रव्यं विहीनं तद्दैवत्यमन्त्रान् वैष्णवान्तं जुहुयात्।

**९.६.१४२ उत्सवे उक्तद्रव्यलोपादौ प्रायश्चित्तम्**

**य.४७.१४५, १४६**

उत्सवे मन्त्रहीने च द्रव्यहीने तथैव च।।

आभिचारिकमित्युक्तं सर्वशान्तिं च कारयेत्।
तस्मात्सर्वप्रयत्नेन द्रव्यसम्पन्नमाचरेत्।।

**९.६.१४३ वर्षवात्यादिषु उत्सवकरणे प्रायश्चित्तम्**

**प्र.२७.४१४ - ४१६**

वर्षधारासु वात्यायां विद्युद्ध्वजसमाहतौ।।

काले न चोत्सवं कुर्यात्कुर्याच्चेद्वैष्णवं तथा।
विष्णुसूक्तं नृसूक्तं च श्रीभूदैवत्यमेव च।।

हुत्वोत्सवं प्रकुर्वीत विपरीते तु दोषकृत्।

**९.६.१४४ उत्सवे वीथिमध्ये वर्षधाराप्रवेशादौ प्रायश्चित्तम्**

**वि.६८.४२५**

वीथ्यन्तरे वर्षधाराप्रवेशे तृणपांसुयुतवातस्पर्शे च देवेशं संस्नाप्य वैष्णवं दिग्दैवत्यं वारुणं वायव्यं यद्देवादींश्च हुत्वा पुनरुत्सवं कारयेत्।

**प्र.२७.४१६ - ४१८**

**९.६.१४५ उत्सवे वीथिमध्ये वर्षबिन्दुभिर्देवदेवसेचने प्रायश्चित्तम्**

**क्रि.२६.६२ - ६५**

कुर्याद्वीथ्यां च पर्यग्निं प्रोक्षयेच्च विधानतः।
उत्सवे देवदेवस्य सेचने वर्षबिन्दुभिः।।

तथा बिम्बं समानीय समाच्छाद्यान्यदंशुकम्।
परिधाप्य महाशान्तिं हुत्वा स्नाप्य शताष्टकैः।।

भारतण्डुलसंयुक्तं तदर्धतिलसंयुतम्।
निष्कत्रयसुवर्णं च ताम्बूलसहितं पुनः।।

दत्त्वा कालोत्सवे प्रोक्तां निष्कृतिं च समाचरेत्।

**९.६.१४६ उत्सवे वीथिमध्ये विग्रहे वर्षबिन्दुनिपातादौ प्रायश्चित्तम्**

**खि.३७.३२, ३३**

वर्षबिन्दुनिपाते च धूलिपाते च विग्रहे।।

जुहुयाद्विष्णुसूक्तं च वैष्णवं च शताष्टकम्।

**९.६.१४७ उत्सवे अग्न्युत्पाते प्रायश्चित्तम्**

**ज्ञा.१०६.१९७**

अग्न्युत्पाते शान्तिं हुत्वा ब्राह्मणान् भोजयित्वा पुनरारभेत।

**९.६.१४८ उत्सवे बिम्बादीनां अग्निस्पर्शे प्रायश्चित्तम्**

**य.४७.८५ - ८८**

बिम्बे चैवाग्निना स्पृष्टे वस्त्राभरणयानके।
तत्सर्वं विसृजेद्विद्वान् बिम्बस्य स्नपनं चरेत्।।

स्नापयेद्देवदेवेशं पुनर्गन्धोदकैरपि।
वैष्णवं ब्राह्मसंयुक्तं रौद्रं चैव सुहूयते।।

देवीभ्यां च मुनिभ्यां च चक्रादीनां च हूयते।
इन्द्रादीनां च हुत्वा तु पायसादि निवेदयेत्।।

ब्राह्मणान् भोजयित्वात्र पुनरुत्सवमाचरेत्।
चक्रादीनां च तेषां वै तत्तन्मन्त्रं तथा भवेत्।।

**९.६.१४९ उत्सवे अवभृथनक्षत्रसङ्ख्याक्रमविपर्यासे प्रायश्चित्तम्**

**वि.६८.४२०**

उत्सवस्यावभृथनक्षत्रसङ्ख्याक्रमविपर्यासेनावभृथं कुर्याच्चेत् उत्सवाधिदेवत्यं तिथिवारनक्षत्रं च द्विर्हुत्वा ब्राह्मणान् भोजयेत्।

**प्र.२७.२४३**

**९.६.१५० उत्सवे तीर्थार्थकौतुकबन्धनलोपे प्रायश्चित्तम्**

**क्रि.२६.१४२ - १४४**

पूर्वरात्रे च तीर्थार्थं बध्नीयात्कौतुकं तथा।।

प्रमादात्तु न बध्नीयात् प्रातः प्रतिसरं तथा।
वारुणं वैष्णवं मन्त्रं हुत्वा तद्दिनदैवतम्।।

कृत्वा प्रतिसराबन्धं कारयेत्तु पुनस्तथा।
**स.७२.७३, ७४**

**वि.६८.४२६**
तीर्थदिनात् पूर्वरात्रौ प्रतिसरबन्धने ------ हीने वैष्णवं श्रीभूमिदेवत्यं सौदर्शनं च हुत्वा त[1] समाचरेत्।
**प्र.२७.४२८, ४२९**

**९.६.१५१ उत्सवे तीर्थार्थशयनलोपे प्रायश्चित्तम्**
**य.४७.१२९ - १३१**
शयने तत्र हीने तु वैष्णवं च सुहूयते।।

श्रीभूसूक्तं ततो हुत्वा शैषिकं च सुहूयते।
पूर्ववद्विधिना कृत्वा शयनं सम्यगाचरेत्।।

पञ्चशयनस्य चालाभे प्रत्येकं वस्त्रमास्तरेत्।
मूर्धोपधानहीने तु हुत्वा नागाधिदैवतम्।।

**वि.६८.४२६**
तीर्थदिनात् पूर्वरात्रौ ---------------शयने वा हीने वैष्णवं श्रीभूमिदेवत्यं सौदर्शनं च हुत्वा ते[2] समाचरेत्।
**प्र.२७.४२८, ४२९**

---

1. कौतुकबन्धनशयने।
2. प्रतिसरबन्धनशयने।

**स.७२.७५**

शयने तत्र हीने तु देव्योर्होमं समाचरेत्।

**क्रि.२६.१४४**

### ९.६.१५२ उत्सवे तीर्थकालव्यत्यये प्रायश्चित्तम्

**य.४७.१३७ - १४०**

दिवैव तीर्थः कर्तव्यो रात्रौ तीर्थं न चाचरेत्।
रात्रौ तु तीर्थकाले तु दिवा तीर्थं न कारयेत्।।

मोहादज्ञानतो वापि विपरीतं भवेद्यदि।
ब्राह्मं रौद्रं च हुत्वा तु विष्णुसूक्तं च वैष्णवम्।।

तद्दिनाधिपमन्त्रं च चक्रादीनां च हूयते।
पुण्याहं वाचयेत्तत्र देवेशं सम्प्रणम्य च।।

दिवा तीर्थविहीने तु तद्दिने वा समाचरेत्।
तस्मात्सर्वप्रयत्नेन तत्काले तीर्थमाचरेत्।।

**क्रि.२६.१४८, १४९**

अतीते तीर्थकाले तु (वारुणं स्कन्ददैवतम्।
विष्णुसूक्तं ततो हुत्वा तीर्थस्नानं समाचरेत्।।

मध्याह्ने तीर्थकालः स्यात्) पूर्वाह्णे वा गुणान्विते।

**स.७२.७५, ७६**

**वि.६८.४२७**

तीर्थस्नानकाले अतीते हीने वा वैष्णवं, वारुणं, स्कन्ददैवत्यं च जुहुयात्।

**प्र.२७.४३०**

### ९.६.१५३ उत्सवे तैलाभ्यञ्जनादिलोपे प्रायश्चित्तम्

**य.४७.१३५, १३६**

तैलाभ्यञ्जनहीने तु चूर्णस्नानविहीनके।
चूर्णस्नानं च कृत्वा तु हीने चूर्णोत्सवेऽपि वा।।

वैष्णवं चैव हुत्वा तु ब्राह्मं रौद्रसमन्वितम्।
चक्रादीनां तथा हुत्वा पश्चादुत्सवमाचरेत्।।

### ९.६.१५४ उत्सवे तीर्थान्तस्नपनलोपे प्रायश्चित्तम्

**क्रि.२६.१४९, १५०**

तीर्थान्तस्नपने हीने दिग्दैवत्यं सवैष्णवम्।
विष्णुसूक्तं च हुत्वा तु पुनः स्नपनमाचरेत्।।

**स.७२.७७**

**य.४७.१४१, १४२**

तीर्थान्तस्नपने हीने ------------------।
एकाहमुत्सवं कुर्यात्स्नापयेच्च शताष्टकैः।।

महाभूतबलिं दद्यात् प्रभूतं च निवेदयेत्।

### ९.६.१५५ उत्सवे चक्रादिबिम्बानामनर्हस्पर्शे प्रायश्चित्तम्

**नि.३६**

चक्रादिबिम्बसंस्पृष्टे तद्दैवत्यं -------------- ।
महाशान्तिं ? सुहोतव्यं ? सप्तभिः कलशैरपि।।

स्नाप्याभ्यर्च्य निवेद्यैव पुनरुत्सवमाचरेत्।

चण्डालस्पर्शने चैव सन्निकृष्टे विशेषतः।।

कलशैः पञ्चविंशद्भिः ----------- हूयते।
अर्चयित्वा निवेद्यैव पुनरुत्सवमाचरेत्।।

### ९.६.१५६ उत्सवे चण्डालस्पृष्टेन बिम्बस्पर्शे प्रायश्चित्तम्

**नि.३६**

चण्डालस्पर्शने स्पृष्टे सप्तभिः कलशैरपि।
देवस्य स्नपनं कुर्याद्वैष्णवं दशशोयजेत् ।।

पूजयित्वा यथान्यायमुत्सवं पुनराचरेत्।
सन्निकृष्टेन संस्पृष्टे शुद्धोदैरभिषेचयेत्।।

### ९.६.१५७ उत्सवे चण्डालस्य बिम्बातिसमीपस्थितौ प्रायश्चित्तम्

**नि.३६**

अतीव बिम्बपार्श्वस्थे[1] अब्जाग्निं साधयेत्पुनः।
सायं प्र ------ तिमुक्त्वा चैव दिनत्रयम्।।

अष्टोत्तरशतैरेव कलशैः स्नापयेत्प्रभुम्।
ब्राह्मणान् भोजयेत्पश्चात् प्रतिष्ठां सम्यगाचरेत्।।

शक्तितो दक्षिणां दद्यात्पुनरुत्सवमाचरेत्।

---

1. चण्डाले इत्यनुवर्तते।

**९.६.१५८ उत्सवे चण्डालसंनिकर्षे यागादिकरणे प्रायश्चित्तम्**
**नि.३६**

चण्डालादौ सन्निकृष्टे नृत्तं वा यागमेव(गेय?) वा।
मोहादज्ञानतो वापि विष्ण्वर्थं कारयेद्यदि।।

तद्ग्रामस्तु विनष्टः स्यात् प्रायश्चित्तं समाचरेत्।
पर्यग्निं कारयेत्तत्र वास्तुहोमं (?) सुहूयते।।

पुण्याहं वाचयित्वा तु देवदेवस्य -- शार्ङ्गिणः।
कलशैः पञ्चविंशद्भिः संस्नाप्याभ्यर्चये ।।

चण्डालादौ च संस्पृष्टे ----- शवदर्शने।
शान्तिहोमं ततो हुत्वा ब्राह्मणान् भोजयेत्ततः।।

**९.६.१५९ उत्सवे चण्डालगेयादिसंभवे प्रायश्चित्तम्**
**य.४७.१०७ - १११**

चण्डालगेयं नृत्तं च देवार्थं नैव चाचरेत्।।

मोहादज्ञानतो वापि कारयेच्चेद्विनश्यति।
तद्दोषशमनार्थाय क्षिप्रं शान्तिं च कारयेत्।।

ग्रामे वा चालये वापि भूमिशुद्धिं च कारयेत्।
वास्तुहोमं च हुत्वा तु पुण्याहं वाचयेत्क्रमात्।।

देवस्य स्नपनं कुर्याच्छताष्टकलशैः पुनः।
चक्रादिस्नपनं कुर्यात्पुण्याहं वाचयेत् ततः।।

ब्राह्मणान् भोजयेत्तत्र वेदस्याध्ययनं चरेत्।

## ९.६.१६० उत्सवे ध्वजावरोहणलोपे प्रायश्चित्तम्

**वि.६८.४२७**

तद्रात्रौ ध्वजावरोहणे हीने ध्वाजं, गारुडं, वैष्णवं च जुहुयात्।

**प्र.२७.४३१**

[अत्र 'देवेशं प्रार्थयेद् गुरुः' इत्यधिकम्।]

**प्र.२७.३३९ - ३४१**

अवरोहणहीने तु मन्त्रेणोद्वासनं भवेत्।।

ततश्शेषं प्रकुर्वीत अशक्तावरोहणे।
अप्रमाणं (?) पटं गृह्य महाशान्तिं समाचरेत्।।
पुनरन्यं समादाय कर्मशेषं समाचरेत्।

**ज्ञा.१०६.१९७**

अवभृथात् पश्चात् सप्ताहान्नवाहाद्वा अन्तरे यदि ध्वजावरोहणं न स्यात् अनावृष्टिर्भवति। अतो ध्वाजं गारुडं ब्राह्मं वैष्णवं हुत्वा देवमनुज्ञाप्य अवरोहयेत्।

**य.४७.१४२ - १४४**

सप्तरात्रविहीने तु ध्वजस्याप्यवरोहणे।।

एकाहमुत्सवं कुर्यात्स्नापयेच्च शताष्टकैः।
पायसादि निवेद्यैव विप्राणां भोजयेच्छतम्।।

सर्वदेवाहुतीर्हुत्वा महाभूतबलिं ददेत्।
ध्वजपूजां च कृत्वा तु ध्वजं तमवरोहयेत्।।

**अ.२९**

अतीते सप्तरात्रे तु अवभृथस्य दिनं भवेत्।।

महाशान्तिं च कृत्वा तु पुनरुत्सवमाचरेत्।
अवरोहणं च कृत्वाथ नित्यं रात्रौ बलिं ददेत्।।

नित्यं ध्वजं समभ्यर्च्य निवेदनसमायुतम्।

**९.६.१६१ उत्सवे ध्वजावरोहणे बलिलोपे प्रायश्चित्तम्**

**वि.६८.४२७**

अवरोहणे बलौ हीने ध्वजदेवं संपूज्य वैष्णवं, तदालयगतपरिषद्दैवत्यं च हुत्वा ध्वजावरोहणं कारयेत्।

**प्र.२७.४३२, ४३३**

अवरोहणकाले तु बलौ हीने विशेषतः।
ध्वजदेवं सुसम्पूज्य वैष्णवं विष्णुसूक्तकम्।।

तदालयस्थदेवानां मन्त्रांश्चैव विशेषतः।
हुत्वा देवेशमभ्यर्च्य ध्वजं समवरोहयेत्।।

**य.४७.१४१, १४२**

-------------------- बलिहीनेऽवरोहणे।
एकाहमुत्सवं कुर्यात्स्नापयेच्च शताष्टकैः।।

महाभूतबलिं दद्यात्प्रभूतं च निवेदयेत्।

**९.६.१६२ उत्सवे उत्सवान्ताभिषेकलोपे प्रायश्चित्तम्**

**प्र.२७.४३४**

उत्सवान्ताप्लवे हीने वैष्णवं विष्णुसूक्तकम्।
पुरुषसूक्तं जयादींश्च मूर्तिमन्त्रांश्च हावयेत्।।

**वि.६८.४२७**

उत्सवान्तस्नपने हीने वैष्णवं विष्णुसूक्तं जयादि मूर्तिमन्त्रांश्च जुहुयात्।

### ९.६.१६३ उत्सवे अनुक्तदोषे प्रायश्चित्तम्

**प्र.२७.४३५, ४३६**

अत्रानुक्तेषु दोषेषु प्रायश्चित्तं भवेदिदम्।
वैष्णवं विष्णुसूक्तं च नृसूक्तं च तथैव च।।

हूयते विष्णुगायत्री सर्वपापप्रणाशिनी।
एवमष्टाविंशतिर्वा शक्तावष्टोत्तरं शतम्।।

**वि.६८.४२७**

### ९.६.१६४ उत्सवे सर्वन्यूनतायां प्रायश्चित्तम्

**स.७२.४४**

गुरुलाघवमालोच्य प्रायश्चित्तं च कारयेत्।
विनाश्रयेषु दोषेषु सर्वन्यूनं भवेद्यदि।।

**खि.३७.१९, २०**

यथार्हं कारयेद्विद्वान् ज्ञात्वा तु गुरुलाघवम्।।

होमानुक्तांश्च जुहुयात्प्रायश्चित्तविधौ बुधः।
दक्षिणा चापि दोषानुरूपा देया विचार्य वै।।

### ९.६.१६५ उत्सवबिम्बे अन्यदेवदृष्टे प्रायश्चित्तम्

**स.७९.९**

वैखानसार्चितहरिर्दृष्टश्चेदन्यदैवतैः।
विधिनोत्सवबिम्बस्य तस्य सम्प्रोक्षणं चरेत्।।

**९.६.१६६ उत्सवे अन्यदेवयाने विष्णोरारोपणे प्रायश्चित्तम्**

**स.७९.१६, १७**

अन्यदेवगते याने देवमारोप्य चोत्सवे।
कृते तद्दोषशान्त्यर्थं गारुडं वैष्णवं यजेत्।।

ब्राह्मं रौद्रं तथा हुत्वा क्षमस्वेति प्रणम्य च।
स्वार्थं सङ्कल्पिते याने देवेशस्योत्सवं चरेत्।।

**९.६.१६७ उत्सवे सुरामांसादिबलिदाने प्रायश्चित्तम्**

**नि.३६**

सुरा च पिशितं रक्तं भद्रकाल्यं (?)बलिस्तथा।
कारयेच्चेत् तदज्ञानात् तत्तत्सन्धौ विशेषतः।।

गोमयेनोपलिप्यैव पुण्याहमपि वाचयेत्।
वास्तुहोमं च हुत्वा तु पर्यग्निं कारयेद्बुधः।।

पञ्चगव्येन सर्वत्र प्रोक्षयेत्तद्विचक्षणः।
वैष्णवं विष्णुसूक्तं च ब्राह्मं रौद्रं तथैव च।।

चक्रं वीशं तथा शान्तमिन्द्रादीनां तथैव च।
तद्दिनाधिपदैवत्यमाज्येन जुहुयाद्बुधः।।

पञ्चाशत्कलशैरेव स्नापयेद्देवमव्ययम्।
सप्तभिः कलशैस्तत्र चक्रादिस्नापनं चरेत्।।

अर्चयित्वा निवेद्यैव पश्चादुत्सवमाचरेत्।

**९.६.१६८ उत्सवे उत्सावन्तरसङ्कर प्रायश्चित्तम्**

**य.४७.९६ - १०७**

विष्णोरुत्सवकाले तु अन्यदेवोत्सवो यदि।
वैष्णवं चैव रौद्रं च एकाहं तत्र कारयेत्।।
(तत्सङ्करे च निर्दोषमग्रे रुद्रोत्सवं चरेत्।
पश्चाद्विष्णूत्सवं कुर्यात्सर्वम्पत्समन्वितम्।।

तद्दोषशमनार्थाय विष्णोरुत्सवमन्ततः।
विष्णोरुत्सवकाले तु भद्रकाल्या तु लङ्घिते।।

सुरा मांसश्च (मांसं च?) रुधिरं भद्रकालीबलिर्भवेत्।
देवार्थं च बलिं कुर्यान्न पैशाचबलिं क्षिपेत्।।

घोषणाद्यवरोहान्तं दिनमेकं च सङ्करे।
मोहादज्ञानतो वाऽपि सङ्करे चेद्विनश्यति।।

तद्दोषशमनार्थाय प्रायश्चित्तं च कारयेत्।
सन्धौ सन्धौ च शोधित्वा गोमयेनोपलिप्य च।।

पुण्याहं वाचयेत्तत्र वास्तुहोमं च कारयेत्।
वैष्णवं चैव हुत्वा तु ब्राह्मं रौद्रसमन्वितम्।

--- शान्तिं च हुत्वा तु चक्रादीनां सुहूयते।
दिनाधिपत्यमन्त्रं च हुत्वा चैव यथाविधि।।

देवस्य स्नपनं कुर्याच्छतमष्टोत्तरं भवेत्।
चक्रादेः स्नपनं कृत्वा हविर्भिः सन्निवेदयेत्।।

पायसादि निवेद्यैव पश्चादुत्सवमाचरेत्।

दुर्गालक्ष्म्योः सरस्वत्या उत्सवः क्रियते यदि।।

तत्सङ्करे तु निर्दोषो निष्कृतिं नैवमाचरेत्।

भद्रकाली च शान्ता च --------- सङ्करे।।)

सङ्करे चादिमूर्तेस्तु शान्तिं चैव तथा चरेत्।

**नि.३६**

विष्णोरुत्सवमुद्दिश्य ध्वजे त्वारोपिते सति।

वास्त्वङ्गदैवतादन्यादुत्सवं न समाचरेत्।।

मोहादज्ञानतो वापि कुर्याच्चेन्नाशयत्युत।

तद्दोषशमनार्थाय प्रायश्चित्तं विधीयते।।

पौण्डरीकाग्निमाधाय महाशान्तिं यजेत्ततः।

गोमयेनोदकैर्ग्रामं प्रोक्षणं सम्यगाचरेत्।।

**वि.६८.४२६**

ध्वजारोहणादूर्ध्वं तीर्थदिनात् पूर्वम् अन्योत्सवं शुभकर्माणि न कुर्यात्। कुर्याच्चेदाभिचारिकं भवति। तद्दोषशमनार्थं वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, पार्षदं च हुत्वा ब्राह्मणान् भोजयेत्।

**प्र.२७.४२६ - ४२८**

**स.७९.१३, १४**

विष्णोरुत्सवकाले तु यद्यन्योत्सवसङ्करः।।

महाशान्तिं च कृत्वैव विष्णूत्सवमथाचरेत्।

## ९.६.१६९ विष्णुरुद्रोत्सव-यौगपद्ये पौर्वापर्यातिक्रमे प्रायश्चित्तम्

**नि.३६**

देवेशस्योत्सवे काले रुद्रस्यैवोत्सवे सति।
अग्रे रुद्रोत्सवं कुर्यात्पश्चाद्विष्णूत्सवं नयेत्।।

सर्वसम्पत्समृद्धिस्स्यात् पश्चाद्रुद्रोत्सवं न च।
कारयेच्चेत् तदज्ञानात् विष्णूत्सवमथाचरेत्।।

## ९.६.१७० दोषयुक्त शरीरेण उत्सवाचरणे प्रायश्चित्तम्

**खि.३७.९ - १४**

दोषयुक्ते शरीरे तु प्रायश्चित्तं विधीयते।।

जुहुयात्पौरुषं सूक्तम् 'अतो देवा'दि वैष्णवम्।
यद्देवादीन् ततो हुत्वा ब्राह्ममैन्द्रं च वारुणम्।।

आलयस्थितदेवानां मूर्तिमन्त्रांश्च हावयेत्।
हुतेनैतेन विधिना दोषशान्तिर्भविष्यति।।

एवं हुत्वा तथा शान्तिं समस्तदुरितापहाम्।
स्नपनं देवदेवस्य कारयेदधमोत्तमम्।।

सहस्रभोजनं कृत्वा विप्रेभ्यो दक्षिणां ददेत्।
कारयेन्महतीं पूजां देवदेवस्य शार्ङ्गिणः।।

वाचयित्वा ततश्शान्तिं महद्भिस्तत्त्वदर्शिभिः।
पुनरुत्सवमारभ्य कारयेद्विधिना बुधः।।

**९.६.१७१ दोषयुक्तेनाङ्गेन उत्सवाचरणे प्रायश्चित्तम्**

**खि.३७.१५, १६**

दुष्टेऽङ्गे निष्कृतिः प्रोक्ता होमं पूर्ववदाचरेत्[1] ।
स्नपनं चाधमं कुर्याद्दद्यादन्नादि शक्तितः।।

विप्रेभ्यो दक्षिणां दद्यात् शान्तिसूक्तानि वाचयेत्।
उत्सवं विधिवत् कुर्याच्छिष्टाहस्सु क्रमेण वै।।

**९.६.१७२ उत्सवे भक्तादिकलहादौ प्रायश्चित्तम्**

**स.७२.६९**

भक्तानां ब्राह्मणादीनां कलहे पतने तथा।
ब्राह्मं च वैष्णवं चैव जुहुयादिति शासनम्।।

**क्रि.२६.१३८**

**९.६.१७३ उत्सवे आचार्यादिकलहे प्रायश्चित्तम्**

**प्र.२७.३९२ - ३९७**

अन्योन्यं कलहायन्ते यद्याचार्यादयः क्रतौ।।

महाननर्थस्तत्र स्यात् प्रतिभूर्गुरुरत्र हि।
गुरुवाक्यं च राजाज्ञास सममाहुर्महर्षयः।।

दीक्षिते वर्तमाने तु नान्यं तत्र प्रवेशयेत्।
न ह्येकस्मिन् भवेत्कार्ये आचार्यद्वयसङ्गतिः।।

---

1. शरीरदोषवत्

प्रमादाद्बुद्धिपूर्वं वा कलहे क्षतजस्रुतिः।
क्षतानि वा भवेयुस्तं विसृज्यान्येन कारयेत्।।

न तस्य तु भवेद्दीक्षा महाशान्तिं तु कारयेत्।
स दीक्षितो भवेदेव पूर्वस्य प्रणिधिः स हि।।

यावदाशौचसङ्क्रान्तिः आशौचे त्वशुचिर्भवेत्।
पुनरन्यं समादाय शेषं पूर्ववदाचरेत्।।

**९.६.१७४ उत्सवे गुरुयजमानक्षोभे प्रायश्चित्तम्**
**य.४७.११८**

यजमानगुरुक्षोभे ऋषीणां होममाचरेत्।
वैष्णवं चैव हुत्वा तु शैषिकं च सुहूयते।।

**९.६.१७५ उत्सवे भृत्यवर्गसंक्षोभे प्रायश्चित्तम्**
**ज्ञा.१०६.१९७**

भृत्यवर्गसङ्क्षोभे भौतिकं वैष्णवान्तं जुहुयात्।

**९.६.१७६ उत्सवे जनसंबाधेन रक्तस्रावे प्रायश्चित्तम्**
**नि.३६**

केवलाञ्जनसंबाधाद्रक्तस्रावे प्रमादतः।
गोपुराभ्यन्तरे तत्र शोधयित्वा त्वरान्वितः।।

शान्तिहोमं च हुत्वा तु प्रोक्षयेत्पञ्चगव्यकैः।
पुण्याहं वाचयित्वा तु पश्चादुत्सवमाचरेत्।।

## ९.६.१७७ उत्सवे कलहादौ प्रायश्चित्तम्

**स.७२.७१ - ७३**

कलहे रुधिरस्रावेऽशन्युत्पातान्मृते जने।।

जुहुयाद्विष्णुसूक्तं च पौरुषं वैष्णवं क्रमात्।
परिषद्गणमन्त्रैश्च जुहुयात्तस्य शान्तये।।

उत्सवाङ्गाश्च ये देवास्तेषां मन्त्रैश्च हूयते।

**क्रि.२६.१४० - १४२**

**वि.६८.४२५**

उत्सवकाले कलहरुधिरस्रावेषु सत्सु वैष्णवमाग्नेयं ब्राह्मं रौद्रं दिनाधिदैवत्यं च जुहुयात्।।

**प्र.२७.४१९, ४२०**

[अत्र 'दाहे' इति निमित्तमधिकम्।]

**य.४७.११९ - १२१**

विग्रहे रक्तसंस्रावे दग्धे चैव मृते जने।
ग्रामे देवालये चापि भूमिशुद्धिं च कारयेत्।।

वास्तुहोमं च हुत्वा तु पुण्याहं वाचयेत्ततः।
वैष्णवं चैव हुत्वा तु चक्रादीनां सुहूयते।।
देवस्य स्नपनं कृत्वा पश्चादुत्सवमाचरेत्।

**ज्ञा.१०६.१९७**

कलहे रुधिरस्रावे —— शान्तिं हुत्वा ब्राह्मणान् भोजयित्वा पुनरारभेत।

**नि.३६**

कलहाद्रक्तसंस्रावे देवदेवस्य सन्निधौ।

तद्ग्रामानर्थदं विद्यात् कर्ता वै विनशिष्यति।।

शान्तिहोमं च हुत्वा तु देवस्य स्नपनं चरेत्।
पूजयित्वा निवेद्यैव क्षमस्वेति प्रणम्य च।।

हुत्वा पुरुषसूक्तेन पश्चादुत्सवमाचरेत्।
दण्डे च कलहे तत्र चोत्सवमाचरेत्।।

**९.६.१७८ उत्सवे कलहादिना मरणे प्रायश्चित्तम्**
**नि.३६**

प्रमादात् कलहाद्वाथ तदैव मरणे सति।
वास्तुहोमं च हुत्वा तु पर्यग्निं कारयेद्बुधः।।

पुण्याहं वाचयित्वा तु विष्णुसूक्तं सवैष्णवम्।
पर्षदां नाममन्त्रैश्च तद्दिनाधिपपूर्वकम्।।

श्रीसूक्तं च महीसूक्तम् आज्येन जुहुयात्पुनः।
पञ्चाशत्कलशैः स्नाप्य पूजयित्वा निवेदयेत्।।
ब्राह्मणान् भोजयित्वा तु पुनरुत्सवमाचरेत्।

**९.६.१७९ उत्सवे रजस्वलाद्युपागमने प्रायश्चित्तम्**
**य.४७.१२१ - १२४**

रजस्वलादौ देवानामुत्सवे समुपागते।।

ग्रामे वा चालये वापि भूमिशुद्धिं च कारयेत्।
वास्तुहोमं च हुत्वा तु पुण्याहं वाचयेत्ततः।।

वैष्णवं चैव हुत्वा तु चक्रादीनां सुहूयते।

इन्द्रादीनां च हुत्वा तु देवस्य स्नपनं भवेत्।।

वेदाध्यायं च कृत्वा तु पश्चादुत्सवमाचरेत्।

**९.६.१८० उत्सवे आचार्याशौचे प्रायश्चित्तम्**

**नि.३६**

आचार्यस्य तदाशौचे शिष्ये तस्य निवेदयेत्।
शान्तिं हुत्वोत्सवं कुर्यात् ----------------।।

**९.६.१८१ उत्सवे आशौचियजमानद्रव्येण पूजने प्रायश्चित्तम्**

**नि.३६**

--------------------- यजमानस्य वै बुधः।
आशौचे सति तद्द्रव्यैः देवेशं नाभिपूजयेत्।।

मोहादज्ञानतो वापि तद्द्रव्यैः पूजयेद्यदि।
पौण्डरीकाग्निमाधाय शान्तिहोमं सुहूयते।।

आज्येन विष्णुगायत्रीम् अष्टोत्तरशतं यजेत्।
कलशैः पञ्चविंशद्भिः स्नापयित्वा समर्च्य च।।

प्रभूतं च निवेद्यैव पुण्याहमपि वाचयेत्।
अर्चयित्वा यथान्यायमर्चनं पुनराचरेत्।।

**९.६.१८२ उत्सवे ग्रामप्रदक्षिणात् पूर्वं मरणसंभवे प्रायश्चित्तम्**

**नि.३६**

ग्रामप्रदक्षिणात्पूर्वं मरणे सति वै बुधः।

तच्छीघ्रं संव्यपोह्यैव पुण्याहं वाचयेत्ततः।।

प्रोक्षयेत्पञ्चगव्येन शान्तिहोमं सुहूयते।
पूजयेद्देवदेवेशं हविः सम्यङ् निवेदयेत्।।

ग्रामं प्रदक्षिणीकृत्य कारयेदुक्तसत्क्रियाम्।

**९.६.१८३ उत्सवे वीथीभ्रमणे कलहादौ प्रायश्चित्तम्**
**क्रि.२६.३७ - ४१**

वीथीभ्रमणवेलायां देवे यानगते सति।।

कलहे रुधिरस्रावे महोत्पाते मृते जने।
रथचक्रग्रहे चैव नराणां मृतिसम्भवे।।

शेषवीथीं परिभ्राम्य प्रादक्षिण्यक्रमेण तु।
आलयं च प्रविश्यैव देवेशमवरोप्य च।।

सप्तभिः कलशैर्देवं संस्नाप्य च विधानतः।
पुण्याहं वाचयेद्विद्वान् प्रोक्षणं चैव कारयेत्।।

विशेषेण तु देवाय मुद्गान्नं विनिवेदयेत्।
क्षमामन्त्रं समुच्चार्य प्रणाममपि कारयेत्।।

**९.६.१८४ उत्सवे आचार्यमरणे प्रायश्चित्तम्**
**नि.३६**

देवेशस्योत्सवे मध्ये आचार्यमरणे सति।
तस्य पुत्रं समाहूय आचार्यत्वं प्रकल्प्य वै।।

कुण्डे वा स्थण्डिले वाथ आघारं विधिवद्यजेत्।
'यतः समासी'दित्यादि आज्येन जुहुयात्पुनः।।

मुनिभ्यां मूर्तिभिर्युक्तं विष्णुसूक्तं सवैष्णवम्।
ब्राह्मं चैव सुहोतव्यं तच्छेषं पुनराचरेत्।।

**९.६.१८५ उत्सवे आचार्यमरणादौ प्रायश्चित्तम्**
**य.४७.८९ - ९२**

आचार्यस्य मृतौ तेन विना चेदुत्सवः कृतः।
हीनोत्सवस्य शान्तिं च कृत्वाऽथोत्सवमाचरेत्।।

तस्य शिष्यं समादाय आचार्यत्वे नियोजयेत्।
यजमानमृतौ चैव शान्तिं कृत्वोत्सवं तथा।।

राजानं यजमानं तु सञ्चिन्त्योत्सवमाचरेत्।
नृपाणां च मृतौ चैव बन्धुवर्गमृतौ तथा।।

हीने सत्युत्सवे कुर्याद्धीनोत्सवविधानतः।

**९.६.१८६ उत्सवे यजमानमरणे प्रायश्चित्तम्**
**नि.३६**

यजमाने मृते तत्र[1] राजानं मनसा बुधः।
यजमानेति सञ्चिन्त्य शान्तिं हुत्वोत्सवं चरेत्।।

**९.६.१८७ उत्सवे राजमरणे प्रायश्चित्तम्**
**नि.३६**

नृपतेर्मरणे तस्य अनुयेनामृते (?) सति।
अब्जाग्नौ च महाशान्तिं कुर्यादुत्सवमाचरेत्।।

---

1. उत्सवे

**९.६.१८८ उत्सवे कर्त्राचार्यविनाशे प्रायश्चित्तम्**

**य.४७.१३३**

कर्त्राचार्यविनाशे तु उत्सवो निष्फलो भवेत्।
देवस्य स्नपनं कृत्वा शान्तिहोमः सुहूयते।।

**९.६.१८९ उत्सवे आलयाभ्यन्तरे शस्त्राद्यैर्मरणे प्रायश्चित्तम्**

**वि.६८.४२६**

आलयाभ्यन्तरे शस्त्राद्यैर्मरणे सति तच्छीघ्रमपहाय अब्जाग्नौ महाशान्तिं तद्दिनाधिपदैवत्यं च जुहुयात्।

**प्र.२७.४२०, ४२१**

**९.६.१९० उत्सवे वीथ्यां मरणे प्रायश्चित्तम्**

**वि.६८.४२६**

वीथ्यां मरणादौ संभूते तच्छीघ्रं व्यपोह्य शान्तिहोमं हुत्वा उत्सवं कारयेत्।
एकनाडिकायामादर्वाक्कालं गतं चेत्पुनरुत्सवं कारयेत्।

**प्र.२७.४२२, ४२३**

**९.६.१९१ उत्सवे अन्तर्वीथ्यां शवयाने प्रायश्चित्तम्**

**क्रि.२६.९०, ९१**

अन्तर्वीथ्यां शवे याते वास्तुहोमावसानके।
पर्यग्निपञ्चगव्याभ्यां वीथीं संशोध्य सर्वतः।।

लोकपालकमन्त्रैश्च बलिं निर्वाप्य पूर्ववत्।
हुत्वा बल्युत्सवादीनि पूर्ववत्परिकल्पयेत्।।

**९.६.१९२ उत्सवे आलयसमीपे शवपाते प्रायश्चित्तम्**

**प्र.२७.४२३ - ४२६**

आलयस्याशीतिदण्डाभ्यन्तरे तु शवे सति।।

तत्रोत्सवं न कुर्यात्तु कुर्याच्चेत्स विनश्यति।
तच्छीघ्रमपहायैव प्रायश्चित्तं यथोदितम्।।

महाशान्तिं पार्षदं च हुत्वा चोत्सवमाचरेत्।
नगरे विधिरेषः स्याद्ग्रामे नैष विकल्प्यते।।

अन्तश्शवे नैव कुर्यादुत्सवं ग्रामवृद्धये।

**वि.६८. ४२६**

**९.६.१९३ उत्सवे तद्ग्रामान्तः शवपाते प्रायश्चित्तम्**

**क्रि.२६.९२ - ९५**

तद्ग्रामान्तर्मृतौ सत्यां शीघ्रमुद्धृत्य तं शवम्।
प्रायश्चित्तं च पूर्वोक्तं कृत्वा शेषं समाचरेत्।।

शवं च केवलं नैव नयेत् केशवसंन्निधौ ।
नीतं चेत्स्याद्विनाशाय तद्ग्रामयजमानयोः।।

तस्मात्तद्दोषशान्त्यर्थं वास्तुहोमं च कारयेत्।
शान्तिं चैव महाशान्तिं हुत्वा तत्र विचक्षणः।।

ब्राह्मणान् भोजयित्वैव दक्षिणां च ददेद् गुरोः।

***

# ७. अस्पृश्यस्पर्शादिप्रायश्चित्तम्

## ९.७.१ गर्भालये सर्पप्रवेशादौ शान्तिः

**क्रि.२७.३७, ३८**

सर्पसंस्पर्शने बिम्बे गर्भगेहप्रवेशने।
वस्त्रमाल्यादि संशोध्य शुद्धोदैरभिषिच्य च।।

कुर्याच्छुद्धिं प्रतिष्ठोक्तां ध्रुवबेरस्य पूर्ववत्।

**प्र.२८.१ - ३**

अथास्पृश्यस्पर्शने तु प्रायश्चित्तं प्रवक्ष्यते।
सर्पमूषकमण्डूकमार्जारनकुलादिषु।।

गर्भागारं प्रविष्टेषु विण्मूत्रादिविसर्जने।
व्यपोह्य तत्पञ्चगव्यैस्तथाब्लिङ्गाभिरेव च।।

वैष्णवं विष्णुगायत्रीं शतमष्टोत्तरं जपेत्।

**वि.६९.४२८**

मूषकसर्पकृकलासमण्डूकमार्जारनकुलादिषु गर्भागारं प्रविष्टेषु विण्मूत्रविसर्जने च, तद्व्यपोह्य, पञ्चगव्यैः 'आपोहिष्ठा' दिना प्रोक्षयेत्।

**स.७३.२३, २४**

मृगैर्वा पक्षिभिर्वाथ सर्पाद्यैश्च प्रवेशने।।

इदं विष्ण्विति मन्त्रेण प्रोक्षयेत्पञ्चगव्यकैः।
शान्तिहोमं च हुत्वैव शक्तितो दक्षिणां ददेत्।।

**वि.६९.४२८**

तेषु[1] ध्रुवमारूढेषु विण्मूत्रविसर्जने च क्षिप्तं वस्त्रेण शोधयित्वा, शुद्ध्यर्थं कुशेन मार्जयित्वा, कुशोदकेन आपोहिरण्य पवमानैः प्रोक्ष्याऽर्चयेत्। तैरन्यबिम्बेषु स्पृष्टेषु शुद्धोदकैः संस्नाप्य प्रोक्ष्य पूर्ववदर्चयेत्।

**प्र.२८.३ - ५**

ध्रुवं चैवाधितिष्ठत्सु[2] विण्मूत्रादिविसर्जने।।

क्षिप्रं वस्त्रेण संशोध्य मार्जयित्वा कुशेन च।
आपो हिरण्यवर्णाभिः पावमानीभिरेव च।।

सम्प्रोक्ष्य चार्चयेद्देवमन्यथा विपरीतकृत्।
स्पर्शे तैरेव बिम्बानां शुद्धोदैः स्नापयेद्विधिः।

**क्रि.२७.५, ६**

श्वकुक्कुटवराहाणां शृगालानां प्रवेशने।
स्पर्शने च तथा तेषां शान्तिहोमं जुहोति च।।

पुनः प्रतिष्ठामार्गेण प्रतिष्ठां पुनराचरेत्।

**नि.३२**

श्वकाक ------- ते च प्रविशन्त्यालये यदि।
तत्तद् द्रव्यस्य शुद्धिं च वास्तुहोमं च हूयताम्।।

वैष्णवं जुहुयात्पश्चात् ब्राह्मणभोजनम्।
सुवर्णदानं पुण्याहं कृत्वा चोत्तरमाचरेत्।।

---

1. मूषकादिषु
2. 'सर्पमूषकमण्डूकमार्जारनकुलादिषु' इत्यनुवर्तते।

**वि.६९.४३१**

खद्योतपक्षिजातिप्रवेशे बिम्बे स्पृष्टे पूर्ववत् पर्यग्निपञ्चगव्याभ्यां शोधयित्वा, देवं शुद्धोदकैरभिषिच्य, प्रोक्षणैः प्रोक्ष्य, नित्याग्नौ चुल्यां वा वैष्णवं जुहुयात्। तत्समीपस्थान् बिम्बादीन् पूर्ववत् संशोध्य शुद्धोदकैः संस्नाप्य, पुण्याहं वाचयित्वा, पूर्ववद्धोमं[1] जुहुयात्।

**प्र.२८.३८ - ४०**

## ९.७.२ आलयाभ्यन्तरे सूतिकादिप्रवेशादौ शान्तिः

**वि.६९.४२८, ४२९**

आलयाभ्यन्तरे प्रविष्टे,[2] तत्स्पृष्टहविर्निवेदने च द्रव्यं यथाविधि शोधयित्वा, वास्तुहोमं हुत्वा, पर्यग्निपञ्चगव्याभ्यां शोधयित्वा, पुण्याहं कृत्वा, देवं कलशैः संस्नाप्य, नित्याग्नौ वैष्णवं विष्णुसूक्तं पुरुषसूक्तं रौद्रं सौम्यं ब्राह्मं श्रीसूक्तं महीसूक्तं च हुत्वा, ब्राह्मणान् भोजयेत्।

**प्र.२८.११ - १५**

एतेषु [3] सम्प्रविष्टेषु चालयाभ्यन्तरे तथा।।

तत्स्पृष्टहविषां चैव प्रमादात्तु निवेदने।
शोधयित्वाथ तद्द्रव्यं यथाविधि विशेषतः।।

वास्तुहोमं च हुत्वाथ पर्यग्निकरणं चरेत्।
पञ्चगव्यैसमभ्युक्ष्य पुण्याहमपि वाचयेत्।।

---

1. महाशान्तिहोमम्
2. सूतिकोदक्यारजकध्वजाद्यन्त्यजातिभिरित्यनुवर्तते।
3. उदक्यासूतिकादिषु

संस्नाप्य कलशैर्देवं हुत्वा नित्यानले ततः।
वैष्णवं विष्णुसूक्तं च नृसूक्तं रौद्रमेव च।।

ब्राह्मं च श्रीमहीसूक्ते ब्राह्मणान् भोजयेत्ततः।

### ९.७.३ गर्भालये चाण्डालादिप्रवेशादौ प्रायश्चित्तम्

**स.७३.१६ - २०**

चाण्डालाद्यैश्च सूतक्या महापातकसंयुतैः।।

गर्भालये प्रविष्टे चं बिम्बस्यातीव पार्श्वतः।
अन्यविप्रप्रवेशे तु स्पृष्टे बिम्बे च मोहतः।।

गोमयेनोपलिप्यैव प्रोक्षयेत्पञ्चगव्यकैः।
वास्तुहोमं च हुत्वैव पर्यग्निं कारयेत्पुनः।।

अन्यद्रव्यस्य शुद्धिं च यथाविधि च कारयेत्।
तथाब्जाग्नौ महाशान्तिमेकाहं जुहुयात् पुनः।।

कलशैर्विधिना सम्यक् स्नापयेत स्वशक्तितः।
पुनः प्रतिष्ठामत्रापि कारयेदिति केचन।।

**य.४९.२६ - २८**

चण्डालसूतिकोदक्यापतितादिप्रवेशने।
आलयान्तर्मृतौ सत्यां गोभिस्तत्राधिवास्य च।।

अष्टोत्तरसहस्रं वा शतं पञ्चाशदेव वा।
ब्राह्मणान् भोजयित्वा तु पुण्याहेनापि घोष्य च।।

पूर्वोक्तेन विधानेन प्रतिष्ठां पुनराचरेत्।

**वा.४५**

ध्रुवे वा पीठके वापि विमाने वाथ संस्पृशेत्।।

चण्डालाद्यन्तजैर्वापि भग्ने च्छेदे तथैव च।
दोषाद्यं यदि भवेत् तत्काले शक्तिमुद्वसेत्।।

विमाने दोषदुष्टे तु तद्ध्रुवे शक्तिमुद्वसेत्।
अशक्त्यां वा स तत्रैव ध्रुवशक्तिं विसृज्य च।।

अर्कमण्डलमध्ये तु प्रणवेनैवमुद्वसेत्।
ग्राह्यमग्राह्यकं ज्ञात्वा संलक्ष्य विधिना सह।।

पञ्चगव्यैस्समभ्युक्ष्य वास्तुहोमं पुनर्यजेत्।
पर्यग्निं चैव कृत्वा तु विमानादीनि सर्वशः।।

यथापूर्वं तथा कुर्यात् प्रतिष्ठामाचरेत् बुधः।

**खि.३४.८२ - ८५**

ब्रह्महर्म्यालयस्यान्तः प्रविष्टे तस्करादिभिः।।

देवं बालालये स्थाप्य बालालयविधानतः।
त्रिमासं वा द्विमासं वा स्थलशुद्धिं विधाय वै।।

तत्काले पौण्डरीकाग्नौ शान्तिसम्पादनाय वै।
पुनः संस्थापनान्तं तु महाशान्तिं हुनेत्ततः।।
सम्प्रोक्षणविधानेन पुनस्संस्थापनं चरेत्।

**९.७.४ अर्चनकाले सूतिकादिदर्शने शान्तिः**

**वि.६९.४२८**

तेष्वर्चनाकाले[1] वा दृष्टेषु देवं पञ्चगव्येनाभिषिच्य शुद्धोदकैः संस्नाप्य प्रोक्षणैः प्रोक्ष्य पूर्ववत्[2] हुत्वा अर्चयेत्।

**प्र.२८.१०, ११**

**९.७.५ ध्रुवबेरादौ सूतिकादिस्पर्शे शान्तिः**

**वि.६९.४२९**

ध्रुवबेरे कौतुकादिषु च[3] स्पृष्टेषु पूर्ववच्छुद्धिं[4] कृत्वा वास्तुहोमं हुत्वा पर्यग्निपञ्चगव्याभ्यां शोधयित्वा पुण्याहं कृत्वा देवं कलशैः संस्नाप्य अब्जाग्नौ महाशान्तिं हुत्वा पुनः प्रतिष्ठां कारयेत्।

**प्र.२८.१५ - १७**

**क्रि.२७.३८**

उच्छिष्टाशुचिसंस्पृष्टे बिम्बे पूर्वोक्तवच्चरेत्[5] ।।

**९.७.६ आशौचवद्द्विजादिभिः ध्रुवबेरादिस्पर्शादौ शान्तिः**

**स.७३.७ - १०**

आशौचवद्द्विजैः स्पृष्टे ध्रुवबेरे च कौतुके।

---

1. सूतिकादिषु
2. प्रथमावरणे सूतिकादिप्रवेशादिवत्
3. सूतिकोदक्यारजकध्वजाऽऽद्यन्त्यजातिभिरित्यनुवर्तते।
4. प्रथमावरणे सूतिकादिप्रवेशादिवत्।
5. सर्पस्पर्शोक्तवत्

वेददूषकपाषण्डैर्दीक्षितैर्देवलैरपि।।

शूद्रैर्वाथानुलोमैर्वा श्वभिर्वा कुक्कुटादिभिः।
एवमादिनिकृष्टैश्चास्पृश्यैः स्पृष्टेऽपि पूर्ववत्।।

हुत्वैकाहं महाशान्तिमधिवासं विनैव च।
स्नपनं च प्रतिष्ठोक्तं कृत्वैव स्थापयेत्पुनः।।

अनुक्तेषु तथान्यत्र महादोषेषु सर्वशः।
पूर्वोक्तेन क्रमेणैव प्रतिष्ठां पुनराचरेत्।।

**वि.६९.४३१**

ध्रुवबेरकौतुकादिषु[1] संस्पृष्टेषु पूर्ववन्महाशान्तिं[2] हुत्वा पुनः स्थापनमाचरेत्।
**प्र.२८.३६**

## ९.७.७ बिम्बस्य तान्त्रिकादिस्पर्शे प्रायश्चित्तम्

**स.७८.१८ - २१**

वैखानसेतरैर्विप्रैर्दीक्षितैर्देवलैरपि।
तान्त्रिकैर्दीक्षितैर्वापि चान्यतन्त्रपरायणैः।।

प्रतिष्ठायामर्चने वाप्युत्सवस्नपनादिषु।
प्रमादाद्यदि संस्पृष्टे ध्रुवबेरे च कौतुके।।

स्नापने चोत्सवे बिम्बे बलिबेरेऽपि वा तथा।

---

1. आशौचिद्विजैरित्यध्याह्रियते
2. आशौचिद्विजस्पृष्टहविर्निवेदनोक्तवत्

हुत्वैकाहं महाशान्तिमधिवासपुरस्सरम्।।
पुनः प्रतिष्ठामार्गेण प्रतिष्ठां पुनराचरेत्।

### ९.७.८ गर्भालये तान्त्रिकादिप्रवेशे प्रायश्चित्तम्

**स.७८.२१ - २४**

पूर्वोक्तदीक्षितैर्वापि[1] देवलैरन्यसूत्रिभिः।।

गर्भालये प्रविष्टे तु बुद्ध्या वापि प्रमादतः।
सर्वेषामपि वस्तूनां शुद्धिं पर्यग्निमेव च।।

अब्जाग्नौ च महाशान्तिमेकाहं जुहुयात्क्रमात्।
कलशैः स्नापयेद्देवं विधिना स्वस्वशक्तितः।।

पुनः प्रतिष्ठामत्रापि कारयेदिति केचन।

### ९.७.९ बिम्बस्यार्चकान्यस्पर्शे प्रायश्चित्तम्

**क्रि.२७.३९ - ४२**

एवं विप्रैरथान्यैस्तु क्रमात् द्वित्रिचतुर्गुणैः।
स्नापयेद्वैश्यसंस्पर्शे शताष्टकलशैर्विभुम्।।

चत्वारिंशद्भिरष्टाभिः नृपैरभिषेचितैः।
अर्चकान्यद्विजैस्स्पृष्टे शुद्धोदैरभिषेचयेत्।।

अभिषिक्तक्षत्रियैस्तु सर्वं ब्राह्मणवच्चरेत्।
महापातकिसंस्पर्शे प्रवेशे च तपोधनाः।।

आचरेत्प्रतिलोमोक्तं प्रायश्चित्तं यथाविधि।

---

1. वैखानसेतरमार्गेण दीक्षितैः

### ९.७.१० प्रथमावरणे सूतिकादिप्रवेशादौ शान्तिः

**वि.६९.४२८**

सूतिकोदक्यारजकध्वजाद्यन्त्यजातिभिः प्रथमावरणे प्रविष्टे, परिषद्देवानामर्चास्थाने संस्पृष्टे, प्रविष्टे च, दर्भोल्केनोद्दीप्य, वास्तुस्नपनोक्तमन्त्रैः पञ्चगव्यप्रोक्षणं पुण्याहं च कुर्यात्। नित्याग्नौ दौवारिकमन्त्रं द्वारपालकमन्त्रं वैष्णवं च जुहुयात्।

**प्र.२८.६ - ८**

### ९.७.११ प्रथमावरणे चण्डालादिप्रवेशे प्रायश्चित्तम्

**क्रि.२७.६, ७**

चण्डालादिप्रवेशे तु प्रथमावरणे यदि।।

वास्तुहोमं तथा हुत्वा शान्तिहोमं जुहोति च।
अष्टोत्तरशतैर्देवं कलशैः स्नापयेत् तथा।।

### ९.७.१२ द्वितीयावरणे चण्डालादिप्रवेशे प्रायश्चित्तम्

**क्रि.२७.८**

द्वितीयावरणे चैव स्नपनं स्याच्छताष्टभिः।
शान्तिं हुत्वा ------------------।।

### ९.७.१३ तृतीयावरणे चण्डालादिप्रवेशे प्रायश्चित्तम्

**क्रि.२७.८, ९**

---------- तृतीये तु चतुर्विंशतिभिस्तथा।।
स्नापयित्वा तु कलशैः समभ्यर्च्य निवेदयेत्।

## ९.७.१४ चतुर्थावरणे चण्डालादिप्रवेशे प्रायश्चित्तम्

**क्रि.२७.९, १०**

चतुर्थावरणे चेत्तु वैष्णवं त्वेकविंशतिम्।।

हुत्वा तु सप्तकलशैस्स्नापयित्वा समर्चयेत्।

## ९.७.१५ पञ्चमावरणे चण्डालादिप्रवेशे प्रायश्चित्तम्

**क्रि.२७.१०, ११**

पञ्चमावरणे चेत्तु दशकृत्वस्तु वैष्णवम्।।

हुत्वा तु पञ्चकलशैः स्नापयित्वा समर्चयेत्।

तत्तत्प्राकारपरिषद्दैवत्यं विंशतिं यजेत्।।

## ९.७.१६ षष्ठावरणे चण्डालादिप्रवेशे प्रायश्चित्तम्

**क्रि.२७.१२**

षष्ठावरण एवापि कलशैरेव सप्तभिः।

स्नापयित्वा तु विधिवत्पुण्याहमपि वाचयेत्।।

**प्र.२८.९**

बाह्यावरणपक्षे तु मार्जनेनोपलेपनैः।

प्रोक्षणैर्वास्तुयज्ञेन शुद्धिर्भवति सर्वतः।।

**वि.६९.४२८**

## ९.७.१७ परिवारदेवालयान्तः चण्डालादिप्रवेशे प्रायश्चित्तम्

**क्रि.२७.१४**

परिवारालयान्तश्चेत्तेषां स्नपनमाचरेत्।

### ९.७.१८ परिवारदेवालयाद्बहिः चण्डालादिप्रवेशे प्रायश्चित्तम्

**क्रि.२७.१४, १५**

बहिश्चेच्छतकृत्वस्तु तत्तन्मन्त्रं सवैष्णवम्।।

हुत्वा तु सप्तकलशैः स्नापयेदिति शासनम्।
पर्यग्निपञ्चगव्याभ्यां शुद्धिस्सर्वत्र कीर्तिता।।

### ९.७.१९ आलये महापातकिप्रवेशादौ प्रायश्चित्तम्

**वि.६९.४२९**

पञ्चपातकैश्चण्डालाद्यैश्चाऽलये प्रविष्टे, तत्स्पृष्टहविर्निवेदने च सप्ताहं महाशान्तिं हुत्वा, आलयमभ्युक्ष्य, पुनः प्रतिष्ठां कारयेत्। ध्रुवबेरे कौतुकादिषु स्पृष्टेषु पूर्ववच्छुद्धिं कृत्वा, सप्ताहं महाशान्तिं हुत्वा, वित्तानुसारेण कलशैः संस्नाप्य, पुनः प्रतिष्ठां कारयेत्।

**प्र.२८.१९ - २३**

महापातकिभिश्चैव चण्डालैः पुल्कसादिभिः।।

आलये सम्प्रविष्टे तु तत्स्पृष्टे विनिवेदिते।
सप्ताहं महतीं शान्तिं हुत्वाब्जाग्नौ विधानतः।।

संस्नाप्य कलशैर्देवं प्रतिष्ठां पुनराचरेत्।
पुनश्च ध्रुवबेरे वा बिम्बेष्वन्येषु मन्दिरे।।

स्पृष्टेषु पूर्ववच्छुद्धिं कृत्वा द्विगुणमेव च।
हुत्वा तु महतीं शान्तिं संस्नाप्य कलशैर्विभुम्।।

प्रतिष्ठोक्तक्रमेणैव प्रतिष्ठां पुनराचरेत्।

**स.७३.१ - ६**

पञ्चभिर्ब्रह्महत्यादिमहापातकसंयुतैः।
पाषण्डैर्नास्तिकैश्चैव सूतिक्योदक्ययाथवा।।

अन्यैश्च पतितैर्वाथ तथान्यप्रतिलोमजैः।
ध्रुवबेरे च संस्पृष्टे स्पृष्टे बिम्बे च कौतुके।।

महापातकसंयुक्तैश्चण्डालाद्यैरुदक्यया।
सूतिक्या वाथ संस्पृष्टे हवींषि विनिवेदिते।।

महाशान्तिं च सप्ताहमब्जाग्नौ जुहुयात्पुनः।
ब्राह्मणान् भोजयित्वा च शक्तितो दक्षिणां ददेत्।।

अधिवासं च पूर्वोक्तं कारयित्वा यथाविधि।
ध्रुवबेरे प्रकुर्वीत स्पृष्टे तत्र च पूर्ववत्।।

वास्तुहोमं तथा हुत्वा ध्रुवबेरे च कौतुके।
कलशैः स्नापयित्वैव प्रतिष्ठां कारयेत् पुनः।।

**क्रि.२७.१ - ३**

अतः परं प्रवक्ष्यामि प्रायश्चित्तं तपोधनाः।
चण्डालसूतिकोदक्या पतितप्रतिलोमजैः।।

गर्भालये प्रविष्टेस्तैः स्पृष्टे बिम्बे तथैव च।
सप्तरात्रं महाशान्तिम् अब्जाग्नौ जुहुयात्ततः।।

जलाधिवासनं कृत्वा जङ्गमानां तथैव च।
ध्रुवशुद्धिं च कृत्वा तु प्रतिष्ठां पुनराचरेत्।।

**९.७.२० गर्भालयाद्बाह्ये आशौचवत्प्रवेशे प्रायश्चित्तम्**

**वि.६९.४३१**

[1]आलयाद्बाह्ये सर्वत्र प्रविष्टे गौरवं लाघवं च ज्ञात्वा समूह्यैव कारयेत्।

**प्र.२८.३७**

**९.७.२१ पतितपाषण्डादिभिः गर्भगृहप्रवेशे प्रायश्चित्तम्**

**प्र.२८.२३, २४**

पतिते चैव पाषण्डे चान्यतन्त्रेण दीक्षिते।।

प्रविष्टे गर्भगेहे तु वास्तुशुद्धिं विधाय च।
हुत्वा तु महतीं शान्तिं प्रतिष्ठां पुनराचरेत्।।

**वि.६९.४२९**

पतिते गर्भगृहे प्रविष्टे वास्तुशुद्धिं कृत्वा, महाशान्तिं हुत्वा, अर्चयेत्।

**९.७.२२ बिम्बे शूद्रादिस्पर्शे प्रायश्चित्तम्**

**क्रि.२७.४**

शूद्रैर्वाथानुलोमैर्वा स्पृष्टे बिम्बे तथैव च।
शताष्टकलशैस्स्नाप्य प्रतिष्ठां पुनराचरेत्।।

**९.७.२३ आलयादिषु पञ्चपातकिसंसर्गिस्पर्शे प्रायश्चित्तम्**

**वि.६९.४३०**

तैः संसर्गिणां स्पर्शे सूतिकादीनामुक्तं प्रायश्चित्तं कारयेत्। तत्संसर्गिणां स्पर्शे स्नपनादिना शुद्ध्यति। तत्संसर्गिणां दोषो नास्ति।

**प्र.२८.३३, ३४**

---

1. आशौचिद्विजैरित्यध्याह्रियते

**९.७.२४ भगवदर्चने शवदूषितकूपजलोपयोगे प्रायश्चित्तम्**

**क्रि.२७.२३ - २५**

गृहीत्वाऽधावमज्ञानादन्तःस्थशवकूपके।
अर्चयेद्यदि तत्पक्वं हविश्चापि निवेदयेत्।।

वैष्णवं च शतं हुत्वा 'यद्देवादि'समन्वितम्।
स्नापयित्वा तु कलशैस्समभ्यर्च्य निवेदयेत्।।

अन्यथा चेन्महादोष इति पूर्वजदर्शनम्।

**९.७.२५ मण्डपादिषु अग्निदाहे प्रायश्चित्तम्**

**क्रि.२७.२५, २६**

मण्डपे गोपुरे चैव प्रपायां च तथैव च।।
अग्निदाहे महाशान्तिं हुत्वा संस्नापयेद्धरिम्।

**९.७.२६ गर्भालयादिषु अग्निदाहे प्रायश्चित्तम्**

**क्रि.२७.२६ - २८**

गर्भालयेऽग्निदाहे तु वस्त्रे माल्ये च भूषणे।।

देवबिम्बेऽग्निसंस्पर्शे तच्छीघ्रं व्यपनीय च।
सप्तरात्रं महाशान्तिं गन्धोदैः स्नपनं चरेत्।।

प्रतिष्ठाञ्च पुनः कृत्वा समभ्यर्च्य निवेदयेत्।

**९.७.२७ अग्निदाहेन बिम्बनाशे प्रायश्चित्तम्**

**क्रि.२७.२८ - ३६**

बेरनाशेऽग्निदाहेन तद्बेरमपनीय च।।

मासमेकं महाशान्तिं हुत्वा गर्भालये पुनः।
पर्यग्निपञ्चगव्याभ्यां शुद्धिं कृत्वोपलिप्य च।।

बिम्बमन्यत्समादाय प्रतिष्ठामाचरेत्पुनः।
दारवं मृण्मयं बेरं धूमाक्रान्तं परित्यजेत्।।

ज्वालाक्रान्तं तथा शैलं सन्त्यजेत् पेशलं यदि।
भिन्ने घटे घटाकाशं यथाकाशे प्रलीयते।।

बेरनाशे तथा शक्तिः विश्वं व्याप्यैव तिष्ठति।
ग्रहस्थानं कल्पयित्वा पद्माग्नौ च तथालये।।

महाशान्तिं च पद्माग्नौ हुत्वा तत्राष्टदिक्षु च।
तत्तद् ग्रहाग्निकुण्डेषु ग्रहशान्तिं जुहोति च।।

तत्तद्दैवत्यमन्त्रैश्च मध्याग्नौ पाञ्चभौतिकम्।
हुत्वा बिम्बं समासाद्य 'नमो ब्रह्मण' ईर्य च।।

'नमो वाचे' समुच्चार्य कुम्भतोयं स्पृशन् जपेत्।
प्रोक्षणैः प्रोक्षयेद् ग्रामं प्रदक्षिणवशेन च।।

संस्नाप्य कलशैर्देवं समभ्यर्च्य निवेदयेत्।
तस्मात्[1] पुनः प्रतिष्ठान्तं स्थण्डिले नित्यमर्चयेत्।।

### ९.७.२८ ध्रुवबेरस्य पीठचलने प्रायश्चित्तम्
### स.७५.२३, २४

तत्पीठे ध्रुवबेरस्य चलने सति तत्क्षणात्।

---

1. अग्निदाहकालात्

बालालयं प्रकुर्वीत पूर्वोक्तेन विधानतः।।

शिल्पिभिस्सुदृढं कृत्वा पुनस्थापनमाचरेत्।

**९.७.२९ आलये नैरन्तर्येण मासादूर्ध्वं महापातकिसंचारे शान्तिः**

**वि.६९.४३०**

एतेषु[1] प्रथमावरणे द्वितीये वा नैरन्तर्येण संचरत्सु मासे अतीते मासमेकं महाशान्तिं हुत्वा कर्षणादि पुनः संस्कारं कृत्वा महाप्रतिष्ठां कारयेत्।

**प्र.२८.२५, २६**

**वि.६९.४३०**

तेषु[2] प्रासादाभ्यन्तरे ब्राह्मे च सञ्चरत्सु संवत्सरे अतीते, अर्चनादीनि सन्त्यज्य, कौतुकादिरक्षणं कृत्वा, गर्भागारादिसप्तप्राकारेषु गाः वासयित्वा, मासेऽतीते सर्वत्र शुद्धिं कृत्वा, मासत्रयं महाशान्तिं हुत्वा, कर्षणादि पुनः संस्कारं कृत्वा, बालालयं सङ्कल्प्य, जलाधिवासादीनि कारयित्वा, बिम्बशुद्धिं कृत्वा, अशीत्यधिकसहस्रकलशैः संस्नाप्य, ब्राह्मणान् भोजयित्वा, वैष्णवान् सम्पूज्य, देवं बालालये प्रतिष्ठाप्य, आलयादि सर्वत्र नवीकरणं कृत्वा, महाप्रतिष्ठां कारयेत्।

**प्र.२८.२७ - ३२**

1. पञ्चपातकप्रभृतिषु
2. पञ्चपातकप्रभृतिषु

### ९.७.३० चोराद्यैर्बिम्बापहारे शान्तिः

**स.७६.६३ - ६५**

चोरैरपहृते बिम्बे शत्रुभिर्वा समाहृते।
यावद्बिम्बं पुनः कुर्यात् तावत्कालं तु तत्र च।।

रुक्मे भक्त्या समावाह्य विधिनार्चयति क्रमात्।
बिम्बं तत्पूर्ववत् कृत्वा कालापेक्षा न विद्यते।।

पूर्वोक्तेन विधानेन प्रतिष्ठां कारयेद्बुधः।

**क्रि.२३.१०६ - ११३**

चोरैर्वा शत्रुभिर्वाऽपि बिम्बं त्वपहृतं यदि।।

यावद्बिम्बं पुनः कुर्यात्तावत्कालन्तु तत्र वै।
भक्त्या सुवर्णशकले समावाह्य समर्चयेत्।।

बिम्बं तत्पूर्ववत्कृत्वा प्रतिष्ठां कारयेद्बुधः।
विनैव देवदेवेन देव्यावपहृते यदि।।

देव्यौ ते विधिना कृत्वा प्रतिष्ठाप्य यथा पुरा।
पूर्वोक्तेन विधानेन विवाहं विधिना चरेत्।।

जुहुयाद्यदि नित्याग्नौ ध्रुवादावाहनं यदि।
न विवाहविधिं कुर्यादिति पूर्वजशासनम्।।

देवीभ्यां तु विना तत्र देवेशेऽपहृते यदि।
देव्योरनुगुणं देवबेरं कृत्वा यथाविधि।।

ध्रुवादावाहनं कृत्वा नित्यमग्निं प्रणीय च।
प्रतिष्ठोक्तक्रमेणैव प्रतिष्ठां पुनराचरेत्।।

त एव देव्यौ देवस्य नान्ये देव्यौ प्रकल्पयेत्।
तच्छक्तैः पूर्वसंस्कारं (?) न विवाहविधिं चरेत्।।

**९.७.३१ देवालयादौ मानुषनिवासे प्रायश्चित्तम्**

**स.७९.२१ - २५**

मण्टपे गोपुरे वापि देवदेवस्य सन्निधौ।
महानसेऽग्निज्वालायां वाहनानामथालये।।

सभास्थाने धनस्थाने शयनालय एव वा।
परिवारालये वापि कर्ममण्टप एव वा।।

ये निवासं प्रकुर्वन्ति तेषां वासस्तु रौरवे।
निवासः परिहर्तव्यस्तस्माद्देवालयादिषु।।

शीघ्रं तदपहायैव पञ्चगव्यैः कुशोदकैः।
सर्वत्र प्रोक्ष्य तन्मन्त्रैर्वास्तुहोममथाचरेत्।।

पुनः प्रतिष्ठामार्गेण तन्मूर्त्यावाहनान्तकम्।
सर्वं शास्त्रं समालोच्य प्रतिष्ठां पुनराचरेत्।।

**९.७.३२ देवालयसमीपे प्रतिलोमनिवेशने प्रायश्चित्तम्**

**क्रि.२७.१६ - १९**

देवालयसमीपे तु प्रतिलोमनिवेशने।
अर्चयेद्देवदेवं तं मोहादपि न जातुचित्।।

तत्प्राकारानुषक्तं चेन्महादोषो भवेत्ततः।
राष्ट्रस्य यजमानस्य ग्रामस्य च महद्भयम्।।

अपनीय तु तच्छीघ्रं सप्तरात्रं यथाविधि।
महाशान्तिं च हुत्वा तु प्रतिष्ठां पुनराचरेत्।।

शतदण्डान्तरे चैव प्रतिलोमनिवेशनम्।
चण्डालपुल्कसानां च क्रोशादूर्ध्वं प्रकल्पयेत्।।

## ९.७.३३ आलये मनुष्यताडनादौ प्रायश्चित्तम्

**वि.६९.४३१**

पूर्वोक्तदेशेषु मनुष्याणां श्वकुक्कुटादीनां च छेदने ताडने रुधिरस्रावे मृतादौ संभूते, तद्व्यपोह्य, तद्देशशुद्धिं कृत्वा, वास्तुहोमं हुत्वा, देवं सप्तभिः कलशैः संस्नाप्य, तद्दोषशमनार्थं महाशान्तिं हुत्वा, पूर्ववदभ्यर्च्य, (प्रतिष्ठां कारयेत्) हविर्निवेदयेत्।

**प्र.२८.४१ - ४३**

## ९.७.३४ आलयाद्बाह्ये मनुष्यताडनादौ प्रायश्चित्तम्

**वि.६९.४३२**

आलयाद्बाह्य[1] संभूते पूर्ववत्[2] पर्यग्निं कृत्वा देवं शुद्धोदकैस्संस्नाप्य शान्तिहोमं हुत्वा वैष्णवान् संपूज्य पूर्ववदर्चयेत्।

**प्र.२८.४४, ४५**

## ९.७.३५ देवस्य शवदर्शने प्रायश्चित्तम्

**वि.६९.४३२**

देवेन शवे दृष्टे देवं संस्नाप्य वैष्णवं विष्णुसूक्तं पुरुषसूक्तं जुहुयात्।

**प्र.२८.४५, ४६**

---

1. मनुष्यादीनां छेदनादौ इति शेषः 2. खद्योतादिप्रवेशवत्

**९.७.३६ प्रथमावरणे प्राणिमरणे प्रायश्चित्तम्**

**वि.६९.४३२**

प्रथमावरणे गजाऽश्वपशुगर्दभादिषु मृतेषु तद्देशं खनित्वा, वास्तुहोमं हुत्वा, शुद्धोदकैरभिषिच्य, वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं च जुहुयात्।

**प्र.२८.४६ - ४८**

**९.७.३७ गर्भालयादौ मरणे प्रायश्चित्तम्**

**क्रि.२७.२०, २१**

गर्भालये तु मरणे प्रायश्चित्तं प्रवक्ष्यते।
चण्डालादिप्रवेशे तु यदुक्तं तत्समाचरेत्।।

प्रथमावरणे चेत्तु तत्तथैव समीरितम्।

**९.७.३८ शालानुषक्तशालासु मरणे प्रायश्चित्तम्**

**क्रि.२७.२१, २२**

शालानुषक्तशालासु बहिर्मरणसम्भवे।।

तथैव मरणे चैव महाशान्तिं सकृद्यजेत्।
संस्नाप्य कलशैर्देवं समभ्यर्च्य निवेदयेत्।।

**९.७.३९ दोषसामान्यप्रायश्चित्तम्**

**खि.३७.३४**

येषां प्रातिस्विकी नोक्ता दोषाणां निष्कृतिस्त्विह।
वैष्णवेन च होमेन शान्तिं सम्यक्समाचरेत्।।

**९.७.४० सर्वत्र दोषानुरूपं प्रायश्चित्तम्**

**स.७३.११ - १६**

अल्पदोषसमायुक्ते बिम्बे स्पृष्टेऽखिलैरपि।
अल्पदोषयुते स्पृष्टे हविष्यपि निवेदिते।।

दशकृत्वो महाशान्तिमब्जाग्नौ जुहुयात्तथा।
स्नपनोक्तक्रमेणैव कलशैः स्नापयेद्विभुम्।।

दोषमल्पं महान्तं च समालोच्य यथाविधि।
विचार्यैव विनिश्चित्य ज्ञात्वैव गुरुलाघवम्।।

तस्य दोषस्य सदृशं प्रायश्चित्तं समाचरेत्।
यथा दोषेऽग्निहोत्रस्य पुनराधानमुच्यते।।

तथा दोषे तु बिम्बस्य पुनःस्थापनमाचरेत्।
तस्योपघातमित्युक्तं प्रायश्चित्तं तु यत्र तु।।

कलशैः स्नपनं तत्र बिम्बस्येति विधीयते।

***

# ८. शान्तिकर्माणि

## ९.८.१ कायिकपापस्य शान्तिः

**खि.३७.३९**

यत्तु कायकृतं पापं द्रव्यदानेन शुद्ध्यति।

## ९.८.२ मानसिकपापस्य शान्तिः

**खि.३७.३९**

यच्च वै मानसं पापं प्राणायामेन शुद्ध्यति।।

## ९.८.३ द्रव्यकृतपापस्य शुद्धिः

**खि.३७.४०**

यच्च द्रव्यकृतं पापं सुहुतेन विशुद्ध्यति।

अन्नदानेन चोक्ताभिः दक्षिणाभिश्च पूजया।।

## ९.८.४ ऋत्विक्कृतपापस्य शुद्धिः

**खि.३७.४१**

ऋत्विग्भिस्तु कृतं पापं जपैर्ध्यानेन शुद्ध्यति।

## ९.८.५ मौनोपवासपूजासु प्राप्तदोषपरिहारः

**खि.३७.४१, ४२**

मौनोपवासपूजासु प्रमादाद्दोषसम्भवे।।

उपवासे भोजनं स्यान्मौने प्रणवजापनम्।
अर्चनायां यथाप्रोक्तपूजावृत्तिर्विधीयते ।।

## ९.८.६ अद्भुतशान्तौ निमित्तानि

**स.७३.२५ - ३३**

अथातोऽद्भुतशान्तिं च प्रवक्ष्यामि तपोधनाः।
बेरस्य रोदने दृष्टे बन्धने भाषणे तथा।।

अन्यत्र दृष्टे पूर्वस्माद(?न्यथा) परिवर्तने।
तदूर्ध्वाधोगते तस्मिन् यद्गते तद्विपर्यये।।

ज्वालायुक्ते धूमकेतौ रुधिरस्रावणेऽपि च।
तृणादौ कृमिकीटादौ देवबिम्बे समुद्भवे।।

स्वप्ने च क्रोधनादौ च दृष्टे तत्र तथाद्भुते।
आकाशे तु ग्रहाणां च दृष्टे चाद्भुतदर्शने।।

तेषां युद्धे च सम्भूते प्रतिसूर्यस्य दर्शने।
अशनेः पतने वापि महावातसमुद्भवे।।

विमाने पतिते भिन्ने तस्यैव चलने तथा।
अकाले पूर्णचन्द्रे च क्षीणयुक्ते तथैव च।।

सूर्येऽपि क्षीणयुक्ते च प्रतिसूर्यस्य दर्शने।
प्रतीपगमने तस्य दिवा नक्षत्रदर्शने।।

दिशां दाहे च दिग्धूमे महोल्कापतने सति।
एवमाद्यद्भुते दृष्टे राज्ञो राष्ट्रस्य वै पुनः।।

ग्रामस्यापि विनाशः स्यात् ततश्शान्तिं समाचरेत्।

**खि.४०.१ - ९**

अतः परं प्रवक्ष्यामि दुर्निमित्तप्रतिक्रियाम्।
देवागारेऽग्निना दग्धे मधुलिङ्गि (मधुलङ्गिभिः) पराहते।।

रक्तस्त्रीदर्शने चैव कवकादिसमुद्भवे।
बिम्बादीनां रोदने च रक्तस्रावे च कम्पने।।

हसने चाश्रुपतने रूपान्तरसमुद्भवे।
चैत्यवृक्षप्रपतने छेदे भेदे च शोषणे।।

भूमिकम्पे दिव्यकाले मेघनिर्घोषसम्भवे।
तडित्स्फूर्जितयोगे च दिग्दाहे पांसुवर्षणे।।

गन्धर्वनगरे दृष्टे दिवा नक्षत्रदर्शने।
अपर्वणि ग्रस्तयोस्तु गगने चन्द्रसूर्ययोः।।

अकाले शक्रधनुषि श्वजम्बुकविरोदने।
दुर्भिक्षे सागरक्षोभे वियोनिप्रसवे भये।।

राष्ट्रक्षोभे शत्रुभये महाव्याधिभये तथा।
चन्द्रादित्यप्रतिच्छायाप्रातिकूल्यसमुद्भवे।।

ग्रहयुद्धेऽरिष्टराशौ ग्रहकूटसमागमे।
महोत्पातेषु शास्त्रोक्तेष्वन्येषु विविधेषु च।।

एवमादिषु शास्त्रोक्तदुर्निमित्तेषु यत्नतः।
शान्तिं कुर्वीत विधिवदालये दोषशान्तये।।

**९.८.७ अद्भुतसृष्टौ हेतुः**

**वि.७५.४५६**

नराणां पापबाहुल्यादपराधबाहुल्याच्च देवाः सृजन्त्यद्भुतानि।।

**प्र.२९.८३, ८४**

**ज्ञा.९.१३**

अद्भुतान् मनुजानामपराधात् देवाः सृजन्ति।

**९.८.८.० अद्भुतं त्रिविधम्**

**वि.७५.४५७**

अद्भुतानि त्रिविधानि - दिव्यानि, आन्तरिक्षाणि, भौमानि चेति।।

**ज्ञा.९,१४ ; प्र.२९.९०**

**९.८.८.१ अद्भुतं दिव्यम्**

**वि.७५.४५७**

दिव्यानि ग्रहविकारग्रहयुद्धभेदानावृष्टिसर्वग्रासोपराग नक्षत्रभेदानी-त्येवमादीनि।।

**प्र.२९.९१, ९२**

**ज्ञा.९. १४**

दिव्या ग्रहविकारग्रहयुद्धाद्यनेकविधाः।

**९.८.८.२ अद्भुतमान्तरिक्षम्**

**प्र.२९.९२ - ९५**

आन्तरिक्षाणि चार्केन्द्वोः परिवेषो निरन्तरः।।

वर्णान्तरेण बाहुल्यात्परिवेषस्तथाविधः।
रात्राविन्द्रधनुर्देवसद्म चाकाशमण्डले।।

अशन्युल्कादिपातश्च राहुपुच्छादिदर्शनम्।
नक्षत्रपतनं केतोः धूमस्येन्द्रस्य दर्शनम्।।

गन्धर्वनगरस्यापि दर्शनं पतनं तु वा।
प्रतिसूर्याब्जनक्षत्रदर्शनं सम्प्रचक्षते।।

**वि.७५.४५७**

**ज्ञा.९. १४**

आन्तरिक्षाः परिवेषेन्द्रचापोल्कापाताशनिपातनिर्घातोपलवर्षगन्धर्व-नगरधूमेन्द्रकेतुप्रतिसूर्यादयः।

### ९.८.९.० अद्भुतं भौममनेकविधम्

**वि.७५.४५७**

भौमानि चरस्थिरभावादनेकधा।

**ज्ञा.९.१४ ; प्र.२९.९६**

### ९.८.९.१ अद्भुतं भौमं चरम्

**वि.७५.४५८**

चरेषु देशकालस्वभावविरुद्धयुग्माधिकप्रसूतिः, वानरसर्पाश्वमार्जा-रादियोनिजानां नागगोहयमहिषादिविपरीतयोनिजननं, पक्षिसर्पकृमि-कीटदिविपरीतवर्णविपरीताकारविपरीतालयवास विपरीताश्रयाश्च, आलये रक्तशिथिलीसर्पदर्शनमित्येवमादीनि।

**प्र.२९.९६ - ९९**

**९.८.९.२ अद्भुतं भौमं स्थिरम्**

**वि.७५.४५८**

स्थिरेषु प्रतिमारोदन, हसन, जल्पन, परिवर्तन, स्वेद, रुधिरस्राव, ज्वलन, धूमीकृताङ्ग, कृमिकीटपतङ्गाद्युद्भवाकालस्फोटन, धूमाङ्गकम्पन, स्वापन, तृणवल्मीकोद्भव, रक्तस्त्रीदर्शन, प्रतिलोमपतित पाषण्डान्त्य-जातिसृगालादिवर्णास्पृश्यस्पर्शन, प्रवेशन, (स्थूणा) स्तम्भविरोहण, चलन, परिवर्तनापसर्पण, भित्तिकवाटासन, शयनायुधानि, अग्निहोत्रापस्कर-विकारमक्षिकावृक्षपतन परिवर्त्तनोपसर्पणफलपुष्पपत्रशाखादिविपरीतदर्शन जलरक्तस्रावादीनि।

**प्र.२९.१०१ - १०७**

**ज्ञा.९.१४**

तत्र प्रतिमादिषु रोदनहसनज्वलनपरिवर्तनस्वेदरुधिरस्रावकृमि-कीटपतङ्गतृणाद्युद्भवा ज्वलनधूमादयः। प्रासादादिषु अप्रवेश्य मृगपक्षि-सर्पादिप्रवेशनसर्पणारोहणचलनपरिवर्तनोपसर्पणभित्तिकवाटोर्मा -------- रासनशयनायुधाम्बरकूपाग्निहोत्रोपस्करविहारमक्षिकावल्मीक-रक्तस्त्रीजननादयः। वृक्षादिषु पतनपरिवर्तनोपसर्पणफलपुष्प पत्रशाखादि-विकाराद्यद्भुता भवन्ति।

**९.८.१० भौमस्थिराद्भुतस्य नानाविधानिष्ठकरत्वम्**

**वि.७५.४५७, ४५९**

तेष[1] बेरपीठगर्भगृहभवानि ब्राह्मणराजराष्ट्रविनाशकारणानि ; विशेषेण

1. स्थिरभौमाद्भुतेषु।

कर्त्राराधकयोश्च। प्रासादोत्पन्नानि क्षत्रियस्य। प्रासादे अधिष्ठान-पादप्रस्तरग्रीवाशिखरोद्भवानि क्रमेण क्षत्रियवंशोद्भवमुख्याभिषेक-योग्ययुवराजाभिषिक्तमहाराजानामातङ्कभयानावृष्टिकराणि। प्रथमावरणे वैश्यजातीनां, मन्त्रिपुरोहितस्य, माण्डलिकानां च भयावहं प्राणपीडादिभयप्रदं च। द्वितीयावरणादिषु शूद्रजातीनां सर्वदुःखकरं, सस्यनाशनं, गजाश्वमहिषपशूनां नाशकरम्। अग्निकुण्डे पुरोहितस्य, चतुर्मुखस्थाने द्विजातीनां, रुद्रालये सर्वजातीनां, गुहालये नृपस्य माण्डलिकानां च, वक्रतुण्डालये सेनेशानां, श्रियआलये राजपत्नीनां, दुर्गास्थाने अन्यस्त्रीणां, मातृस्थाने निकृष्टजातीनां, सोमस्थाने चौषधीनां, भास्करालये नृपवाहनशस्त्रजीविनाम्, अन्यदेवालये तत्तद्भक्तानामपि लक्षयेत्। आस्थानमण्टपसभामण्टपराजवेश्म-प्राङ्गणक्रीडास्थानमहानसाचार्ययजमानादिसर्वेतरवर्णवेश्मचैत्यवृक्षादिषु सम्भूतानां वल्मीकरक्तस्त्रीदर्शनमक्षिकादीनां फलानि दिवि (दिग्वि?)भागेन विज्ञेयानि।

**प्र.२९.१०८ - ११९**

**ज्ञा.९.१५**

स्थावरप्रभवेषु विष्णुजा लोकविनाशाय, ब्रह्मजा द्विजातीनां, रुद्रजा सर्ववर्णानां, लोकपालभवा राज्ञां, स्कन्दजा माण्डलिकानां, विनायकजाः सेनाधिपानां, दुर्गामातृजा नृपस्त्रीणाम्, आदित्यजा नृपवाहनायुधानां, तत्तत्परिवारजाः तत्तद्भक्तानां विनाशाय भवन्ति। एतेषां शान्तिकर्म सद्य एव समारभेत।

## ९.८.११ भौमचराद्भुतेषु तारतम्यम्

**वि.७५.४५८**

तेषां दिव्यान्तरिक्षभवानि उत्तमोत्तमानि। नरभवानि उत्तमानि। नागगोहयमहिषादिभवानि मध्यमानि। पक्षिसरीसृपादिभवानि अधमानि।

**प्र.२९.९९, १००**

**ज्ञा.९,१४**

तत्रोत्तमा मध्यमा अधमाश्चेति त्रिविधाः जङ्गमजाः। विद्वद्ब्राह्मणतपस्विषु कालदेशस्वभावविरुद्धं यद्दृष्टं तत्प्रवरम्। नागगोमायुमहिषादिषु यद्दृष्टं तन्मध्यमम्। पक्षिसर्पकृमिकीटपतङ्गादिषु यत् तज्जघन्यम्।

## ९.८.१२ भौमस्थिराद्भूतेषु तारतम्यम्

**प्र.२९.१२० - १२३**

भौमेषु देवबेरार्चापीठगर्भगृहान्तरे।
जाता दोषास्तु सम्प्रोक्ताः उत्तमोत्तमसंज्ञिताः।।

उत्तमास्तु पुनर्जाताः प्राकारे मुखमण्डपे।
मध्यमाः प्रथमावरणे शेषास्तूक्तास्तथाऽधमाः।।

तथा राजाङ्गणे चोत्तमोत्तमाः परितस्ततः।
अङ्कणेषूत्तमा अन्तर्वास्तुके मध्यमाः स्मृताः।।
अधमा वास्तुनो बाह्ये तारतम्यमिति स्मृतम्।

**वि.७५.४५९**

**ज्ञा.९.१४**

स्थावरजाः त्रिविधाः। प्रतिमादिषु प्रवराः। प्रासादादिषु मध्यमाः। वृक्षादिष्वधमाः।

### ९.८.१३ दिव्यान्तरिक्षयोरद्भुतयोः चिकित्सातीतता

**वि.७५.४६०**

दिव्यान्तरिक्षयोश्चिकित्सा नास्ति। शान्तिर्भवति।

**प्र.२९.१२३**

### ९.८.१४ अद्भुतानां शान्तेरावश्यकता

**वि.७५. ४५६**

तेष[1] दृष्टेषु सद्यः शान्तिं कुर्यात्। अज्ञानादर्थलोभाद्वा न कुर्याच्चेत्, कर्त्राराधकयोर्ग्रामस्य च महद्भयं राज्ञो राष्ट्रस्य च क्षोभश्च जायते। तस्मात् द्वादशाहाभ्यन्तरे शान्तिं कुर्यात्।

**प्र.२९.८४ - ८६**

**ज्ञा.९.१४**

दिव्या आन्तरिक्षाश्च राजराष्ट्रविनाशाय। भौमाः तद्भूमिकानामा-तङ्कार्थनाशानावृष्टितस्करपरचक्रभयानि च सूचयन्ति। अतः शान्तिविधानमारभेत।

### ९.८.१५ अद्भुतशान्तेः कालनिर्णयः

**वि.७५. ४५७**

तस्मात्[2] द्वादशाहाभ्यन्तरे शान्तिं कुर्यात्। द्वादशाहातीते महाशान्तिं हुत्वा, वैष्णवान् सम्पूज्य, शक्तितो दक्षिणां दत्त्वा आरभेत। मासे

1. अद्भुतेषु
2. अद्भुतदर्शनात्

अतीते महाशान्तिं सप्ताहं हुत्वा, विप्रशतं भोजयित्वा, देवमनुमान्य कुर्यात्। षण्मासातीते भगवान् न रमेत। तस्मात् सर्वप्रयत्नेन शान्तिम् आरभेत।।

**प्र.२९.८६ - ९०**

### ९.८.१६ अद्भुतेषु भौमचरणां शान्तिप्रकारः

**वि.७५. ४६०**

भौमेषु चरेषु निमित्तनैमित्तिकौ देशान्तरे वासयित्वा शान्तिमारभेत।

**प्र.२९.१२४**

**ज्ञा.९.१५**

जङ्गमेषु यद्देवादिवैष्णवान्तं हुत्वा शक्तितो दक्षिणां दद्यात्।

### ९.८.१७ अद्भुतेषु भौमानां शान्तिप्रकारः

**ज्ञा.९.१४**

भूमिप्रभवेषु देवेशमभ्यर्च्य, शान्तिं सप्ताहं हुत्वा, गुरवे दक्षिणां दद्यात्। ब्राह्मणान् भोजयित्वा पश्चादग्निषु शान्तिं जुहुयात्।

### ९.८.१८ दुर्निमित्तशान्तिः साधारणी

**खि.४०.१०, ११**

पौण्डरीकाग्निमाधाय वायव्यं वैष्णवं तथा।
रौद्रं ब्राह्मं महाशान्तिहोमं च जुहुयाद् गुरुः।।

आलयस्थितदेवानां महास्नपनमाचरेत्।

**खि.४०.३१, ३२**

------------- मया सङ्ग्रह ईरितः।

सर्वोत्पातेषु जातेषु यत्र कुत्रापि वस्तुनि।।

तद्ग्रामे संहितग्रामे देवागारे विशेषतः।
सर्वदेवात्मभूतस्य विष्णोः शान्तिविधायिनः।।

शान्तिहोमादिकं सर्वमुक्तं विधिवदाचरेत्।

**९.८.१९ अग्निदाह(दुर्निमित्त)स्य शान्तिः**

**खि.४०.११ - १३**

अग्निदाहे तु वायव्यमाग्नेयं वारुणं तथा।।

ऐन्द्रं ब्राह्मं वैष्णवं च महाशान्तिं हुनेत्ततः।
विशेषस्नपनं कृत्वा प्रभूतं च निवेदयेत्।।

दद्याद्भूतबलिं चैव ग्रामे सर्वत्र शान्तये।

**९.८.२० भित्त्यादिचलनादीनां शान्तिः**

**स.७३.३६ - ३८**

तथैव भित्तेः स्थूणस्य कवाटस्य भुवङ्गयोः।
चलने गमने वापि तिर्यग्याते विपर्यये।।

चरे ब्राह्मणगेहादौ वृक्षादौ च स्थिरेऽथवा।
कालदेशस्वभावस्य विपरीतसमुद्भवे।।

शान्तिहोमं च हुत्वैव शक्तितो दक्षिणां ददेत्।

**९.८.२१ बेररोदनाद्यद्भुतानां शान्तिः**

**स.७३.३३ - ३५**

अब्जाग्नौ च महाशान्तिं सप्ताहं वा त्र्यहं तु वा।।

आज्येन चरुणा हुत्वा शान्तिमन्त्रं च पूर्ववत्।
विधिना कलशैर्भक्त्या स्नापयेच्च ततो हरिम्।।

महाहविर्निवेद्यैव दद्यादाचार्यदक्षिणाम्।
मन्त्रैश्च वैष्णवैस्स्तुत्वा ब्राह्मणानपि भोजयेत्।।

**खि.४०.१७ - २१**

स्थावरभ्रमणे चैव प्रतिमारोदनादिषु।
भूमियज्ञं च कृत्वा तु महाशान्तिं हुनेत्ततः।।

जुहुयात्सर्वदेवत्यं सहस्राहुतिपूर्वकम्।
वैष्णवं जुहुयाद् ब्राह्मं रौद्रं सौरं च सौम्यकम्।।

पुण्याहं वाच्य गोदानसूक्तं वैष्णवमेव च।
पौरुषं द्वादशान्यानि जपेत्सूक्तानि संयतः।।

वेदानध्यापयेच्चापि महास्नपनमाचरेत्।
प्रभूतं च निवेद्यैव कुर्याद् ब्राह्मणभोजनम्।।

भूतचैत्यबलिं दद्याद् ग्रामे सर्वत्र सन्धिषु।
लाजापूपहरिद्रान्नैरर्धरात्रौ बलिस्स्मृतः।।

## ९.८.२२ महाबेरे स्वेदादिदर्शने शान्तिः

**वि.६९.४३२**

महाबेरे हि स्वेदरुधिरस्रावरोदनजल्पहासधूमादिषु सत्सु आलयाभिमुखे पौण्डरीकाग्निं साधयित्वा वैष्णवं विष्णुसूक्तं पुरुषसूक्तम् ईंकारादींश्च हुत्वा, देवं कलशैस्संस्नाप्य, अभ्यर्च्य, हविर्निवेद्य, ब्राह्मणान् भोजयित्वा, वैष्णवान् सम्पूज्य, आचार्यदक्षिणां दद्यात्।

**प्र.२८.४८ - ५१**

[अत्र 'ईंकारादींश्च' इत्यस्य स्थाने 'ईंकारान् पारमात्मिक'मिति, 'कलशैः संस्नाप्य' इत्यस्य स्थाने 'संस्नाप्य देवेशं कलशैः सप्तभि'रिति च दृश्यते। ]

**९.८.२३ आलये उत्पातादिसम्भवे शान्तिः**

**ज्ञा.१७.१८७**

अथोत्पाताशनिपातधूमादिभिः मन्दिरे स्पन्दिते महाशान्तिं हुत्वा, विप्रशतं भोजयित्वा, दक्षिणां दद्यात्।

**नि.३१**

अत्युत्पातादिके देवमन्दिरे च विशेषतः।।

महाशान्त्यादिभिर्हुत्वा ब्राह्मणान् भोजयेच्छतम्।
शक्त्यनुरूपं विप्रेभ्यो दक्षिणां च ददेत्पुनः।।

**९.८.२४ आलये उल्कादिपतने शान्तिः**

**स.६६.६० - ६२**

अग्न्युल्काशनिधूमाद्यैर्दोषयुक्ते च मन्दिरे।।

ईंकारादींश्च हुत्वा तु पारमात्मिकमेव च।
मिन्दाहुति च जुहुयाद्विच्छिन्नेन समायुतम्।।

ब्राह्मणान् भोजयित्वा तु गुरवे दक्षिणां ददेत्।

**क्रि.२०.१०६ - १०८**

अग्न्युल्काशनिधूमाद्यैर्दोषयुक्ते च मन्दिरे।।

शान्तये तस्य जुहुयाद् ईकारादींस्तथैव च।
मिन्दाहुती च विच्छिन्नं पारमात्मिकमेव च।।

ब्राह्मणान् भोजयित्वा तु दद्यादाचार्यदक्षिणाम्।

**९.८.२५ चैत्यवृक्षादिपातादिदुर्निमित्तानां शान्तिः**

**खि.४०.२२ - २५**

चैत्यवृक्षादिपाते चाकालशोषादिदर्शने।
आग्नेयं वारुणं सौम्यं महाशान्तिं तथा हुनेत्।।

वनाधिदेवपूजां च कुर्यात् स्नपनमाचरेत्।
सहस्रकलशैस्स्नानं देवदेवस्य चेष्यते।।

महाहविः प्रभूतं च स्नपनान्ते निवेदयेत्।
ग्रामे सर्वत्रार्धरात्रौ महाभूतबलिं क्षिपेत्।।

दानानि दद्याद्विप्रेभ्यो भोजयेच्च विशेषतः।

**९.८.२६ प्रतिच्छायाप्रातिकूल्यस्य शान्तिः**

**खि.४०.२५ - २७**

छायाप्रतिवशे काले (?) महाशान्तिं हुनेत्क्रमात्।।

ब्राह्मं च वैष्णवं रौद्रमाग्नेयं वारुणं तथा।
सौरं सौम्यं च वायव्यं हुत्वा संस्नापयेद्विभुम्।।

अन्येषु च निमित्तेषु दृष्टेष्वेवं समाचरेत्।

### ९.८.२७ जन्मनक्षत्रेषु उत्पातदर्शनशान्तिः

**खि.४०.२७ - ३१**

राज्ञां जन्मदिनेष्वेषु दृष्टेषु तु विशेषतः।।

यजमानस्य ग्रामस्य तथा राष्ट्रस्य जन्मभे।
ग्राममध्ये तु शान्त्यर्थं कुर्याच्छान्तिं विधानतः।।

न कुर्याच्चेदनर्थस्स्यादवश्यं शान्तिमाचरेत्।
उत्पातेषु तु दृष्टेषु तत्क्षणे शान्तिमारभेत्।।

कालक्षेपो न कर्तव्य उत्पाता घोरभीतिदाः।

### ९.८.२८ प्रतिसूर्यदर्शने शान्तिः

**प्र.२८.६०, ६१**

आकाशे प्रतिसूर्यस्य दर्शने वैष्णवं तथा।।

सौरं च दशकृत्वस्तु हुत्वाऽभ्यर्च्य विशेषतः।

**वि.६९.४३३**

[अत्र विशेषतोऽभ्यर्चनं न विधीयते।]

### ९.८.२९ दिग्दाहे शान्तिः

**वि.६९. ४३३**

दिग्दाहे वैष्णवं दिग्देवत्यम् आग्नेयं च जुहुयात्।

**प्र.२८.६१**

**९.८.३० उपलवर्षे शान्तिः**

**वि.६९. ४३३**

उपलवर्षे वारुणं, वैष्णवं, त्रयस्त्रिंशत्कृत्वो जुहुयात्।

**प्र.२८.६२**

**९.८.३१ अकाले इन्दुक्षयादौ शान्तिः**

**वि.६९.४३३**

अकाले इन्दुक्षये पूर्तौ प्रतिदर्शने महोत्पाते च महाशान्तिं हुत्वा देवं विशेषतोऽभ्यर्च्य हविर्निवेद्य ब्राह्मणान् भोजयेत्।

**प्र.२८.६२, ६३**

**९.८:३२ रक्तस्त्रीदर्शने फलम्**

**य.४७ (परिशिष्ट) ५० - ५३**

अतः परं प्रवक्ष्यामि रक्तस्त्रीणां तु लक्षणम्।।

ब्रह्मस्थाने तदुत्पत्तौ परं भयमवाप्नुयात्।
रौद्रे तु दृश्यते कृ ? कारयेत् ततः।।

आग्नेय्यामतिदृश्येत ? तरितः शुभं भवेत्।
? मे तु दर्शनीयं स्याद्यमस्थाने प्ररोपणे।।

नैर्ऋत्यां यदि दृश्येत सस्यानां नाशमादिशेत्।
वर्षश्चापि तथा न स्यात् सर्वशास्त्रेषु निश्चयः।।

वारुण्यां च तथोत्पन्ने श्रीर्न तिष्ठति तद्गृहे।
वायव्यां च तदुत्पन्ने कन्या गच्छति तद्गृहे।।

सौम्ये तु दृश्यते यत्र गृहं शून्यं भवेद्ध्रुवम्।

ऐशान्ये दृश्यते यत्र परदेशगतं सुहृत्।।
द्वारे तु दृश्यते यत्र गृहं त्यजति तद्गृहम्।

**९.८.३३ रक्तस्त्रीदर्शने शान्तिः**

**य.४७ (परिशिष्ट पाठे) २६ - ४१**

रक्तस्त्रीणां समुत्पन्ने ग्रामेषु नगरेषु च।
तटाके च मद्धे चैव कूपे कोष्ठे तथैव च।।

वालु(कै)?व्रीहिभिर्वाऽपि अग्निकुण्डं च कारयेत्।
प्लक्षैरश्वत्थकैरेव अपामार्गैः सुदूर्वकैः।।

तिलतैलेन मसुर आज्येन चरुणापि च।
पञ्चवारुणपर्यन्तं मूलहोमं च हूयते।।

यद्देवादींश्च हुत्वा तु ईंकारादिं तथैव च।
पारमात्मिकसंयुक्तं ब्राह्मं सनरवैष्णवम्।।
तिलेन मधुना सम्यक् विष्णुसूक्तं सुहूयते।।

कलशैः स्नापयेद्देवमधिवासनसंयुतम्।
पूर्ववत् स्नपनं कृत्वा पश्चा ? चारभेत्।।

खनित्वा तत्प्रदेशं तु पञ्चगव्यैश्च सेचयेत्।
वालुकाभिश्च सम्पूर्य पुण्याहमपि वाचयेत्।।

रवनन ? कृत्वा तु ब्राह्मणान् भोजयेत् ततः।
एकाहं द्वियहं ? त्र्यहं पञ्चाहमाचरेत्।।

अग्रे भूतबलिं दद्यात् तिलचूर्णसमायुतम्।
लाजापूपसमायुक्तपञ्च ? समायुतम्।।

संधौ संधौ क्षिपेद्विद्वान् कण्द्धकाहळसंयुतम्।
चत्वरेषु त्रिकोणेषु शृङ्गाटेषु तथैव च।।

चत्वरे विष्णुभूतानां रौद्राणां च त्रिकोणके।
शृङ्गाटे ब्राह्मभूतानां तत्तन्नाम्ना बलिं ददेत्।।

आचार्यं पूजयित्वा तु वस्त्राभरणकुण्डलैः।
शिष्यानपि यथायोगं पूजयित्वा विधानतः।।

**वि.६९. ४३४**

आलयाभ्यन्तरे बाह्ये प्राकारे वा रक्तस्त्रीदर्शने तं देशं संशोध्य पञ्चगव्यैः प्रोक्ष्य, पुण्याहं वाचयित्वा ब्राह्मणान् भोजयित्वा देवं विशेषतोऽभ्यर्च्य हविर्निवेदयेत्।

**प्र.२८.६४, ६५**

आलयाभ्यन्तरे बाह्यप्राकारे वा विशेषतः।
रक्तस्त्रीदर्शने चैवं तं देशं परिशोध्य च।।

देवं विशेषतोभ्यर्च्य हविः सम्यङ्निवेदयेत्।

## ९.८.३४ बेरे रक्तस्त्रीस्पर्शने शान्तिः

**वि.६९.४३४**

[1]ध्रुवबेरे कौतुकादौ स्पृष्टे ध्रुवबेरशुद्धिं जलाधिवासं च कृत्वा पुनः प्रतिष्ठां कारयेत्।

**प्र.२८.६४, ६५**

1. रक्तस्त्रियेत्यनुवर्तते

### ९.८.३५ मधुक्षेपादि दुर्निमित्तानां शान्तिः

**खि.४०.१३ - १६**

मक्षिकैर्मधुनि क्षिप्ते घूकगृध्राद्यधिष्ठिते।।

रक्तस्त्रीदर्शने चैव कवकाद्युद्भवे तथा।
भूमियज्ञेन संशोध्य स्थानं दोषविदूषितम्।।

दिग्देवत्यं वैष्णवं च रौद्रं सौम्यं च वारुणम्।
कौबेरं ब्राह्ममाग्नेयं हुत्वा गव्यैश्च प्रोक्षयेत्।।

कलशैस्स्नापयेत्कुर्याद्विप्रभोजनमादरात्।
पायसं विनिवेद्यैव सर्वतो निक्षिपेद्बलिम्।।

### ९.८.३६ गर्भगृहे सर्पादिदर्शने शान्तिः

**वि.६९.४३४**

गर्भगृहे सर्पादिदर्शने तदुद्वास्य, गोमयेनोपलिप्य, पञ्चगव्यैः प्रोक्ष्य, औपासनाग्निमाधाय, वैष्णवं शान्तिं हुत्वा, पुण्याहं वाचयित्वा, ब्राह्मणान् भोजयेत्।

**प्र.२८.६६ - ६८**

### ९.८.३७ गर्भगृहे सर्पमरणे शान्तिः

**वि.६९.४३४**

[1]तत्र सर्पे मृते तं व्यपोह्य, उपलिप्य, पञ्चगव्यैः प्रोक्ष्य, वास्तुशुद्धिं कृत्वा, देवं चतुर्विंशतिकलशैः संस्नाप्य, अब्जाग्नौ एकाहं महाशान्तिं जुहुयात्।

**प्र.२८.६८ - ७०**

---

1. गर्भगृहे

**९.८.३८ बेरे सर्पस्पर्शे शान्तिः**

**वि.६९.४३४**

ध्रुवकौतुकादिषु तैः[1] स्पृष्टेषु देवं शुद्धोदकैः संस्नाप्य, महाशान्तिं हुत्वा, पुण्याहं वाचयित्वा, देवं विशेषतोऽभ्यर्च्य, हविर्निवेदयेत्।

**प्र.२८.७०, ७१**

[अत्र हविर्निवेदनं न विधीयते।]

**९.८.३९ प्रासादबाह्यावरणे सर्पमरणे शान्तिः**

**वि.६९.४३४**

प्रासादाद्बाह्ये आवरणे सर्पे मृते तद्व्यपोह्य, पूर्ववत् प्रोक्षणैः प्रोक्ष्य, वैष्णवादि दिग्देवत्यं च जुहुयात्।

**प्र.२८.७२**

**९.८.४० पाकस्थानादिषु सर्पमरणे शान्तिः**

**प्र.२८.७३, ७४**

पाकस्थाने गोपुरादौ मृते सर्पे व्यपोह्य च।
उपलिप्य च नित्याग्नौ वैष्णवं च विशेषतः।।
तत्स्थानाधिपदैवत्यं दशशो जुहुयाद्विधिः।

**वि.६९.४३५**

[अत्र 'दशशः' इति न दृश्यते। ]

---

1. सर्पैः

**९.८.४१ मक्षिकादर्शने शान्तिः**

**वि.७५. ४६०**

मक्षिकादर्शने तद्व्यपोह्य शुद्धिं कृत्वा शान्तिमारभेत।

**प्र.२९.१३३, १३४**

**९.८.४२ अस्पृश्यस्पर्शने शान्तिः**

**वि.७५. ४६१**

अस्पृश्यस्पर्शने शुद्धिं कृत्वा शान्तिं समाचरति।

**प्र.२९.१३४**

**९.८.४३ स्थूणादिरोहणादौ शान्तिः**

**वि.७५. ४६१**

स्थूणादिरोहणादिषु पुनःसंधानं कृत्वा शान्तिमारभेत।

**प्र.२९.१३५**

**९.८.४४ अकारणवृक्षपतनादौ शान्तिः**

**वि.७५. ४६१**

अकारणे वृक्षपतनादिषु तत् संत्यज्य शान्तिं कुर्यात्।

**प्र.२९.१३५**

**९.८.४५ आलये महावाताद्यभिभवे शान्तिः**

**वि.६९.४३५**

आलयाभ्यन्तरे सर्वत्र महावातातिवृष्टिचोरादिभिरभिभूते देवं कलशैः संस्नाप्य,

वास्तुहोमं हुत्वा, पर्यग्निपञ्चगव्याभ्यां शोधयित्वा, पुण्याहं वाचयित्वा, वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, श्रीभूमिदेवत्यं, ब्राह्मं, रौद्रं, प्राजापत्यं च हुत्वा, ब्राह्मणान् भोजयेदित्याह मरीचिः।

**प्र.२८.७४ - ७७**

## ९.८.४६ अनुक्तदोषाणां शान्तिः

**वि.७७.४६८**

अत्रानुक्तेषु दोषेषु सर्वेषु पौण्डरीकाग्नौ वैष्णवं षट्कृत्वो, व्याहृतीश्चतुष्कृत्वः, अष्टाक्षरमष्टकृत्वो, द्वादशाक्षरं द्वादशकृत्वो हुत्वा, विष्णुसूक्तं, पुरुषसूक्तं, एकाक्षरादिसूक्तं, श्रीसूक्तं, महीसूक्तं च हुत्वा, देवं संस्नाप्याभ्यर्च्य, हविर्निवेदयेत्। तद्दोषोपशमनं सर्वशान्तिकरं भवति।

**प्र.३०.१५६ - १५९**

## ९.८.४७ अनुक्तमहादोषाणां शान्तिः

**वि.७७.४६९**

महादोषेषु एतैः[1] सह पारमात्मिकमींकार (रादि)मष्टाशीतिं सर्वदेवत्यं च हुत्वा अष्टोत्तरशतकलशैः देवं संस्नाप्य अभ्यर्च्य महाहविर्निवेदयेत्। एतत्सामान्यप्रायश्चित्तं भवति।

शान्तिहोमविधानेन वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं च जुहुयात्। महाशान्तिविधाने च तैस्सह पारमात्मिकमींकाराद्यष्टाशीतिमेकाक्षरादिसूक्तं श्रीसूक्तं महीसूक्तं च जुहुयादिति केचिदिति आह मरीचिः।

**प्र.२८.१६०, १६१**

---

1. अनुक्तदोषोक्तैः सह

**९.८.४८ राजगृहे अद्भुतदर्शने शान्तिः**

**वि.७५. ४६१**

राजगृहे चोत्पन्ने राजानं वेशमान्तरं प्रवेश्य, शान्तिं कृत्वा, पुनरभिषेकं कृत्वा देवब्राह्मणानुज्ञया पुनर्गृहप्रवेशं कारयेत्।

**प्र.२९.१३६, १३७**

**प्र.२९.१६९ - १७३**

यदि राजगृहे दोषः कृत्वा मण्डपमन्तिके।
पूर्ववद् ग्रहयज्ञं च होमं श्रामणकेऽनले।।

कुम्भस्य साधनं कृत्वा सप्ताहान्ते प्रभुं तथा।
स्नापयेत्कुम्भतोयेन प्रतिष्ठान्तक्रमेण वै।।

दक्षिणां गुरुपूर्वेभ्यो दत्वा कृत्वाङ्कुरार्पणम्।
शुभेऽनुकूले नक्षत्रे कृत्वा चैवाभिषेचनम्।।

प्रविशेत्पूर्वगेहं तु धर्मसिद्ध्यै गुरूदितः।
एष एव विधिः प्रोक्तो गृहीणामपि सम्मतः।।

राज्ञां परार्थवृत्तित्वात्सोऽत्र तु प्रकृतीकृतः।

**वि.७६.४६३**

**९.८.४९ वृक्षेषु अद्भुतदर्शने शान्तिः**

**ज्ञा.९.१५**

वृक्षेषु सौम्यमिन्द्राग्निदैवत्यं वैष्णवं हुत्वा पौण्डरीकाग्नौ विष्णुसूक्तेन श्रीसूक्तेन पद्महोमेन जपेन यजुस्संहितायाः आरण्यकेन वा सर्वेषां दोषाणां शान्तिर्भवतीति। शान्तिहोमविधाने सर्वत्र विष्णोर्नुकादिमिन्दाहुत्याश्रावितादीन्

जुहुयात्। महाशान्तिविधाने सर्वत्र पारमात्मिकमीङ्काराद्यष्टाशीतिरिति कश्यपः।

**९.८.५० सर्वग्रासोपरागादिदर्शने शान्तिः**

**वि.७६. ४६३**

सर्वग्रासोपरागादिदिव्याद्भुतशान्त्यर्थं ब्राह्मणेभ्यः शक्त्या(क्त्य)नुकूलं स्वर्णपशुभूम्यादीनि दद्यादिति विज्ञायते।

**प्र.२९.१७३, १७४**

[अत्र स्वर्णपशुभूमिदानातिरिक्ततया भूरिदक्षिणादानमपि विधीयते।]

**९.८.५१.० शान्तिः पञ्चविधा अद्भुतशान्त्यादिभेदेन**

**प्र.२९.१३७ - १३९**

अथोत्तमोत्तमस्योत्तमस्य स्यान्मध्यमस्य च।।

अधमस्यापि चास्पृश्यस्पर्शनस्य यथाक्रमम्।
क्रमेणाद्भुतशान्तिस्तु प्रभूता महती तथा।।

शान्तिश्शुद्धिरिति प्राज्ञैः पञ्चधा शान्तिरुच्यते।

**वि.७६.४६१**

**९.८.५१.१ पञ्चविधान्तर्गताद्भुतशान्तिः**

**वि.७६. ४६१ - ४६३**

तासु अद्भुतशान्तिं वक्ष्ये - देवालयाभिमुखे उत्तरे च ऐशान्यां वा, पर्वताग्रे तटाकतीरे वा, मण्टपं प्रपां कूटं वा, षोडशस्तम्भयुतं चतुर्हस्तप्रमाणस्तम्भान्तरं तालोन्नततलयुतं कृत्वा, मध्ये श्रामणकाग्निकुण्डं

कृत्वा, अधस्तात् द्वादशाङ्गुलं खनित्वा, तत्प्राच्यां द्विहस्तायतविस्तारं हस्तमात्रसमुत्सेधं स्थण्डिलं कृत्वा, प्रागादिचतुर्दिक्षु आहवनीयान्वाहार्यगार्हपत्याऽऽवसथ्यकुण्डानि कृत्वा आग्नेयादिषुकोणेषु औपासनाग्निकुण्डानि कृत्वा, द्वारेषु तोरणपूर्णकुम्भकदलीपताकाङ्कुर दर्भमालास्तम्भवेष्टनाद्यैरलङ्कृत्य, स्थंडिले धान्यराशिं विकीर्य, तन्मध्ये तण्डुलेनाष्टदलपद्मं कृत्वा, तन्मध्ये स्वर्णरजतताम्रमृत्तिकानामन्यतमेन कृतं द्वात्रिंशत्प्रस्थसम्पूर्णं कुम्भं यवान्तरं तन्तुनाऽऽवेष्टितं वस्त्रयुग्मेनाऽऽवेष्ट्य, सौवर्णानि अङ्गुलादहीनानि अष्टमङ्गल पञ्चायुधवर्णचिह्नानि रत्नस्वर्णरजतताम्रकांस्यत्रपुसीसाऽऽयसतीक्ष्णकान्तानि आदित्यादिनवग्रहरूपाणि च विक्षिप्य, शुद्धजलेनापूर्य, निधाय, कर्पूरैलालवङ्गचन्दनोशीरादिसर्वगन्धद्रव्याणि च, अशोकाश्वत्थपल्लवानि च निक्षिप्य, तन्मुखं तन्तुनाऽऽवेष्टितं पिधानेन पिदध्यात्। आचार्यं ऋत्विजश्च वरयित्वा नववस्त्रोत्तरीयाङ्गुलीयकाद्यैरलं (कुर्यात्) कृत्य, अग्निकुण्डेष्वाघारं हुत्वा, आदित्याङ्गारकमन्दबुधसितबृहस्पतिचन्द्रेभ्यः प्रागाद्युदगन्तं प्रदक्षिणं ध्यात्वा, आवाह्य, अभ्यर्च्य, अष्टाक्षरेणायुतं अष्ठोत्तरसहस्रं वा अभिमृश्य, ग्रहशान्त्युक्तविधानेन तत्तद्दैवत्यं चरुसमिदाज्यादिभिः नित्यमष्टोत्तरसहस्रं हुत्वा, श्रामणकाग्नौ बिल्वपत्रैर्घृताप्लुतैर्नित्यमष्टोत्तरसहस्रमष्टाक्षरेण हुत्वा, विष्णुगायत्र्या बिल्वसमिदाज्यचरुसक्तुलाजापूपव्रीहितिलदूर्वापद्मैश्च प्रत्येकमाचार्यो हुत्वा, आज्येनाष्टोत्तरसहस्रमष्टाक्षरेण हुत्वा, आज्येन वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं च हुत्वा, नृत्तगेयवाद्यैराघोष्य, चतुर्वेदान् यथादिशमध्याप्य, नित्यम् ऋत्विग्भ्यः दक्षिणां दद्यात्। एवं सप्ताहं (जुहुयात्।)

**प्र.२९.१३९ - १६४**

**९.८.५१.१ अनावृष्टावद्भुतशान्तिः**

**(अ) वि.७६.४६३, ४६४**

अनावृष्टिदोषश्चेच्छीतकुम्भं निदध्यात्। द्वात्रिंशत्प्रस्थसम्पूर्णं कुम्भं संगृह्य, पूर्ववत् साधयित्वा, सर्वतीर्थमावाह्य, अभ्यर्च्य, देवाभिमुखे धान्यपीठे सौवर्णमष्टदलयुतं पद्मं हेमपात्रे न्यस्य, तस्मिन् देवेशमावाह्य, अभ्यर्च्य, तस्योर्ध्वे चतुष्पालि(दि)कायां कुम्भं सन्न्यस्य, कुम्भमूले सूचीमात्रं सुषिरं कृत्वा, अविच्छिन्नधारया देवेशं सेचयेत्। वेतससमिद्भिः पालाशैर्वा पञ्चवारुणमष्टोत्तरसहस्रं श्रामणकाग्नौ हुत्वा, दिशाहोमेषु (अष्टसु प्रत्येकम्) अष्टोत्तरसहस्रं पञ्चवारुणं वेतससमिद्भिः जुहुयात्। आज्येन वेतससमिद्भिश्च प्रत्येकम् 'इन्द्रं प्रणवन्त'मित्यष्टोत्तरसहस्रं जुहुयात्। श्रामणकाग्निमेकमेव वा कुर्यात्। तद्दक्षिणे वज्रपाणिमावाह्य, अभ्यर्च्य, 'शचीसहाये'ति होतव्यम्। देवेशं विशेषतोऽभ्यर्च्य स्नापनोत्सवादीनि कारयेत्। एवमेव तत्तत्कर्मगौरवं ज्ञात्वा त्र्यहादि त्रिंशद्दिनान्तं श्रामणकाग्निं सङ्कल्प्य, दिने दिने कुम्भं पूरयित्वा सेचयेत्। तद्दिनान्ते देवस्य स्नपनं कृत्वा, अभ्यर्च्य, हविर्निवेदयेत्। आचार्यादिभ्यः दक्षिणां दद्यात्। तत्तत्कर्मान्ते समग्रावृष्टिः स्यात्। तस्माद्यत्नतः कुर्यात्।

**प्र.२९.१७५ - १८५**

**९.८.५१.१ सर्वोपद्रवार्थे अद्भुतशन्तिः**

**(आ) वि.७६.४६४ - ४६६**

अथवा वर्षार्थी, दुर्भिक्षादिसर्वोपद्रवशान्त्यर्थी गोवृद्धिकामौ च, स्नपनालयं पूर्ववदलङ्कृत्य, तत्तत्कर्मगौरवं ज्ञात्वा, यत्नतो बहुक्षीरं सङ्गृह्य, आचार्यं वस्त्रोत्तरीयाद्यैः पूजयित्वा, सोऽपि श्वभ्रात् प्राच्यां तण्डुलैर्दक्षिणोत्तरायतां पङ्क्तिं कृत्वा, श्वभ्राद्दक्षिणस्यां श्रामणकाग्निकुण्डं कृत्वा, अग्निमाधाय, नवकुम्भाँस्तन्तुना परिवेष्ट्य, प्रक्षाल्य, कुशेनोत्पूय, उत्पूतेन क्षीरेणाऽपूर्य,

तत्पङ्क्त्यां निधाय, पिधानैः पिधाय, अधिदैवमाराध्य, उपरि नववस्त्रेणाच्छादयेत्। श्वभ्रपूजान्ते देवं प्रणम्य, स्वस्तिसूक्तेनानम्य (आनीय), श्वभ्रमध्ये प्रतिष्ठाप्य, अर्चयेत्। तन्तुनावेष्टितकरके क्षीरं गृहीत्वा, विष्णुसूक्तम्, इषे त्वोर्जेत्वाद्यैरनुवाकैः क्रमात् क्षीरधारया देवं संस्नापयेत्। अग्निं परिषिच्य, विष्णोर्नुकाद्यैः अतो देवाद्यैः मन्त्रेणाष्टाक्षरेण विष्णुगायत्र्या चाष्टाधिकसहस्रं जुहुयात्।

अथवा, यावत् स्नपनं, तावद्धरिद्राचूर्णेनोद्वर्त्य, आम्लाद्यैः संशोध्य, गन्धोदकैः संस्नाप्य, प्लोतेन निमृज्य, वस्त्रोत्तरीयाद्यैरलङ्कृत्य, अभ्यर्च्य, पायसादिहविर्निवेदयेत्। आचार्यादिभ्यो दक्षिणां दद्यात्। तत्तत्कामं सम्पूर्णमसंशयं लभेत।

ध्रुवबेरार्चनं चेत्, प्रमुखे च एवमेव संसाध्याऽऽनीय, तत्रैव स्नपनं कुर्यात्। तत्तत्कर्मानुरूपम् एतेन विधिना त्र्यहं, पञ्चाहं वा क्षीरस्नानं कारयेत् । एवं घृताभिषेकं वा कारयेदिति विज्ञायते।

**प्र.२९.१८६ - २०१**

## ९.८.५१.२ पञ्चविधान्तर्गता प्रभूतशान्तिः

**वि.७६. ४६६**

[1]पूर्ववन्मण्टपादीनि कृत्वा, कारयित्वा, दिशाहोमं विना श्रामणकाग्नावेव यथोक्तं हुत्वा, पूर्ववत् कुम्भसाधनं कृत्वा, सप्ताहान्ते अष्टोत्तरशतम् अष्टचत्वारिंशद्वा कलशानभ्यर्च्य, अभिषिच्य, देवं विशेषतोऽभ्यर्च्य, निवेदयेदिति विज्ञायते।

**प्र.२९.२०२ - २०५**

---

1. अद्भुतशान्तिवत्

**य.४६ (परिशिष्ट) ५ - ७**

प्रभूतशान्तिरित्युक्ता सर्वत्रापि च वैष्णवम्।।

मिन्दाहुती च विच्छिन्नं गायत्रीं वैष्णवीं तथा।
'शं नो मित्र' इति हुत्वा तथा विष्णोर्नुकादिभिः।।

वैष्णवं शतशो हुत्वा पौण्डरीके यजेत् क्रमात्।
प्रभूतशान्तिं हुत्वैव सर्वशान्तिकरं भवेत्।।

### ९.८.५१.३ पञ्चविधान्तर्गता महाशान्तिः

**वि.७६.४६६**

कुम्भं विना श्रामणकाग्नौ बिल्वपत्रैराज्याक्तैः अष्टोत्तरशतसहस्रम् अष्टाक्षरेण हुत्वा, आज्येन वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं च हुत्वा, त्र्यहान्ते शुद्धस्नपनविधिना स्नापयित्वा अर्चयेत्।

**प्र.२९.२०५ - २०८**

**य.४५ (परिशिष्ट) ३ - १२, १५, १६**

आलयाभिमुखे कुर्यात् पौण्डरीकं सलक्षणम्।।

दक्षिणस्यामथाग्नेय्यां पचनालय एव वा।
अलङ्कृत्य चतुर्दिक्षु पूर्णकुम्भाङ्कुरध्वजैः।।

कदलीक्रमुकैश्चैव मुक्तादामावलम्बकैः।
मासं पक्षं च सप्ताहं पञ्चाहं त्रियहं तु वा।।

एकाहं वाऽथ सङ्कल्प्य दोषाणां गुरुलाघवम्।
ज्ञात्वा तदनुरूपाणि दिनानि जुहुयात् क्रमात्।।

आघारान्ते सुहोतव्ये सूक्ते वैष्णवपौरुषे।

रुद्रसूक्तं ततो हुत्वा विश्वजित्सूक्तमेव च।।

पारमात्मिकमींकाराद्यष्टाशीतिं हुनेत् तथा।
श्रीसूक्तं रात्रिसूक्तं च सूक्तं सारस्वतं तथा।।

जुहुयात् सर्वदैवत्यं पञ्चवारुणसंयुतम्।
मूलहोमं ततो हुत्वा धातादीन्(त्रा ?) जुहुयात् क्रमात्।।

'नमो वाचे' समुच्चार्य 'शं नो वात' इतीर्य च।
'नारायणाय विद्म'ेति तथा षड्भिश्च वैष्णवैः।।

आज्येन साज्यचरुणा समिधा च घृताक्तया।
सक्तुलाजतिलापूपैर्घृतमिश्रैर्यथाक्रमम्।।

संस्नाप्य कलशैर्देवं समभ्यर्च्य निवेदयेत्।

------------------------------

रक्षेदग्निमविच्छिन्नं यावत्कर्मावसानकम्।
कर्मण्यस्मिन् समाप्ते तु कृत्वा विप्रांश्च भोजयेत्।।

दद्यादाचार्यपूर्वेभ्यो दक्षिणां देवसंनिधौ।

**स.६९.११५ - १२१ ; क्रि.२९.३ - १०, १४, १५**

**९.८.५१.४ शान्तिपञ्चविधान्तर्गता शान्तिः**

**वि.७६.४६६**

एकाहे औपासनाग्नौ शान्तिं जुहुयात्। ब्राह्मणान् भोजयित्वा आचार्याय दक्षिणां दद्यात्।

**प्र.२९.२०८.२०९**

**९.८.५१.५ शान्तिपञ्चविधान्तर्गता शुद्धिः**

**वि.७६.४६६**

वास्तुहोमं हुत्वा, बिल्वपत्राद्यैः प्रत्येकमष्टोत्तर शतं पूर्ववद्धुत्वा, पुण्याहं वाचयेत्। आचार्याय दक्षिणां दत्वा, ब्राह्मणान् भोजयेत्। घटसंस्कारं सर्वत्र वा कुर्यात्।

**प्र.२९.२०९ - २११**

**९.८.५२.० शान्तिः षड्विधा महाशान्त्यादिभेदेन**

**क्रि.२९.१९**

इति षट्[1] शान्तयः प्रोक्तास्सर्वदोषोपशोषणाः।

**९.८.५२.१ षड्विधान्तर्गता महाशान्तिः**

**खि.३७.४६, ४७**

वैष्णवं पौरुषं सूक्तं ब्राह्ममैन्द्रं च वारुणम्।।

'यद्देवाद्या'स्समाहत्य महाशान्तिरुदीरिता।

**९.८.५२.१ षड्विधान्तर्गतमहाशान्तेः त्रैविध्यम्**

**(अ) क्रि.२९.१० - १३**

त्रिकालमुत्तमो होमो रात्रिहीनश्च मध्यमः।।

सायं प्रातश्च हीनश्चेदधमः परिकीर्तितः।

पूर्वोक्तसर्वद्रव्यैश्चाप्युत्तमे जुहुयाद्बुधः।।

1. महाशान्तिः, अतिशान्तिः, अद्भुतशान्तिः, सामान्यशान्तिः, उत्पातशान्तिः, शान्तिः, - इत्येताः षट्

आज्येन साज्यचरुणा मध्यमे जुहुयात्क्रमात्।
अधमे केवलाज्येन प्रातर्मध्याह्न एव वा।।

उत्तमे स्नपनं नित्यं मध्यमे केवलार्चनम्।
अधमे केवलं होम इति प्रोवाच पूर्वजः।।

**य.४५ (परिशिष्ट) १२ - १४**

### ९.८.५२.१ षड्विधान्तर्गतमहाशान्तिफलम्

**(आ) क्रि.२९.१ - ३**

अतः परं प्रवक्ष्यामि महाशान्तिविधिं परम्।
सर्वदोषोपशमनं सर्वव्याधिभयापहम्।।

सर्वाभीष्टप्रदं श्रेष्ठं सर्वाशुभविनाशनम्।
आयुरारोग्यदं कर्तुः शान्तिपुष्टिसुखप्रदम्।।

महादोषेषु सर्वत्र महाशान्तिर्विधीयते।

**य.४५ (परिशिष्ट) १ - ३**

[अत्र 'सर्वव्याधिभयापहम्' इत्यस्य स्थाने 'सर्वाध्वरफलावहम्' इति दृश्यते।]

### ९.८.५२.२ षड्विधान्तर्गताऽतिशान्तिः

**य.४५ (परिशिष्ट) १६ - १८**

यद्देवादिद्वयं सूक्तमायुष्टेत्यादिसूक्तकम्।।

तत्तत्सूक्तं च हुत्वैव अतिशान्तिरिति स्मृतम्।
अतिशान्तिं च हुत्वैव सर्वसम्पत्करं परम्।।

पुत्रश्रीर्विजयं तस्य आयुरारोग्यवर्धनम्।

**क्रि.२९.१५**

**९.८.५२.३ षड्विधान्तर्गताऽद्भुतशान्तिः**

**य.४५ (परिशिष्ट) १८ - २५**

नवग्रहाधिदैवत्यं हुत्वा चेदद्भुताह्वया।।

वेद्याः पश्चिमदिग्भागे तण्डुलं (मण्डलं) तत्र कारयेत्।
नवभागं विभज्यैव आदित्यादीन् समर्चयेत्।।

प्रदद्यात् पायसादीनि ताम्बूलाचमने तथा।
मुखान्तमाचरेत् पश्चाद् गार्हपत्यादिवह्निषु।।

वह्नावाहवनीये तु शशिशुक्रौ यजेद्बुधः।
अन्वाहार्ये ततः पश्चाद्राहुमङ्गारकं तथा।।

गार्हपत्ये यजेत् पश्चात् तथा केतुं शनैश्चरम्।
आवसथ्ये तथा हुत्वा बुधं चैव बृहस्पतिम्।।

सवितारं यजेत् सभ्ये समिदन्नादिभिः क्रमात्।
अष्टोत्तरशतं वापि सप्तविंशतिमेव वा।।

अर्कादिसमिधश्चापि कुशान्तं समिधः क्रमात्।
नवाहं वाथ सप्ताहं पञ्चाहं त्रियहं तु वा।।

एकाहं षा प्रकुर्वीत रात्रौ नाद्भुतमाचरेत्।
कृता चेदद्भुता शान्तिरत्यन्तदुरितावहा।।

**क्रि.२९.१६**

**९.८.५२.४ षड्विधान्तर्गता समान्यशान्तिः**

**क्रि.२९.१६**

सामान्यशान्तिरित्युक्ता युक्ता सा[1] चेज्जयादिभिः।।

---

1. महाशान्तिः

**य.४६ (परिशिष्टपाठे) ८ - १०**

सामान्यं च तदा हुत्वा सभ्यकुण्डे विशेषतः।
'हिरण्यशृङ्ग'मारभ्य 'पुना'त्वन्तं तथैव च।।

द्वादशाष्टाक्षराभ्यां च सहस्राहुतिसंयुतम्।
आज्येन जुहुयाद्विद्वान् सक्तुलाजादिकैर्विना।।

एवं यः कुरुते भक्त्या विष्णोर्ध्यानपरायणः।
कृत्वा तु केवलां शान्तिमभीष्टं फलमश्नुते।।

**९.८.५२.५ षड्विधान्तर्गतोत्पातशान्तिः**

**क्रि.२९.१७**

द्वादशाष्टाक्षराभ्यां च शताहुतिरथापि वा।
उत्पातशान्तिरित्युक्त्वा तथा विष्णोर्नुकादिभिः।।

**९.८.५२.६ शान्तिषड्विधान्तर्गता शान्तिः**

**क्रि.२९.१९, २०**

अल्पदोषे यजेच्छान्तिं सर्वत्रापि च वैष्णवैः।।

मिन्दाहुती च विच्छिन्नं गायत्रीं वैष्णवीं पुनः।
'शन्नो मित्र' इत्युक्त्वा तथा विष्णोर्नुकादिभिः।।

**क्रि.२९.१८**

अथवा शान्तिरित्युक्ता केवलं वैष्णवं शतम्।
महाशान्तिरिति प्रोक्ता यद्देवादिसमन्विता।।

**९.८.५३ सर्वशान्तिकरणे निमित्तम्**

**स.८२.१ - ५**

अतः परं प्रवक्ष्यामि सर्वशान्त्याहुतेः फलम्।
अपमृत्युभयोत्पन्ने महाव्याधिनिपीडिते।।

ग्रहकोपे महादुःखे पुत्रहीनेऽर्थनाशने।
महाभये समुत्पन्ने शत्रुपीडासमागमे।।

दुर्निमित्ते च दुस्स्वप्ने राजकोपसमुद्भवे।
अपस्मारेऽप्यथोन्मादे पिशाचाद्यैश्च पीडिते।।

अतिवृष्ट्याप्यनावृष्ट्या महावातस्य सम्भवे।
प्रत्यब्दजन्मनक्षत्रे जन्मर्क्षे ग्रहणेऽपि च।।

अभिचारागमेऽन्यस्मिन्ननुक्तेऽप्यशुभे सति।
तद्दोषशमनार्थं च पुष्ट्यर्थं चेदमुच्यते।।

**प्र.२९.२११ - २१३ ; वि.७६.४६६, ४६७**

**९.८.५४ सर्वशान्तौ आचार्यादिवरणम्**

**स.८२.६**

शुद्धं प्रसन्नं विद्वांसं यथोक्तगुणसंयुतम्।
आचार्यमृत्विजोऽप्यत्र वरयेत्स मुदान्वितः।।

**९.८.५५ सर्वशान्तौ यजनस्थानम्**

**स.८२.७, ८**

स्नात्वा नित्यानि जप्यानि जप्त्वा कर्मेदमारभेत्।

देवालये गृहे वाथ नदीतीरे मनोरमे।।

मण्डपे वाथ कूटे वा प्रपायामथवा तथा।
शुद्धे समे शुभे देशे गोमयेनोपलिप्य च।।

## ९.८.५६ सर्वशान्तौ औपासनाग्निकुण्डकल्पनम्

**स.८२.९, १०**

मृदा वा सिकताभिर्वा शुद्धाभिस्तत्र पूर्ववत्।
औपासनाग्निकुण्डं च कल्पयित्वा विधानतः।।

प्राणायामं च कृत्वैव सङ्कल्प्याग्निं निधाय च।
सूत्रोक्तेनैव मार्गेण तत्राघारं जुहोति वै।।

## ९.८.५७ सर्वशान्तौ विष्णुपीठकल्पनम्

**स.८२.११**

दक्षिणे शालिधान्यैस्तु हस्तमात्रायतोच्छ्रयम्।
देवदेवस्य विष्णोस्तु पीठं सम्यक्प्रकल्पयेत्।।

## ९.८.५८ सर्वशान्तौ कुम्भन्यासः

**स.८२.१२ - १७**

[1]तत्पूर्वे च तथा शालिधान्यराशिं च कारयेत्।
खण्डस्फुटितकालादिहीनं द्रोणाम्बुपूरणम्।।

1. विष्णुपीठात् पूर्वे

नवकुम्भं प्रगृह्यैव तन्तुना परिवेष्ट्य च।
शुद्धमाधावमादाय वस्त्रेणापि कुशेन च।।

उत्पूय कुम्भं प्रक्षाल्य तदाधावेन पूरयेत्।
सौवर्णान्मङ्गलांश्चाष्टौ तथा पञ्चायुधानपि।।

श्रीरूपं नवरत्नं च कुशकूर्चौ सहाक्षतम्।
तुलसीदूर्वापामार्गौ कुम्भे प्रक्षिप्य तज्जलम्।।

वारुणैर्वैष्णवैर्मन्त्रैः प्रणवैरभिमन्त्रयेत्।
नवेन वस्त्रयुग्मेन तत्कुम्भं परिवेष्ट्य च।।

आश्वत्थैरपि पालाशैः पल्लवैरभिभूषयेत्।
तत्कुम्भं धान्यराशौ तु विष्णुसूक्तेन विन्यसेत्।।

## ९.८.५९ सर्वशान्तौ धान्यपीठे देवार्चनम्

**स.८२.१८ - २२**

धान्यपीठे कुशान्कूर्चान् निधायोर्ध्वे हरिं परम्।
प्राङ्मुखं च प्रतिष्ठाप्य भक्त्या देवं समाहितः।।

ध्यायन्वै विष्णुगायत्र्या मन्त्रेणाष्टाक्षरेण वा।
परं नारायणं देवं समावाह्यैव पूर्ववत्।।

आसनाद्युपचारैश्च देवदेवं समर्चयेत्।
बिम्बालाभे सुवर्णेन कृतं पद्मं निधाय च।।

तस्मिन्नारायणं ध्यायन् समावाह्य तथार्चयेत्।
श्रीकामः पुत्रकामी च सुखार्थी च शुभेप्सितः।।

देवेन श्रीमहीदेव्यौ तत्तन्नाम्ना समर्चयेत्।

## ९.८.६० सर्वशान्तिहोमः

### स.८२.२२ - ३६

ततो देवं प्रणम्यैव परिषिच्य च पावकम्।।

जपन् वै विष्णुगायत्रीमाश्वत्थान् द्वादश क्रमात्।
मूलाग्राभ्यां तथाज्याक्तानिध्मांश्च जुहुयात्पुनः।।

विष्णोर्नुकादिभिः षड्भिः मन्त्रैरपि च वैष्णवैः।
आज्यं स्रुवेण हुत्वा तैः साज्यं पक्वं यजेत्स्रुचा।।

पूर्वोक्तेन क्रमेणैव भक्त्या नारायणं परम्।
ध्यायन्वै विष्णुगायत्र्या मन्त्रेणाष्टाक्षरेण वा।।

स्रुवेणैव घृतं गव्यं तदग्नौ जुहुयात्क्रमात्।
'ओं नमो नारायणाये'ति मन्त्रमष्टाक्षरं स्मृतम्।।

सर्वार्थसाधकश्चायं श्रूयते हि श्रुतावपि।
तथा होमं त्रिलक्षं वा द्विलक्षं लक्षमेव वा।।

हुतं पञ्चायुतं वाथ त्र्युतं वायुतद्वयम्।
अयुतं वा तदर्धं वा सहस्रं वाष्टसंयुतम्।।

तत्तत्कर्मानुरूपं तु हरिं ध्यायन् जुहोति वै।
होमादौ मध्यमे चान्ते षड्भिर्विष्णोर्नुकादिभिः।।

वैष्णवैर्मन्त्रषड्भिश्च पूर्ववज्जुहुयाद्बुधः।
पूर्ववद्देवमभ्यर्च्य हवींष्यपि निवेद्य च।।

'सहस्रशीर्षं देव'मिति चैकाक्षरादिना।
स्तुत्वा पुष्पाञ्जलिं दद्यान्नमो ब्रह्मण उच्चरन्।।

हुतेऽधिके तु तत्कर्मफलमप्यधिकं भवेत्।
हुतं तद्यावत्संख्यं च तावत्संख्यं तथा तदा।।

तेन मन्त्रेण तत्कुम्भे तोयमप्यभिमन्त्रयेत्।
आचार्यो यजमानं तं मन्त्रेणाष्टाक्षरेण तु।।

विष्णुं ध्यायन् तमद्भिस्तैः प्रोक्षयेत सहस्रशः।
वैष्णवैर्वा सुगन्धाद्यैः शेषाद्भिरभिषेचयेत्।।

होमार्चनजपानेवं कारयित्वैव भक्तितः।
यजमानस्तथाचार्यं पूजयित्वा प्रणम्य च।।

यत्नेन दक्षिणां दद्यादृत्विजां च यथाविधि।

**वि.७६.४६७**

सप्ताहं नवाहं वा द्वादशाक्षरेण प्रत्येकमष्टोत्तरसहस्रं होमं कुर्यादिति विज्ञायते।

**प्र.२९.२१४**

**य.४६ (परिशिष्टपाठे) १ - ५**

अतः परं प्रवक्ष्यामि सर्वशान्तिविधिं परम्।
पौण्डरीकं परिस्तीर्य परिषिच्य च पावकम्।।

प्राजापत्यं च विच्छिन्नं स्विष्टकृद्दद्भिसंयुतम्।
धाता(त्रा)दिषोडशं हुत्वा जयादिं च तथैव च।।

विष्णुसूक्तं च हुत्वैव वैष्णवान्तं क्रमाद्यजेत्।
अष्टाक्षरेण मन्त्रेण अष्टोत्तरसहस्रकम्।।

सर्वेष्वेवाग्निकुण्डेषु हुनेदाज्येन बुद्धिमान्।
सर्वारिष्टं हुनेत् पश्चात् सर्वारिष्टविनाशनम्।।

पुत्रपौत्रप्रदं श्रेष्ठमायुर्वृद्धिकरं भवेत्।

## ९.८.६१ सर्वशान्तेः फलम्

### स.८२.३६ - ४६

एतद्धोमयुतं स्नानं सर्वदुःखापहारकम्।।

सर्वाशुभविनाशं च सर्ववृद्धिकरं स्मृतम्।
सर्वशान्तिकरं चापि सर्वपापप्रणाशनम्।।

एतैर्होमार्चनस्नानैः सर्वां सिद्धिमवाप्नुयात्।
अभयो मृत्युभीतस्य दीर्घायुस्सभवेन्नरः।।

व्याधितो व्याधिमुक्तस्स्याद् ग्रहकोपश्च शाम्यति।
महादुःखी सुखी भूयात् पुत्रार्थी पुत्रवान् भवेत्।।

भीतश्च निर्भयो भूयाच्छत्रुपीडश्च शत्रुजित्।
राज्ञा चान्यजनैर्द्विष्टः सर्वेषां च प्रियो भवेत्।।

धर्मार्थी धर्ममाप्नोति धनार्थी धनमाप्नुयात्।
कामार्थी काममाप्नोति राज्यार्थी राज्यमाप्नुयात्।।

ज्ञानार्थी ज्ञानमाप्नोति पापी पापात्प्रमुच्यते।
अभिचाराश्च नश्यन्ति शत्रवो नाशमाप्नुयुः।।

यद्यत्कामयतेऽन्यच्च तल्लभेत न संशयः।
श्रद्धाभक्तियुतः कृत्वा मोक्षार्थी मोक्षमाप्नुयात्।।

गृहेऽग्निपातनाद्याश्च रक्तस्त्रीदर्शनादयः।
सर्वदोषाश्च नश्यन्ति शुभास्तत्र भवन्ति च।।

हुत्वार्चयित्वा तत्तोयेर्गृहे सर्वत्र चोक्षयेत्।
गोगजाश्वादिनाशे च हुत्वा तान्प्रोक्षयेत्तथा।।

एतेनैव च सर्वत्र यथेष्टं शुभमाप्नुयात्।

**९.८.६२ महोत्पातशान्तेः निमित्तम्**

**य.४४ (परिशिष्टपाठे) १ - १२**

अतः परं प्रवक्ष्यामि महोत्पातविधिं शृणु।
ग्रामे वा नगरे चैव पत्तने च तथैव च।।

देवालये सभास्थाने राजधान्यां विशेषतः।
भूकम्पे च तथा चैव आकाशे गर्जिते सति।।
महावाते महावर्षे सर्वत्राशनिपातने।
देवतारोदने चैव वान्धकारनिरन्तरे।।

तद्दिक्समाकुले प्राप्ते उपलैः पांसुवर्षणे।
स्फोटकाद्यैः प्रविष्टे च ज्वररोगादिसङ्कुले।।

एतेष्वपि च सर्वेषु एकं वा बहु वा भवेत्।
महोत्पातमिदं प्रोक्तं सकृदुत्पातकं तथा।।

एवमादौ तु सम्प्राप्ते राज्ञो विपदमादिशेत्।
परचक्रभये क्षोभे व्याधि (धौ) दुर्भिक्ष एव च।।

अनावृष्टौ ज्वरोत्पत्तौ सर्वेषां दुःख एव च।
यक्षराक्षसपैशाचगन्धर्वब्रह्मराक्षसाः।।

प्रविश्य देशं सर्वत्र नाशं कुर्वन्ति ते सदा।
तस्मात् सर्वप्रयत्नेन शान्तिकर्म समाचरेत्।।

तिथिं वारं मुहूर्तं च वर्जयित्वाविचक्षणैः।
सर्वमासेषु कर्तव्यं षण्मासावधिकेऽन्तरे।।

मासं विंशतिपक्षं च षोडश द्वादशाथवा।
नवाहं वाऽथ सप्ताहं पञ्चाहं वा तथैव च।।

मूर्धाभिषिक्तस्य राज्ञे वातरोगादिसङ्कुले।
वातरोगादिशान्त्यर्थं समस्तदुरितापहम्।।

दीर्घायुरभिवृद्ध्यर्थं पुष्ट्यर्थं च समाचरेत्।

**९.८.६३ महोत्पातशान्ते कालः**

**य.४४(परिशिष्टपाठे)९**

तिथिंवाणैः मुहूर्तं च वर्जयित्वा विचक्षणैः।
सर्वमासेषु कर्तव्यं षण्मासावधिकेन्तरे।।

**९.८.६४ महोत्पातशान्तेः कुण्डकल्पनम्**

**य.४४ (परिशिष्टपाठे) १३ - १७**

ग्रामवीथ्यन्तरे चैव आलयात् पुरतोऽपि वा।।

विष्ण्वालये च कर्तव्यं नदीतीरे विशेषतः।
यागशालां च कृत्वैव शय्यावेदिं प्रकल्पयेत्।।

पञ्चाग्नीन् परितः कृत्वा पौण्डरीकं तथैव च।
उत्तरे वास्तुशान्त्यर्थं कुण्डं श्रामणकं चरेत्।।

चतुर्द्वारसमायुक्तं नानालङ्कारभूषितम्।
परितस्तु प्रपां कृत्वा द्वारमेकं प्रकल्पयेत्।।

तद्देशस्येष्टदिग्भागे कुण्डमौपासनीयकम्।

**९.८.६५ महोत्पातशान्तेराचरणप्रकारः**

**य.४४ (परिशिष्टपाठे) १२, १३, १७ - ५४**

आरम्भकालात् पूर्वस्मिन् अङ्कुरानर्पयेद्बुधः।।

अङ्कुरार्पणकादूर्ध्वं द्रव्याण्यपि समाहरेत्।
------------------------------ ।।

सर्वेष्वेव तु कुण्डेषु आघारं च समाचरेत्।
वास्तुहोमं तथा कृत्वा पर्यग्निं तत्र तत्र वै।।

इन्द्रादिष्वष्टकुण्डेषु इन्द्रादीन् देवता यजेत्।
तत्तद्दैवत्यमन्त्रैश्च समिदन्नादिभिः क्रमात्।।

अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा।
इन्द्रादिनाममन्त्रेण आज्येनाष्टोत्तरं शतम्।।

सर्वानग्नीन् समाप्यैव यागशालां प्रविश्य च।
वास्तुहोमं ततः कृत्वा पर्यग्निकरणं चरेत्।
ब्रह्मसूक्तं ततो हुत्वा रुद्रसूक्तं तथैव च।।

विष्णुसूक्तं ततो हुत्वा आज्येनैव सहस्रकम्।
वैखानसेन सूत्रेण निषेकादिक्रियान्वितम्।।

आचार्यं वरयेत् पूर्वमृत्विग्भिश्च सहैव तु।
षोडश द्वादशाष्टौ वा श्रोत्रियान् मन्त्रपारगान्।।

दैविकोक्तविधानेन अङ्कुरादींश्च कारयेत्।
पश्चादग्निं विसृज्यैव आघारं पुनराचरेत्।।

त्रियम्बकेन मन्त्रेण व्याहृत्यन्तं पृथक् पृथक्।
मृत्युर्नश्यत्या(त्वा)युष्यं मे जुहुयाद्वर्धतामिति।।

अयुतं जुहुयाद्यद्वा अष्टोत्तरसहस्रकम्।
तिलेनाज्येन ? अन्यद्रव्येण कारयेत्।।

आघारं गार्हपत्याग्नौ (हुत्वाऽग्निं) वर्धयेद्बुधः।
गार्हपत्यात् प्रणीतेषु अग्निष्वाघारमाचरेत्।।

पौण्डीरीकं समागत्य परिषिच्य च पावकम्।
सप्तद्रव्यसमायुक्तं महाशान्तिं यजेत् क्रमात्।।

अतिशान्तिं ततो हुत्वा सर्वशान्तिं तथैव च।
प्रभूतशान्तिं हुत्वैव केवलं शान्तिमाचरेत्।।

अयुताहुतिपक्षेण श्रीशताष्टकमाचरेत्।
पश्चादद्भुतशान्तिं च तत्तदग्नौ विधीयते।।

वसोर्धारां हुनेत् पश्चात् सभ्यकुण्डे विशेषतः।
महाशान्त्यादिकं हुत्वा सप्ताहं सवनत्रयम्।।

सुदृढं कुम्भमादाय तन्तुना परिवेष्टयेत्।
'शुची वो हव्य'मन्त्रेण कुर्यात् कुम्भनिषेचनम्।।

षड्भारव्रीहिभिश्चैव तदर्धैस्तण्डुलैस्तिलैः।
वेद्या उपरि संस्तीर्य वेद्यूर्ध्वे साधयेद्घटम्।।

'भूरसी'ति च मन्त्रेण कुम्भमन्तः प्रधूपयेत्।
'वारीश्चतस्र' इत्युक्त्वा पूरयेद्गन्धवारिणा।।

नानाविधैश्च पद्यैश्च ? वस्त्रयुग्मेन वेष्टयेत्।
'नवस्सुलोम' मन्त्रेण पल्लवाद्यैर्विभूष्य च।।

नवरत्नं विनिक्षिप्य सुवर्णं तत्र निक्षिपेत्।
दशनिष्कप्रमाणेन विष्णुरूपं क्रियाद्बुधः।।

चतुरङ्गुलमायामं चतुरङ्गुलविस्तृतम्।

श्रीभूम्योश्च तदर्धेन सुवर्णेनैव कारयेत्।।

तत्तन्मन्त्रं समुच्चार्य कुम्भमध्ये विनिक्षिपेत्।
श्रीवत्सं पूर्णकुम्भं च भेरीमादर्शनं तथा।।

मत्स्ययुग्माङ्कुशं शङ्खमावर्तं चाष्टमङ्गलम्।
शङ्खचक्रगदाशार्ङ्गाण्यसिरायुधपञ्चकम्।।

गरुडं गजरूपं च कूर्मरूपं तथैव च।
मेघविद्युल्लताश्चैव वर्णचिह्नानि कारयेत्।।

नवाष्टसप्तकं वापि पञ्चनिष्कमथापि वा।
निष्काहीनसुवर्णेन प्रतिमाश्च पृथक् पृथक्।।

श्रीवत्सादीनि सर्वाणि कुम्भमध्ये विनिक्षिपेत्।
कुम्भमध्ये स्थितं तोयं तोयमध्ये तु पङ्कजम्।।

पङ्कजस्य च मध्ये तु धायेन्नारायणं हरिम्।
श्रीभूमिसहितं ध्यात्वा अर्चयेदष्टविग्रहैः।।

अपक्वानि च सर्वाणि ताम्बूलं च निवेदयेत्।
वैष्णवं विष्णुसूक्तं च पुरुषसूक्तं तथैव च।।

श्रीसूक्तं च ततो हुत्वा भूसूक्तं च ततः परम्।
एकाक्षरादिसूक्तं च पञ्चशान्तिं जपेत् क्रमात्।।

ऋत्विग्भ्य(ग्भि)श्च सहाचार्यो जपेत् सूक्तान् समाहितः।
प्रातः स्नानविधानेन स्नानकर्म समाचरेत्।।

विष्ण्वालयं समागत्य देवेशमनुमान्य च।

कलशैः स्नापयेद्विष्णुं यथाविभवविस्तरम्।।

आचार्यः शिरसा कुम्भं धृत्वा विष्ण्वालयं पुनः।
प्रदक्षिणद्वयं कृत्वा गर्भागारे निवेशयेत्।।

पूर्वोक्तेनैव सूक्तेन प्रोक्षयेद्विष्णुमव्ययम्।
तच्छिष्टेनोदकेनैव भूमिं प्रोक्ष्य ततः परम्।।

राजानं च समाहूय प्रोक्षयेत् कुम्भवारिणा।
ब्राह्मणान् भोजयित्वैव आशीर्वादपुरस्सरम्।।

(दशदानं ततः कृत्वा आज्यावेक्षणमेव च।
फलदानादिकं सर्वं यथाकल्पं समाचरेत्।।)

आचार्यं च समाहूय वस्त्राभरणकुण्डलैः।
हेमयज्ञोपवीताद्यैर्भूषणैरपि भूष्य च।।

अष्टोत्तरसहस्रं वा तदर्धं निष्कमेव च।
चतुःशतं च निष्काणां दद्यादाचार्यदक्षिणाम्।।

आचार्यस्य चतुर्थांशमृत्विग्भ्यश्च।

## ९.८.६६ महोत्पातशान्तेः फलम्

**य.४४ (परिशिष्टपाठे) ५४ - ५६**

एवं यः कुरुते भक्त्या ह्यक्षयं श्रियमाप्नुयात्।।

पुत्रार्थी लभते पुत्रान् जयार्थी लभते जयम्।
राज्यार्थी राज्यमाप्नोति शान्तिश्चैव भविष्यति।।

इहैव धनवान् श्रीमान् दीर्घमायुरवाप्नुयात्।

**९.८.६७ श्रीशताष्टकशान्तेः आचरणप्रकारः**

**य.४६ (परिशिष्टपाठे) १८ - २६**

श्रीशताष्टकशान्तिं तु खिले प्रोक्तवदाचरेत्।
प्रज्वाल्य सभ्यकुण्डं च वसोर्धारां यजेत् क्रमात्।।
जुहूं गृहीत्वा हस्तेन पूर्वोक्ताज्यं प्रगृह्य च।
आचार्यः प्राङ्मुखस्तिष्ठन् धारया च यजेत् क्रमात्।।

वैष्णवं विष्णुसूक्तं च पौरुषं सूक्तमेव च।
श्रीभूसूक्तं ततो जप्त्वा अतो देवादि वैष्णवम्।।

एकाक्षरादिसूक्तं च गायत्रीं वैष्णवीं तथा।
एतैस्तु सप्तभिः सूक्तैश्चतुरावर्त्य हूयताम्।।

एवं कर्तुमशक्तश्चेत् सकृद्वा तत्र कारयेत्।
वसोर्धारां यजित्वैव वसुधामखिलां लभेत्।।

अशनिपातादिसर्वशान्तये भवति ध्रुवम्।
राजराष्ट्राभिवृद्धिश्च भुवि शान्तिं समाचरेत्।।

ब्राह्मणान् भोजयेन्नित्यं यावत्कर्मसमापनम्।
अर्चनादीनि सर्वाणि नैवेद्यानि तथैव च।।

स्नपनादीनि सर्वाणि पीठे अभ्युक्षणं चरेत्।
एक (वं) द्वादशवर्षाणि एतत्पीठोक्तसंनिधौ।।

**९.८.६८ ग्रामशान्तेः आचरणप्रकारः**

**य.४७ (परिशिष्टपाठे)६ - २६**

अतः परं प्रवक्ष्यामि ग्रामशान्तिर्विधीयते।।

मासमेकं सुसंत्यज्य अन्यमासं गतं यदि।
वास्तुशुद्धिं ततः कृत्वा वेदपारायणं चरेत्।।

देवस्य स्नपनं कृत्वा चैकाहं चोत्सवं चरेत्।
द्विमासे द्विगुणं प्रोक्तं त्रिमासे त्रिगुणं चरेत्।।

एवमेव विधानेन वत्सरान्तं समाचरेत्।
संवत्सरे तृतीये तु प्रायश्चित्तं विधीयते।।

ग्राममध्ये प्रपां कृत्वा पञ्चाग्नीन् परिकल्प्य च।
वास्तुशुद्धिं ततः कृत्वा पुण्याहमपि वाचयेत्।।

अष्टानां लोकपालानां मन्त्राणि च सुहूयताम्।
शान्तिहोमसमायुक्तं पारमात्मिकसंयुतम्।।

यद्देवादींश्च हुत्वा तु ईंकारादिश्च हूयते।
वैष्णवं ब्राह्मसंयुक्तं रौद्रं विष्णोर्नुकादिभिः।।

एवं हुत्वा चतुर्दिक्षु वेदानध्यापयेत् क्रमात्।
देवस्य स्नपनं कृत्वा कलशैस्तु शताष्टकैः।।

हविर्भिः संनिवेद्यैव प्रभूतबलिमाचरेत्।
एवं नित्यं प्रकुर्वीत पक्षं सप्ताहमेव वा।

## ९.८.६९ शिवारुतादौ शान्तिः

**य.४७ (परिशिष्टपाठे) ४२ - ४९**

शिवारुते तथा ? मध्ये च गच्छति।
चैत्यवृक्षे सभास्थाने देवतायतनेषु च।।

चतुर्णां रथवीथीनां वानरो दृश्यते यदि।

दग्ध्वा चे ? देन सद्यः शान्तिं समाचरेत्।।

वास्तुशुद्धिं ततः कृत्वा पुण्याहमपि वाचयेत्।
तत्तत्स्थानेषु सर्वेषु प्रोक्षयेत् पञ्चगव्यकैः।।

पूर्ववत् कुण्डसंस्कारमाघारं पूर्ववच्चरेत्।
आर्षं च भौतिकं चैव वैष्णवं ब्राह्मसंयुतम्।।

पञ्चवारुणपर्यन्तं व्याहृत्यन्तं सुहूयताम्।
सप्तभिः कलशैर्देवं स्नापयित्वा यथाक्रमम्।।

ब्राह्मणान् भोजयित्वा तु दक्षिणां च स्वशक्तितः।
नगरे राजधान्यां च देवतायतनेषु च।।

पत्तने कुटिके चैव देवागारे सुहूयताम्।
शान्तिहोममिति प्रोक्तं केवलं ? जपेत्।।

वैष्णवं पौरुषं सूक्तं ब्राह्ममैन्द्रं सवारुणम्।

## ९.८.७० अनुक्तदोषाणां प्रायश्चित्तम्

**ज्ञा.१०८.२००**

अनुक्तानामरिष्टानां मूलमन्त्रद्वयजपहोमैः शान्तिं कारयेत्। सर्ववेदमयं सर्वार्थसाधकं परात्परतरं गुह्यात् गुह्यतरम्।। तस्मात्सम्यक् समाचरेत्। वरं लक्षयुक्तं, मध्यममष्टसहस्रम्, अधमं पञ्चसहस्रं, तद्धोमः। तस्मात्कर्मगौरवं विदित्वा तदर्हमाचरेत्। शुचौ देशे भगवन्तं सप्तविंशतिविग्रहैराराध्य, आचार्यं देववत्पूज्यारभेत। आज्येनाश्वत्थसमिद्भिः चरुणा दूर्वाङ्कुरैर्वा हृत्पद्मसुषिरे जाज्वल्यमानमकुटं देवं दिव्यभूषणं श्यामाम्बरधरं तप्तहाटकसङ्काशं रक्तास्यपाणिपादाक्षं प्रणवात्मकं शङ्खचक्रधरं परात्परं देवं विष्णुं मनसा ध्यात्वा जुहुयात्।

तिलगन्धपुष्पाक्षतरत्नसम्पूर्णमश्वत्थप्लक्षवटापामार्गपल्लवयुतं रक्तवस्त्रवेष्टितं कलशं धान्योपरि स्थाप्य, तन्मध्ये वारुणं मण्डलं वारिबीजयुतं ध्यात्वा, प्रणवैरावेष्ट्य, अनेन मन्त्रेणाभिमृश्य, तज्जलेन शिष्यं सहस्रशः प्रोक्ष्य, स्नानं वा कारयेत्। एतेन ग्रहदोष व्याधिपीडोपद्रवरक्तस्त्रीवल्मीकाद्युत्पाताः दुस्स्वप्रदर्शनशत्रुचोरराजभयबन्धपिशाचाप स्माराद्युपद्रवा अज्ञानदोषाः दैवकृताश्चान्ये शान्तिं यान्ति। अतस्सम्यगष्टाक्षरेण द्वादशाक्षरेण वा जपेन, होमेन वा, कर्मगौरववशात् उत्तममध्यमाधमप्रकारैरनुक्तानामाचरेत्। इदं धन्यं पुण्यवर्धनं नाभक्ताय नाशुश्रूषवे नापुत्राय नाशिष्याय नासंसक्ताय दद्यादित्याह कश्यपः।

### ९.८.७१ प्रायश्चित्ते शान्तिवाचनस्वरूपम्

**खि.३७.४३**

शान्तिवाचन उद्दिष्टे पुण्याहं तत्र वाचयेत्।

### ९.८.७२ प्रायश्चित्ते होमशान्तिस्वरूपम्

**खि.३७.४३**

होमशान्तिप्रकरणे चरुणा वैष्णवं यजेत्।।

### ९.८.७३ प्रायश्चित्ते अर्चनकालोक्तशान्तिस्वरूपम्

**खि.३७.४४**

शान्तिमर्चनकालोक्तामर्घ्यदानेन कारयेत्।

**९.८.७४ प्रायश्चित्ते बलिशान्तिस्वरूपम्**

**खि.३७.४४**

बलिशान्तिप्रकरणे दद्याद्भूतबलिं तथा।।

**९.८.७५ प्रायश्चित्ते स्नपनशान्तिस्वरूपम्**

**खि.३७.४५**

शान्तिस्स्नपनकालोक्ता पञ्चगव्येन कल्प्यते।

**९.८.७६ प्रायश्चित्ते शान्तिलक्षणम्**

**खि.३७.४५**

क्रियया दोषशमनं यया सा शान्तिरीरिता।।

**९.८.७७ प्रायश्चित्ते शान्तिहोमस्वरूपम्**

**खि.३७.४६**

शान्तिहोमविधाने तु केवलं वैष्णवं यजेत्।

**९.८.७८ श्रीशान्तिः**

**य.४६ (परिशिष्ट) ११ - १३**

अब्जं श्वेतं घृतं ग्राह्यं कापिलेन तथैव च।
आप्लुत्याप्लुत्य जुहुयाद्विष्णुगायत्रिया तथा।।
रक्ताब्जं बिल्वपत्रं वा श्वेताब्जानामलाभके।
अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा।।
हुतमेव तु सम्प्रोक्तं श्रियः शान्तिरुदाहृता।
श्रीशान्तिं च ततो हुत्वा श्रियं पुष्टिं च विन्दति।।

### ९.८.७९ पुष्कलाहुतिशान्तिः

**य.४६ (परिशिष्ट) १४ - १७**

अतः परं प्रवक्ष्यामि पुष्कलामाहुतिं क्रमात्।
पद्माग्निं च परिस्तीर्य परिषेचनमाचरेत्।।

शर्कराज्यसमायुक्तं मधुक्षीरसमन्वितम्।
वैष्णवं विष्णुसूक्तं च पौरुषं सूक्तमेव च।।

श्रीसूक्तमपि भूसूक्तं सूक्तमेकाक्षरादिकम्।
जप्त्वा तु विष्णुगायत्रीं देवीं ध्यात्वा हुनेद्बुधः।।

पुष्कलामाहुतिं हुत्वा सुप्रीतो भगवान् हरिः।
पुत्रश्रियं जयं तस्य आयुरारोग्यवर्धनम्।।

***

# ९. तन्त्रसङ्करप्रायश्चित्तम्

## ९.९.१ वैष्णवेतरतन्त्रसाङ्कर्यप्रायश्चित्तम्

**प्र.३०.१ - ४**

अथ वक्ष्ये विशेषेण तन्त्रसङ्करनिष्कृतिम्।
वैष्णवस्यान्यतन्त्रेण सङ्करे दोषमादिशेत्।।

ग्रामस्य यजमानस्य राज्ञो राष्ट्रस्य संक्षयः।
तद्दोषशमनायैव साङ्कर्यमपहाय च।।

पद्मानले वैष्णवं च विष्णुसूक्तं च पौरुषम्।
पारमात्मिकमींकाराद्यष्टाशीतिं विशेषतः।।

अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा।
दोषगौरवमुद्दिश्य हुत्वा पूर्ववदाचरेत्।।

**वि.७७. ४६७**

[अत्र 'अष्टोत्तरसहस्रं वा' इति न वर्तते। ]

**खि.४१.२१ - २४**

वैष्णवेतरतन्त्रैस्तु साङ्कर्ये दोषगौरवात्।
कल्पयित्वा यागशालां कुम्भस्थापनपूर्वकम्।।

जुहुयात्पौण्डरीकाग्नौ विष्णुसूक्तं शताष्टकम्।
सप्तभिः कलशैर्देवं स्नापयित्वा विशेषतः।।

भृगूक्तविधिना कुर्याल्लघुसम्प्रोक्षणं बुधः।

पूजयेच्च यथापूर्वं नान्यथा पूजनं चरेत्।।

सङ्करः सम्भवेद्बुद्ध्वा ऋत्विजामन्यसूत्रिणः।
प्रतिष्ठादिषु कार्येषु पूर्वोक्तां निष्कृतिं चरेत्।।

दोषापनोदनं चैव सम्पाद्यान्यत्समाचरेत्।

**९.९.२ वैखानसे पाञ्चरात्रसाङ्कर्यप्रायश्चित्तम्**

**प्र.३०.११ - १४**

सौम्ये वैखानसे मार्गे यद्याग्नेयेन सङ्करः।
पञ्चरात्रेण सम्प्राप्तो राजा राष्ट्रं विनश्यति।।

तद्दोषशमनायैव पद्माग्नौ जुहुयात्क्रमात्।
महाशान्तिं विधानेन सप्ताहं वा त्र्यहं तु वा।।

अष्टाधिकशतैश्चैव संस्नाप्य कलशैस्ततः।
अभ्यर्च्य देवदेवेशं सम्पूज्यैव तु वैष्णवान्।।

भोजयित्वा ब्राह्मणांस्तु कारयेत्पूर्ववर्त्मना।

**वि.७७.४३७**

**क्रि.२७.७९, ९१ - ९४**

अतः परं प्रवक्ष्यामि तन्त्रसङ्करनिष्कृतिम्।
------------------------------ ।।
------------------------------।
वैखानसेन विधिना प्रतिष्ठाप्य यथाविधि।।

अर्चने क्रियमाणे तु पाञ्चरात्रेण सङ्करे।

ग्रामश्च यजमानश्च राजा राष्ट्रं च नश्यति।।

पक्षमेकं महाशान्तिं हुत्वा तद्दोषशान्तये।
ब्राह्मणान् भोजयित्वा तु तत्र पञ्चशतावरान्।।

वैखानसेन विधिना प्रतिष्ठाप्यार्चयेत्पुनः।

**स.७८.२६, २७ ; ८०.१२ - १४**

[अत्र 'विप्रान् पञ्चशतान् वाथ त्रिशतान् वाथ भोजयेत्' इति दृश्यते।]

**ज्ञा.१०८.२००**

वैखानसविधानेनार्चिते स्थाने आग्नेयं नाचरेत्। यदि कुर्यात् भस्मसात् भवति। तद्दोषशमनार्थं महाशान्तिं हुत्वा ब्राह्मणान् परिवेष्य वास्तुशुद्धिं कृत्वा पूर्ववत्स्थापयेत्। तदाग्नेये सौम्यसंवेशः समृद्धिकरणाय भवति। तस्मात् सम्यक् समाचरेत्।

**खि.४१.१० - २०**

कर्षणादिप्रतिष्ठान्तकर्माणि सकलानि च।।

आदौ यच्छास्त्रमाश्रित्य निर्वृत्तानि ततः परम्।
तेनैव शास्त्रेण सदा निर्वर्त्यानि प्रयत्नतः।।

नान्यत्तन्त्रं तु गृह्णीयात्प्रमादेनापि तत्र तु।
तन्त्रसङ्करदोषोऽयं सर्वतन्त्रेषु दूषितः।।

तन्त्रसङ्करदोषेण राजा राष्ट्रं च नश्यति।
आग्नेये त्वर्चनाहीने मासमेकं प्रमादतः।।

यदीच्छेत् सौम्यपूजां वै कर्तुं सौम्येन वर्त्मना।
संस्थाप्य देवं सौम्योक्तविधिना पूजनं चरेत्।।

न तत्र दोषो यत्सौम्य आग्नेयादुत्तमः स्मृतः।
तुल्यन्यायातन्न सौम्यं तु संस्कुर्यादितरेण तु।।

सौम्येन स्थापितं बिम्बं सर्वं सौम्येन चाचरेत्।
महत्यापदि च प्राप्ते कुर्यान्नान्येन सङ्करम्।।

सौम्येन स्थापिते स्थाने सौम्येनैव सदा चरेत्।
सौम्यं सर्वत्र सम्पूज्यं वैदिकत्वाद्विशेषतः।।

तस्मात्तान्त्रिकपूजायां चलितायामथान्यथा।
नष्टायां वा सौम्यमार्गप्रवेशो नैव दुष्यति।।

तन्त्रसङ्करदोषे तु सद्यश्शान्तिं समाचरेत्।
अङ्कुरं चाधिवासादीन् प्रतिष्ठोक्तक्रमेण वै।।

कृत्वा शान्तिं यथोक्तां तु कारयेत्त्वरया बुधः।
पश्चाद्यथाधिकारं च पूजां सम्यक्प्रवर्तयेत्।।

**प्र.३०.१४ - १८**

पञ्चरात्रविधानेन प्रतिष्ठाप्यार्चने कृते।।

कालेनान्तरिते तस्मिन्कुर्यात्सौम्यप्रवेशनम्।
सौम्यत्वाद्राजराष्ट्राणां तत्समृद्धिकरं भवेत्।।

पद्मानले महाशान्तिं हुत्वादौ च ततः क्रमात्।
वैखानसेन विधिना विमानं बिम्बमेव च।।

संस्कृत्य चोचितैस्सर्वैस्संस्कारैः कर्षणादिभिः।
प्रतिष्ठाप्य तदारभ्य सर्वं तेनैव चाचरेत्।।

आलयाश्रितदेवानां परिवारस्य पर्षदाम्।
पूजायामप्यमुख्यायां सङ्करो नैव सम्मतः।।

**वि.७७.४६८**

**क्रि.२७.९७ - १०५**

पाञ्चरात्रेण विधिना प्रतिष्ठाप्य यथाविधि।
क्रियमाणेऽर्चने मासमेकं हीनार्चनं यदि।।

पाञ्चरात्रे तथाऽऽग्नेये सौम्यस्यास्य प्रवेशनम्।
यदीच्छेत्कारयेद्भक्त्या सौम्यं तच्च भविष्यति।।

सप्तरात्रं महाशान्तिं पौण्डरीके जुहोति च।
ब्राह्मणान्भोजयित्वा तु शक्तितो दक्षिणां ददेत्।।

तत्तन्मन्त्रजपं कुर्यात् भूपरीक्षादिकर्मणाम्।
नयनोन्मीलनादीनामुक्तहोमं जुहोति च।।

जलाधिवासं कुर्वीत जङ्गमानां तु पूर्ववत्।
ध्रुवबेरोदितां शुद्धिं ध्रुवबेरे समाचरेत्।।

वैखानसेन विधिना प्रतिष्ठाप्य पुनः क्रमात्।
अर्चनादीनि सर्वाणि विधिना तेन कारयेत्।।

यदीच्छेच्छुद्धपूजायां सौम्यस्यास्य प्रवेशनम्।
पक्षमेकं महाशान्तिं हुत्वा शेषं च पूर्ववत्।।

स्थापयित्वार्चनादीनि कारयेदिति शासनम्।
अविच्छिन्नार्चने चापि मिश्रे ग्रामादिवास्तुषु।।

वैखानसेन विधिना प्रतिष्ठाप्यार्चयेदिति।

**स.८०.२४ - २७**

तत्र[1] संवत्सरं तेन हीने नित्यार्चने हरेः।
पञ्चरात्रे तदाग्नेये सौम्यस्यास्य प्रवेशनम्।।

यदोच्छेत्कारयेद्भक्त्या सौम्यं तस्य भविष्यति।
एकमासेऽर्चनाहीने कारयेदिति वै भृगुः।।

सप्तरात्रं महाशान्तिमब्जाग्नौ जुहुयात्तथा।
ब्राह्मणान्भोजयित्वा च शक्तितो दक्षिणां ददेत्।।

वैखानसेन सौम्येन प्रतिष्ठाप्य पुनः क्रमात्।
अर्चनादीनि सर्वाणि विधिना तेन कारयेत्।।

### ९.९.३ वैखानसमार्गे शैवविधिसाङ्कर्यप्रायश्चित्तम्

**स.८०.१ - ९**

विधिसङ्करमुद्दिश्य प्रायश्चित्तं प्रवक्ष्यते।
विधयो वैष्णवाश्चान्ये शैवाद्या बहवस्स्मृताः।।

विष्णोस्तत्सौम्यमूर्तेस्तु विधिस्सौम्यः प्रकीर्तितः।
शैवाद्या विधयः क्रूरा दीक्षापूर्वार्चनायुताः।।

अवेदमूलास्समया यस्मात्ते तान्त्रिकास्स्मृताः।
आलये प्रतिमायां च नित्यार्चायां बलै तथा।।

स्नपने चोत्सावादौ च कर्मण्यन्यत्र वा पुनः।
सौम्येऽस्मिन् वैष्णवे क्रूरैः शैवाद्यैः सङ्करे सति।।

---

1. पाञ्चरात्रविधिना कल्पिते विमाने

चतुर्वर्णेषु चान्यैश्च जायन्ते सङ्कराः प्रजाः।
तद्ग्रामो यजमानश्च राजा राष्ट्रं तथैव च।।

तस्मादेव जगत्सर्वं विनश्यति न संशयः।
तत्सङ्करं ततः शीघ्रमपहाय प्रयत्नतः।।

तद्दोषशमनार्थं तु पौण्डरीके विशेषतः।
मासमेकं महाशान्तिं पूर्ववज्जुहुयाद्बुधः।।

ब्राह्मणान् भोजयेत्तत्र सहस्रान् षट्च्छतांस्तु वा।
त्रिशतान्वा यथाशक्ति भोजयेच्छ्रोत्रियान्बुधः।।

सुवर्णं च पशुं तेभ्यो दद्यादेव स्वशक्तितः।
पुनस्तेन विधानेन सौम्येनैव च कारयेत्।।

**क्रि.२७.१०५ - १०७**

[अत्र ब्राह्मणभोजने ब्राह्मणसङ्ख्यायां 'सहस्रक'मित्येव दृश्यते न पुनर्विकल्पः।।]

### ९.९.४ आचार्यसङ्करे प्रायश्चित्तम्

**वि.७४.४५६**

अथाचार्यं कर्षणकाले वरयित्वा कर्षणादीनि प्रतिष्ठान्तानि, नित्यार्चन-स्नपनोत्सवप्रायश्चित्तं, विशेषार्चनादीनि नित्यनैमित्तिककर्माणि सर्वाणि च तेनैव कारयेत्। आचार्याभावे तत्पुत्रं पौत्रं नप्तारं तद्वंशजं वा कारयेत्। अयुक्तश्चेत्तमनुज्ञाप्य (ते अयुक्ताश्चेननुज्ञाप्य) पूर्ववदन्यमाचार्यं वरयेत्। तदभावे तच्छिष्यं प्रशिष्यं वा वरयेत्। आचार्यसन्निधौ नान्यमाचार्यं वरयेत्। यदि वरयेत्, तत्स्थानस्य ग्रामयजमानयोश्च आशु विनाशो भवति। राज्ञो राष्ट्रस्य

च परचक्रभयं भवति। तदर्चनं निष्फलं भवति। तस्मादाचार्यसङ्करं न कुर्यात्। अज्ञानादर्थलोभाद्वा आचार्यसङ्करे सति, पौण्डरीकाग्नौ महाशान्तिं हुत्वा, आचार्यं नमस्कृत्य, 'क्षमस्वे'ति याचित्वा, पूजयित्वा, तेनैव तत्तत्कर्म पुनरपि कारयेत्। आचार्यादीनामलाभे तद्रूपं पटे लिखित्वा, तं नमस्कृत्य, तत्सन्निधौ अन्यं युक्तमाचार्यं वरयेत्।

एकस्मिन् काले बहुकर्मणि (सु) प्राप्ते (षु) सति (त्सु) आचार्यं प्रणम्य, तद्विधिना तत्पुत्रादिभिः कारयेत्। तदलाभे त्वाचार्य एव तन्त्रयित्वा करोतीति विज्ञायते।

**प्र.२९.६६ - ७५**

***

# १०. जीर्णोद्धारः

## ९.१०.१ आपदि बिम्बानां गोपनम्

**स.७७.१ - ७**

राष्ट्रक्षोभे समुत्पन्ने चोरैर्व्याघ्रादिजन्तुभिः।।

वल्मीकपादपाद्यैर्वा जीर्णदोषसमुद्भवे।
विमाने चैव बेरे वा नवीकृत्य प्रयत्नतः।।

जीर्णदोषं समालोच्य यथाविधि समाचरेत्।
ग्रामान्तरगते बिम्बे स्थलान्तरगतेऽपि वा।।

निर्झराद्वा समुद्राद्वा नद्या वा परिलङ्घने।
सद्यस्समर्चितुं शक्तः पुनरन्यत्र पूजयेत्।।

अशक्तः पूजितुं सद्यो वृक्षमूले तु स्थापयेत्।
वृक्षमूले तथा वाप्यां कूपे संस्थाप्य रक्षयेत्।।

ध्रुवं वा कौतुकं बिम्बं स्नपनं चोत्सवं तथा।
बलिबेरमथो वापि पर्षद्बिम्बानि वा पुनः।।
ज्ञात्वा बिम्बानि सङ्गृह्य पुनः स्थाप्य समर्चयेत्।

## ९.१०.२ जङ्गमबेरे भूगुप्ते पुनःप्रतिष्ठाचरणम्

**क्रि.२३.१२९ - १३५**

जङ्गमेषु च गुप्तेषु हीने च स्थावरार्चने।

महाशान्तिं च हुत्वा तु तत्कालानुगुणं पुनः।।
पुनः प्रतिष्ठामार्गेण प्रतिष्ठां पुनराचरेत्।
अर्च्यमानं गृहे बेरं सुन्दरं लक्षणान्वितम्।।

ध्रुवबेरानुरूपं चेद् ग्रामस्यानुगुणं तथा।
लब्धं चेदौत्सवार्थं तु स्नापनार्थमथापि वा।।

नित्योत्सवार्थं वा तत्र स्थापयित्वा समर्चयेत्।
तद्बिम्बसंस्थितां शक्तिं निवेश्यादित्यमण्डले।।

ध्रुवात्तस्मिन्समावाह्य पूर्ववत्स्थापयेत्सुधीः।
तामेव शक्तिमथवा कुम्भे सम्यङ् निवेश्य च।।

लौकिकं तत्र संस्थाप्य कुम्भादावाह्य पूजयेत्।
लौकिकस्य प्रतिष्ठायां लौकिकाग्नौ जुहोति वै।।

एष एव विशेषः स्यादन्यत्सर्वं समं भवेत्।

## ९.१०.३ लौहबिम्बे भूगुप्ते कर्तव्यम्

**क्रि.५.७९ - ८३**

एकबेरविधानेन लोहबेरे प्रतिष्ठिते।
अर्च्यमाने पुनर्गुप्ते चोरशत्रुभयादिभिः।।

स्थाने तस्य यथालाभं प्रमाणेन शिलामयम्।
संस्थाप्य जङ्गमं तस्मिन् नित्यपूजां समाचरेत्।।

चोरशत्रुभये शान्ते समुद्धृत्य पुरातनम्।
शिलाबेरात् समावाह्य लोहबेरे समर्चयेत्।।

अथवा लौहबेरस्य प्रमाणेन शिलामयम्।
कृत्वाऽचलं प्रतिष्ठाप्य ध्रुवार्चास्थापनोक्तवत्।।
लौहबेरं च तत्तस्मिन् उत्सवं परिकल्पयेत्।

## ९.१०.४ कौतुकादिलोहबिम्बानां भूगोपनम्

**वि.७०.४३५, ४३६**

अथ भयरक्षार्थं निष्कृतिं वक्ष्ये - चोरैः शत्रुभिः परचक्रभयाद्वा ग्रामसंकुले सति भयरक्षार्थं कौतुकस्नपनोत्सवबलिबेरलौहिकप्रतिमानां देवीनां च तिरोधानां कारयेत्।

गुप्ते शुचौ देशे अवटं खनित्वा सिकताः प्रक्षिप्य उपरि कुशानास्तीर्य अवटे महीं देवीमभ्यर्च्य 'आपोहिष्ठे'ति प्रोक्ष्य आचार्यः अर्चको वा यजमानेन भक्तैस्सार्धं देवागारं प्रविश्य देवं प्रणम्य 'यावत्कालं भयमस्ति तद्धरण्या सह शयने शयिथा जनार्दन' ति देवेशमनुमान्य बिम्बस्थां शक्तिं ध्रुवबेरे समारोपयेत्। बेराभावे हृदये समारोपयेत्। 'परं रंह' इति पीठमादाय 'प्रतिद्विष्णुस्तपत' इति अवटेऽप्रमादं सन्यस्य 'यैद्वष्णव' मिति प्राक्छिरसः शाययेत्। अवटं सिकाभिः मृदा वा पूरयित्वा अवटच्छिद्रं सुदृढं कारयेत् । पश्चादभ्यन्तरं प्रविश्य देवं प्रणम्य जीवस्थाने पञ्चदशदर्भैः ग्रथितं द्वादशाङ्गुलमात्रं कूर्चं सन्यस्य ध्रुवबेरात्कूर्चे समावाह्य अर्चयेत्।

बालालयं चेदर्चापीठेकूर्चं सन्यस्य हृदयात्प्रणिध्यां निवेश्य कूर्चं बिम्बवन्मनसाऽक्षराणि तत्स्थानेस्मृत्वा सन्यस्य आवाह्य अर्चयेत्। स्नपनादावभ्युक्षणमेव कारयेत्।

मासादूर्ध्वं तत्कूर्चं व्यपोह्य अन्यत्कूर्चं सन्यस्य आवाह्य अर्चयेत्।

### ९.१०.५ भूगुप्तोद्धृतबेरशुद्धिः

**वि.७०.४३७**

सुकाले बिम्बमुद्धृत्य, आम्लाद्यैस्संशोध्य, पुण्याहं कृत्वा, अस्पृश्यैस्स्पृष्टे सति जलाधिवासादीनि कृत्वा, कालापेक्षामकृत्वा, अङ्कुरार्पणं कृत्वा, आलयाभिमुखे दक्षिणे वा मण्टपं, कूटं, प्रपां वा कृत्वा, तन्मध्ये पौण्डरीकाग्निकुण्डं कृत्वा, तदुत्तरे वास्तुहोमं हुत्वा, बिम्बस्यातीव पार्श्वतः पर्यग्निं कृत्वा, संशोध्य, पौण्डरीकाग्रेः पश्चिमतो बिम्बार्धाधिकायामविस्तारां भागोन्नतां यथालाभोन्नतां वा धान्यैः वेदिं कृत्वा, अण्डजादीनि पञ्च वस्त्राण्यास्तीर्य, चतुर्दशकलशैः संस्नाप्य, पुण्याहान्ते प्रतिसरं बद्ध्वा, कौतुकस्नपनोत्सव-१८१ बलिबेराणि देवीश्च सहैकशयने शाययेत्।

अवताराणां शयनं पृथगेव विधीयते। अब्जाग्निं परिस्तीर्य, परिषिच्य, होत्रं प्रशंस्य, देवेशस्य, देव्या, अवताराणां च दक्षिणप्रणिधौ तदालयगत-परिषद्देवानुत्तरप्रणिधौ च समावाह्य, आवाहनक्रमेण निर्वापं कृत्वा, आज्याहुतीर्यजेत्।

वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, विष्णुगायत्रीं, द्वादशाक्षरं, प्राजापत्यं, मिन्दाहुती, विच्छिन्नं च जुहुयात्। एतच्छान्तिहोम इत्येके।

**प्र.२८.९१ - १०२**

**क्रि.२१.१०७ - ११३, १२२ - १२५**

---------------------- भयनिर्हरणे पुनः।
काले स्वस्थे तथा देशे बिम्बान्युत्थाप्य चादरात्।।

संशोध्य चालयं सर्वं पुण्याहमपि वाचयेत्।
अस्पृश्यस्पर्शने चैव वास्तुहोमं च कारयेत्।।

चण्डालाद्यन्तजातैश्च बिम्बे स्पृष्टेऽथवा पुनः।
कृत्वा जलाधिवासादीन् प्रतिष्ठां पुनराचरेत्।।

कालापेक्षां न कुर्वीत कृत्वा वाप्यङ्कुरार्पणम्।
प्रतिष्ठोक्तक्रमेणैव प्रतिष्ठां सम्यगाचरेत्।।

अर्चको हृद्गतां शक्तिं कुम्भे चावाहयेत्क्रमात्।
एष एव विशेषः स्यातदन्यत्सर्वं च पूर्ववत्।।

नित्यार्चनविधानेन नित्यपूजां समाचरेत्।
नित्यहोमं च हुत्वा तु बलिं तत्र प्रदापयेत्।।

औत्सवादिष्वलब्धेषु सर्वं कुर्याच्च कौतुके।
------------------------------।।

सुकाले बिम्बमुद्धृत्य प्रतिष्ठां पुनराचरेत्।
सभ्याब्जकुण्डे द्वे कृत्वा नित्यमग्निं प्रणीय च।।

पुनः प्रतिष्ठामार्गेण सर्वं कुर्याद्यथाविधि।
कौतुकादिषु गुप्तेषु विच्छिन्ने वा ध्रुवार्चने।।

कृत्वा तु ध्रुवबेरस्य अर्चनाहीननिष्कृतिम्।
तस्मात्तु कौतुकादीनां प्रतिष्ठामाचरेत्पुनः।।

चण्डालाद्यन्त्यजस्पर्शे प्रायश्चित्तं तदीरितम्।
हुत्वा शुद्धिं पुनः कृत्वा प्रतिष्ठां पुनराचरेत्।।

**वा.४६**

अतः परं प्रवक्ष्यामि पुनस्स्थापनमार्गतः।
राष्ट्रक्षोभे महोत्पाते चोरव्याघ्रादितस्करे।।

वल्मीकपादपाद्यादिजीर्णमत्र समुद्भवे (?)।
विमाने चैव बेरस्य नवीकृत्य प्रयत्नतः।।

ग्रामान्तरगते बिम्बे आलयान्तर्गतेऽपि वा।
निर्झरे च समुद्रे वा नद्याद्यालय लङ्घने।।

वृक्षमूले तु संरक्ष्य वापीकूपान्तरे क्षिपेत्।
कौतुकादि ध्रुवान्तं स्यात् खनित्वा संभवेद्यदि।।

मुख्यान् गौणादिकान् वीक्ष्य गौणे मुख्यं समाचरेत्।
मुख्ये गौणं न कुर्वीत इति शास्त्रस्य निश्चयः।।

पञ्चाग्नीन् परिकल्प्यैव सभ्यमब्जमथापि वा।
शिलया ध्रुवबेरं तु दर्शनीयं च सुन्दरम्।।

अथवा चेद्विरूपं तु स्थापयित्वाऽत्वरं बुधः।
तद्बेरोत्पातनं यत्र यदि तत्र परीक्षयेत्।।

रेखासुषिरसंयुक्ते हीनोपाङ्गादिहीनके।
गुरुलाघवमालक्ष्य बेरं त्यक्त्वा विधानतः।।

पौराणे चार्षके चैव दैविकादिषु संभवे।
अविधिकमलक्षण्यमप्रमाणं न दोषकृत्।।

कर्तृकालमनिर्दिष्टं पौराणिकमिति स्मृतम्।
देव्यादिपरिवाराणां प्रभापीठं तथैव च।।

विधिना मार्गमालक्ष्य नवीकृत्य प्रयत्नतः।
रत्नन्यासं भवेच्चैव पुना रत्नं तु निक्षिपेत्।।

शिलाभिः सुदृढं कृत्वा अष्टबन्धं प्रलेपयेत्।

यागशालामलङ्कृत्य वास्तुहोमः सुहूयताम्।।

पूर्ववत्पूजयेत्कुम्भमण्डजादीनि पूर्ववत्।
कौतुकं त्वधिवास्यैव औत्सवं स्नपनं विना।।

अथवा कारयेद्विद्वान् शयनं स्नपनोत्सवम्।
अन्यत्तु पूर्वं यः कुर्यादुक्तवत्सर्वमाचरेत्।।

एवमेव क्रमेणैव प्रतिष्ठां पुनराचरेत्।

**क्रि.२३.१२५ - १२८**

(जङ्गमेषु च गुप्तेषु परचक्रभयेषु च।
यावत्कालं तदुद्धारः तावत्कालं च तत्र वै।।

कूर्चे भक्त्या समावाह्य ध्यात्वा देवं समर्चयेत्।
उद्धृत्य तानि बिम्बानि शुद्धिद्रव्येण शोधयेत्।।

कलशैः स्नापयेद्देवं यथाविभवविस्तरम्।
महाशान्तिं च हुत्वा तु पुण्याहमपि वाचयेत्।।

ब्राह्मणान् भोजयित्वा तु शक्तितो दक्षिणां ददेत्।
अर्चयेच्च यथान्यायं हविः सम्यङ् निवेदयेत्।।)

### ९.१०.६ मासान्तोद्धृतबिम्बशुद्धिः

**वा.४५**

भूगुप्तोद्धृतबिम्बादिप्रायश्चित्तविधिं शृणु।
प्रायश्चित्तं च कृत्वैव पूजयेद्देशिकोत्तमः।।

प्रायश्चित्तविधिं वक्ष्ये सर्वपापहरं परम्।
सर्वकामप्रदं चैव भुक्तिमुक्तिप्रदायकम्।।

भूगुप्तोद्धृतबिम्बेषु वारिगुप्तोद्धृतेषु च।
एतद्दोषं समुद्दिश्य प्रायश्चित्तं शृणुष्वथा।।

नैमित्तिकानि काम्यानि सर्व - तानि सर्वशः।
अङ्कुरार्पणपूर्वाणि तानि सर्वाणि कारयेत्।।

अङ्कुरार्पणहीनानि निष्फलानि न संशयः।
प्रायश्चित्तदिनात् पूर्वे यस्यां निशि विधानतः।।

मूलबिम्बाङ्गबिम्बानां ताम्रादीनां च सर्वशः।
एककाले प्रतिष्ठा चेत् एकमेवाङ्कुरार्पणम्।।

वारऋक्षं तु तिथयो न परीक्ष्याः कदाचन।
पूर्वेद्युर्देशिको भूत्वा जिताहारो जितेन्द्रियः।।

स्नात्वा स्नानविधानेन जपेत् सम्यक् समाहितः।
वैष्णवं विष्णुसूक्तं च पुरुषसूक्तमतः परम्।।

श्रीभूसूक्तं तथा द्वे तु जपित्वात्र न संशयः।
अपरे तु दिने प्राप्ते पश्चात् कार्यं समाचरेत्।।

प्रमुखे चोत्तरे वापि दक्षिणे वा मनोरमे।
इष्टदेशे यथान्यायां यागशालां प्रकल्प्य च।।

एकद्वित्रदिने चापि भूगुप्ते तु समुद्भवे।
तत्र दोषं समुद्दिश्य प्रायश्चित्तविधिं शृणु।।

औपासनाग्निकुण्डं च कृत्वाघारं च हूयताम्।
वैष्णवं शतशो हुत्वा विष्णुसूक्तं तथा यजेत्।।

श्रीसूक्तं च महीसूक्तं सर्वदैवत्यसंयुतम्।

श्वभ्रं कृत्वा विधानेन विधिना स्नपनं चरेत्।।

प्रतिष्ठोक्तक्रमेणैव कलशैः सप्तसङ्ख्यया।
मूलबिम्बाङ्गबिम्बानां प्रत्येकं स्नापयेत् सुधीः।।

जलाधिवासनं कृत्वा अस्पृश्यस्पर्शने यदि।
पूर्वमुद्वास्य देशात्तु शक्तिमादाय बुद्धिमान्।।

पीठं विसृज्य तत्काले जीर्णोद्धारविधानतः।
सर्वं यत्नेन कृत्वा तु होममेकं च कारयेत्।।

कुम्भे वा प्रणिधौ वापि शक्तिमावाह्य पूजयेत्।
तत्तत्स्थाने न्यसेद्बिम्बान् क्रमादावाहयेत् ततः।।

अर्चयेत् पूर्वविधिना अधिकं वा समर्चयेत्।
महाहविस्ततो दद्यात् शर्कराघृतसंयुतम्।।

ब्राह्मणान् भोजयेत् पश्चात् तेषां दद्यात् तु दक्षिणाम्।
आचार्यादिषु सर्वेषु विधिना दक्षिणां ददेत्।।
एवमेव प्रकारेण मासान्तं तु दिने दिने।।

किञ्चिद्धोमविशेषोस्ति शृणुध्वमृषिसत्तमाः।
दिनमेकं तु गुप्तं चेत् सकृद्धुत्वा तु बुद्धिमान्।।

द्वितीये द्विगुणं कुर्यात् तृतीये त्रिगुणं चरेत्।
एवं मासान्तमित्युक्तम् अन्यथा तु न कारयेत्।।

## ९.१०.७ द्विमासाद्यब्दान्तोद्धृतबिम्बशुद्धिः

**वा.४५**

द्विमासे चोद्धृते बिम्बे प्रायश्चित्तं विधीयते।।

पूर्वोक्तलक्षणोपेतपौण्डरीकाग्निकुण्डके।
आघारं विधिवत्कृत्वा परिषिच्य च पावकम्।।

पूर्वोक्तहोममन्त्रैश्च यद्देवादीन्यतः परम्।
कुर्याच्छताष्टपर्यायमष्टाशीतिसमायुतम्।।

ईंकारादीन् तथा कुर्यात्पश्चात्स्नपनमाचरेत्।
स्नापयेद्विधिना पश्चात्कलशैः पञ्चविंशकैः।।

शक्तिमावाहयेत्पश्चात्पूर्वोक्तेन क्रमेण वै।
ब्राह्मणान् भोजयेत्पश्चात् सहस्राष्टसमायुतम्।।

नवभेदेष्वथैकस्मिन्नुत्सवं च समाचरेत्।
महाहविस्ततो दद्याच्छर्कराघृतसंयुतम्।।

एवं संवत्सरान्तं तु कृत्वा तत्रैव बुद्धिमान्।

### ९.१०.८ षण्मासान्तोद्धृतबिम्बशुद्धिः
### वि.७०.४३८, ४३९

षण्मासे अतीते महाशान्तिं जुहुयात्। लाजतिलचूर्णापूपसक्तुभिराज्यमिश्रितैः वैष्णवं विष्णुसूक्तं प्रत्येकं द्वादशाष्टपर्यायतो जुहुयात्। अष्टोत्तरशतं पद्मं श्वेतं रक्तं वा, अलाभे बिल्वपत्रं वा, घृताप्लुतं विष्णुगायत्र्या जुहुयात्। सर्वदेवत्यं पारमात्मिकं च जुहुयात्। एवं महाशान्तिरिति केचिद्वदन्ति।

पश्चादवताराणां तत्तन्मन्त्रं प्रत्येकमष्टोत्तरशतं हुत्वा नृत्तगेयवाद्यैः रात्रिशेषं नयेत्।

प्रभाते स्नात्वा, देवं प्रणम्य, प्रणवेन बोधयित्वा, अभिवन्द्य, अपराधशतं सहस्रमयुतम् असङ्ख्येयं च 'करुणाब्धे क्षमस्वे'ति याचेत। पूर्ववस्त्रमाल्यादीनि

व्यपोह्य, अन्यैरलङ्कृत्य, सर्ववाद्यघोषयुतं शाकुनसूक्तेन तोयधारापुरःसरम् आचार्यः पुरतो गच्छेत्।

स्थापका देवमुद्धृत्य, आलयं प्रदक्षिणीकृत्य, अभ्यन्तरं प्रविश्य, पूर्ववत् स्थापयेयुः। आचार्यो देवपादं स्पृशन्, वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तम्, आत्मसूक्तं जप्त्वा, पूर्ववद्देवं ध्यात्वा, ध्रुवबेराच्छक्तिं प्रणिध्यां निवेशयेत्। हृदये समारोपिता चेत्, हृदयात् प्रणिधिजले समावाह्य, पूर्ववदक्षरन्यासं कृत्वा, आवाह्य, तदालयपरिषद्देवान् पूर्ववदावाहयेत्।

पादौ प्रक्षाल्य, अभ्यन्तरं प्रविश्य, पुण्याहं वाचयेत्। आचार्यादिभ्यो दक्षिणां दद्यात्। अग्निं परिस्तीर्य, अन्तहोमं हुत्वा, पश्चादुत्सवं स्नपनं च कारयेत्। अशक्तश्चेत् केवलस्नपनं कारयेत्।

**प्र.२८.१०२ - ११६**

### ९.१०.९ वर्षान्तोद्धृतबिम्बशुद्धिः

**वि.७०.४३९**

वर्षातीते च[1] एतमेव संस्कारं कृत्वा, पुनः स्थापनमाचरेत्। अवताराणां पृथगेव कारयेदित्येके। तेषां पुनः प्रतिष्ठा चेत् तत्तत्प्रधानहोमं कारयेदित्येके।।

**प्र.२८.११७, ११८**

### ९.१०.१० दशाब्दान्तोद्धृतबिम्बशुद्धिः

**वा.४५**

एकाब्दादि दशाब्दान्तं प्रायश्चित्तं विधीयते।।

1. षण्मासादुपरि भूगुप्तोद्धृते बिम्बे उक्तम्

पूर्वोक्तमासनक्षत्रे प्रायश्चित्तं समारभेत्।
आलयाद्दक्षिणे पार्श्वे पद्माग्निं साधयेत्ततः।।

आघारं विधिवद्धुत्वा परिषिच्य च पावकम्।
पारमात्मिकसंयुक्तमींकारादीनि हूयताम्।।

अष्टाशीतिसमायुक्तं रात्रिसूक्तं सुहूयताम्।
पुरुषसूक्तं ततो हुत्वा विष्णुसूक्तं तु हूयते।।

श्रीसूक्तं तु महीसूक्तं विश्वजित्सूक्तमेव च।
सर्वदैवत्यसंयुक्तं क्रमादष्टोत्तरं शतम्।।

समिदाज्येन चरुणा एवमेव तु कारयेत्।
प्रायश्चित्तं च कृत्वैव प्रतिष्ठां पुनराचरेत्।।

सहस्रभोजनं कृत्वा विप्रेभ्यो मुनिसत्तमाः।
द्वात्रिंशद्गाः प्रदातव्याः[1] (?) यथालाभमथापि वा।।

आचार्यदक्षिणां दद्यादुत्तमोत्तमदक्षिणाम्।
उत्सवं च पुनः कृत्वा स्नपनं च शताष्टकैः।।

अर्चयेद्देवदेवं तं पूर्वोक्तविधिना सह।
महाहविस्ततो दद्यात्गुलं चात्र फलैर्युतम्।।

एकाब्दादिदशाब्दान्तमेवमेव विधीयते।

1. प्रदद्यात् तु (?)

## ९.१०.११ दशाब्दादि सहस्राब्दान्तोद्धृतबिम्बशुद्धिः

**वा.४५**

दशाब्दादिशताब्दान्तं प्रायश्चित्तं विधीयते।।

पूर्वोक्तमासनक्षत्रे प्रतिष्ठाविधिमाचरेत्।
प्रतिष्ठोक्तदिनात्पूर्वं पञ्चमे वा त्र्यहेऽथवा।।

पञ्चाग्निं साधयेद्विद्वान् विधिना तेन कारयेत्।
पूर्वोक्तेन विधानेन प्रायश्चित्तं समाचरेत्।।

वास्तुहोमं ततो हुत्वा पूर्वोक्तेन विधानतः।
गुप्तान् बिम्बान् समादाय शोधयित्वा प्रयत्नतः।।

शिल्पिना तीक्ष्णशस्त्रेण शोधयित्वाऽप्रमादतः।
एकद्वित्रियवैर्हीने न दोष इति कथ्यते।।

पश्चात् दृष्टिं समुत्पाद्य विधिना तेन कारयेत्।
जलाधिवासं कृत्वा तु पश्चात् स्नपनमाचरेत्।।

स्थापनात् पूर्वदिवसे स्नपनं सम्यगाचरेत्।
शताष्टकलशैर्देवं विधिना तेन कारयेत्।।

प्रतिष्ठान्तु ततः कृत्वा स्थापयेद्देवमव्ययम्।
पूर्ववत्पूजयेत्पश्चात् महाहविःसमायुतम्।।

आचार्यदक्षिणां दद्यात्पूर्वोक्तेन विधानतः।
ब्राह्मणान् भोजयेत्पश्चात् सहस्राष्टसमायुतम्।।

गवां शताष्टकं दद्याद्यथालाभमथापि वा।
पश्चादुत्सवमारभ्य पूर्वोक्तेन विधानतः।।

शताब्दादिसहस्रान्तमेवमेवं तु कारयेत्।

सहस्राब्दे व्यतीते तु बेरनाशो न संशयः।।

अथवा सम्भवेच्चेत्तु शुद्धिं कृत्वा विचक्षणः।
पूर्वोक्तेन विधानेन प्रायश्चित्तं समाचरेत्।।

पश्चात् प्रतिष्ठा कर्तव्या इति पूर्वजदर्शनम्।

### ९.१०.१२ वार्यादिगुप्तबिम्बस्य पुनः प्रतिष्ठा

**स.७७.७ - १२**

वारिगुप्ते च भूगुप्ते चिरकालगते सति।।

बहुजन्मकृतात्पुण्याद्भक्तानां च विशेषतः।
भूम्यादिखनने यत्र बिम्बानां दर्शनं यदि।।

मुख्यगौणौ समालोच्य मुख्ये गौणं न चाचरेत्।
गौणे मुख्यं प्रकुर्वीत सर्वशास्त्रेषु निश्चयः।।

अक्ष्युन्मेषं च रत्नं च जले चाप्यधिवासनम्।
अङ्कुरादीनि सन्त्यक्त्वा अन्यत् पूर्ववदाचरेत्।।

अङ्कुरार्पणमारभ्य कारयेदिति मन्मतम्।
पञ्चाग्नीन् परिकल्प्यैव सम्यमब्जमथापि वा।।

शिलया ध्रुवबेरं तु दर्शनीयं च सुन्दरम्।
जीर्णं सर्वं समालोच्य प्रतिष्ठाप्य समर्चयेत्।।

### ९.१०.१३ चोरापहृतबेरलाभे पुनः प्रतिष्ठाक्रमः

**य.३०.३५ - ३८**

चोरैरपहृतं बेरं संभवेद्यदि तत्स्वयम्।

न त्यजेत्पूर्ववद्धीमान् पश्चादन्ये प्रतिष्टिते।।

स्थानादन्यत्र संस्थाप्य यथालाभं समर्चयेत्।
देव्यौ तत्कौतुकं नैव यदि ----------।।

कारयित्वा स पूर्वोक्तं देव्यौ तु स्थापयेद्बुधः।
एवं प्रतिष्ठिते देव्यौ संभवेतां च ते यदि।।

दोषहीने यदि तथा ताभ्यां सार्धं च पूजयेत्।
सर्वत्र तुल्यं प्राधान्यं तदेकैकतया तयोः।।

ताभ्यां तत्पूर्वदेवीभ्यां पूजयेत्सह कौतुकम्।

**९.१०.१४ राष्ट्रान्तरानीतबिम्बप्रतिष्ठा**

**क्रि.८.८३ - ९१**

राजा राष्ट्रान्तरं जित्वा बेरं यदि समानयेत्।
तद्बिम्बं च समुद्दिश्य स्वराष्ट्रे च मनोरमे।।

ध्रुवं तस्यानुरूपं च विमानमपि कारयेत्।
संस्थाप्य पूर्ववत् तत्र कुर्यात्तत्रार्चनं बुधः।।

ध्रवबेरानुरूपं चेत् अथवा मन्दिरे क्वचित्।
औत्सवं स्नापनं वाथ स्थापयेदिति केचन।।

अथवा नानुरूपं चेत् लौकिकं वाथ कुत्रचित्।
स्थाप्य त्रयाणां बिम्बानां स्थानादन्यत्र पूजयेत्।।

स लभेदिष्टकादीनां फलं द्विगुणमेव च।
नीतमाग्नेयबिम्बं चेत् सप्ताहं पद्मकुण्डके।।

महाशान्तिं च जुहुयात् अधिवासादि पूर्ववत्।
कारयित्वा तु विधिना लौकिकं स्थापयेत् पुनः।।

कुम्भं संसाध्य विधिना सामावाह्यार्कमण्डलात्।
कुम्भात्तस्मिन् समावाह्य पूजयेदिति शासनम्।।

भूमिं परीक्ष्य विधिना सद्यः कर्तुः त्वरान्वितः।
ब्राह्मपद्यावसाने तु गर्भगेहे विशेषतः।।

अधिष्टानोदयान्ते तु घनं भित्रं प्रकल्पयेत्।
पञ्जरं च बहिः कृत्वा तत्र बेरं यथाविधि।।

प्रतिष्ठाप्यार्चनं कुर्यात् नारभेतालयक्रियाम्।

## ९.१०.१५ परिवारादिवैकल्यप्रायश्चित्तम्

**नि.३१**

परिवारादि सर्वत्र वैकल्यादिसमुद्भवे।।

आलयात्पुरतो वापि दक्षिणे वा यथार्हकम्।
बालालयं तु कृत्वैव बेरं संस्थाप्य चार्चयेत्।।

पीठेऽथवा समावाह्य अर्चयत्यासपनात्।
सम्यक् स्निग्धविमाने च आरब्धे ध्रुवरूपके।।

अब्जाग्नौ तु महाशान्तिं हुत्वा तत्र विशेषतः।
सहस्रभोजनं कृत्वा शक्तितो दक्षिणां ददेत्।।

शून्ये शून्ये तथाब्देऽब्दान् तथा द्विगुणमाचरेत्।
द्वादशाब्दे तु शून्ये तु महाशान्तिं च पूर्ववत्।।

कर्षणादि तदारभ्य कारयेदिति शासनम्।

### ९.१०.१६ गर्भालयशैथिल्यादौ नवीकरणम्

**क्रि.२७.४८ - ५१**

गर्भालयस्थलभ्रंशे वल्मीकादिसमुद्भवे।।

कुम्भं पूर्वोक्तविधिना संस्थाप्यावाह्य तत्र वै।
अष्टोत्तरशतं हुत्वा वैष्णवं मूर्तिभिस्तथा।।

बालालयोक्तदेशेषु सन्न्यस्य मुखमण्डपे।
तत्र नित्यार्चनं कुर्वन् नवीकुर्यात् स्थलं दृढम्।।

प्रतिष्ठाविधिना बिम्बे कुम्भादावाहयेत्पुनः।
गर्भालयगतान् देवान् कुम्भस्य परितोऽर्चयेत्।।

### ९.१०.१७ महाबेरे वल्मीकादिसम्भवे प्रायश्चित्तम्

**वि.६९. ४३२**

वल्मीकतृणकृमिकीटकवकाद्युद्भवे सति पूर्ववच्छान्तिं[1] हुत्वा, ब्राह्मणान् भोजयित्वा देवं बालालये प्रतिष्ठाप्य, नवीकरणं कारयेत्।

**प्र.२८.५२, ५३**

### ९.१०.१८ तक्षकादिनिवेशने पुनः प्रतिष्ठा

**नि.३१**

बिम्बस्यातीव पार्श्वे तु तक्षकादिनिवेशने।।

तरुणालयदेशे वा तथैव स्नपनालये।
बालस्थानं च सङ्कल्प्य स्थावरात्कौतुके तथा।।

---

1. महाबेरे स्वेदादिदर्शनवत्

शक्तिमादाय तत्पीठे स्थापयित्वा समर्चयेत्।
सप्ताहं पक्षमेकं वा मासं वा युग्ममेव वा।।

स्थावर प्रतिमां चैव शास्त्रेणाद्य (?) यत्नतः।
सद्य (?) वासं नवीकर्तुं शक्तिश्चेत्तद्विशेषतः।।

बालालये द्वितीयेऽस्मिन् समावाह्यैव चार्चयेत्।
समाप्तेऽहनि कर्तव्यं वास्तुहोमं सुहूयताम्।।

आलयात्पुरतो वापि पौण्डरीके विशेषतः।
हुत्वा तु पौरुषं सूक्तं विष्णुसूक्तमतः परम्।।

पारमात्मिकसंयुक्तम् ईंकारादिसमन्वितम्।
पञ्चवारुणं जयादीनेकाक्षरादिकं तथा।।

व्याहृत्यन्तं सुहोतव्यं कलशैस्स्नपायेद्विभुम्।
ब्रह्मभागेन देवेशं पुनस्स्थापनमाचरेत्।।

एकबेरप्रतिष्ठा चेत् बिम्बेष्वावाह्य तत्क्रमात्। (म्बादाः ?)
कुम्भस्थं देवमादाय बालागारादि वेशयेत्।। (रे नि ?)

ब्रह्मस्थाने तु संस्थाप्य चार्चयेत्पूर्ववत् क्रमात्।
अन्यत्कुम्भं समावाह्य दिनं प्रति दिनं प्रति।।

कुम्भात्कुम्भे समावाह्य ध्यात्वा सम्यक्समर्चयेत्।
एवमेव प्रकारेण द्वादशाहान्तमाचरेत्।।

द्वादशाहे व्यतीते तु पौण्डरीके विशेषतः।
वैष्णवं विष्णुसूक्तं च पुरुषसूक्तसमन्वितम्।।

आज्येन चरुणा चापि मध्याह्ने चैव हूयताम्।

एवं मासे प्रकुर्वीत तद्विप्रासे (?) विशेषतः।
कालविज्ञापनं कुर्यात्प्रार्थनामन्त्रसंयुतम्।।

पूर्वोक्तेन विधानेन स्थापयित्वा समर्चयेत्।
नवीकर्मसमाप्तौ तु पूर्ववत्स्थापयेद्बुधः।।

एवमेव विधानेन गर्भागारे विशेषतः।
भित्याधार तुलादीनां नवकर्म समाचरेत्।।

स्थलभ्रंशादिदोषेपि एवमेव समाचरेत्।

### ९.१०.१९ विमाने भेदनादौ पुनःप्रतिष्ठा

**वि.६९.४३३**

विमाने अकारणाद्भिन्ने पतिते शुद्धिं कृत्वा, मासत्रयं महाशान्तिं हुत्वा, कर्षणादिपुनः सस्कारं कृत्वा, बालालयं सङ्कल्प्य, जलाधिवासादीनि कारयित्वा, बिम्बशुद्धिं कृत्वा, अशीत्यधिकसहस्रकलशैः संस्नाप्य, ब्राह्मणान् भोजयित्वा वैष्णवान् सम्पूज्य, देवं बालालये प्रतिष्ठाप्य आलयादि सर्वत्र नवीकरणं कृत्वा, महाप्रतिष्ठां कारयेत्।

**प्र.२८.५३ - ५७**

### ९.१०.२० विमाने अशनिपातादौ पुनासन्धानम्

**वि.६९.४३३**

[1]अशनिहते महामक्षिकादियुते च देवं कलशैः संस्नाप्य, विशेषपूजां कृत्वा, प्रभूतं निवेद्य, शान्तिं हुत्वा, ब्राह्मणान् भोजयित्वा, पुनस्संन्धानं कारयेत्।

**प्र.२८.५७ - ५९**

---

1. विमाने इति अनुवर्तते

**प्र.२७.३०३ - ३०५**

अशन्यादिनिपातेन धामन्यन्तरिते यदि।
देवे नष्टे ध्वजे सुस्थे ध्वजस्याराधनं भवेत्।।

आलयं च पुनः कृत्वा तमेवाराधयेद्ध्वजम्।
निरीक्ष्य त्रीणि वर्षाणि देवागारे त्वनिर्मिते।।

तत्र देवो न रमते तद्ध्वजं तु त्यजेत्सुधीः।
अथवा यत्र कुत्रापि प्रतिष्ठाप्य समर्चयेत्।।

### ९.१०.२१ विमानस्थूपिनाशे पुनःसन्धानम्

**वि.६९.**

विमानोपरि स्थूपिर्नष्टा चेद्विमानकल्पोक्तवत् सन्धानं कारयेत्।

**प्र.२८.५९, ६०**

### ९.१०.२२ ध्वजशिखरपातादिदोषे पुनःसन्धानम्

**प्र.२७.२७५ - २७७**

प्रमादात्पतितं गृह्य शिखरं स्थापयेद्विधिः।
स्फुटिते वाथ भिन्ने वा बिम्बस्योक्तवदाचरेत्।।

अधिष्ठिते तु शिखरे द्विजैर्गृध्रादिभिस्सकृत्।
विष्ठादिकरणे वापि उषिते वा निरन्तरम्।।

वास्तुहोमं च हुत्वैव पर्यग्निकरणं चरेत्।
एष एव विधिः प्रोक्तो त्तु विमानशिखरादिषु।।

## ९.१०.२३ भुवङ्गादिदोषे नवीकरणम्

**नि.३१**

भुवङ्गादौ मन्दिरे तस्मिन् दोषयुक्ते विशेषतः।
भिन्ने जीर्णे च पतिते यदा यत्रैव दृश्यते।।

मणिकादिद्वारपालेभ्यो मनसा संनिवेश्य च।
गर्भालये समावाह्य दक्षिणादि समर्चयेत्।।

यवनिकायां समावाह्य तद्दोषं संव्यपोह्य च।
बिम्ब नवीकृत्य भूमियज्ञं च कारयेत्।।

वैष्णवं विष्णुसूक्तं च पौरुषं सूक्तमेव च।
तद्देवताकमन्त्रं च मूर्तिमन्त्रं यजेत् क्रमात्।।

देवस्य स्नपनं कृत्वा द्वाराधिपमथाह्वयेत्।

-----------------------------

द्वितीयद्वारविशेषे(देशे)? च मण्डपे च तथैव च।।

पूर्वोक्तेन विधानेन द्वारपालौ यथार्हकम्।
प्रथमद्वारपाले तु समावाह्य समर्चयेत्।।

शिल्पिल्पशास्त्रेक्तमार्गेण यथापूर्वं तथाचरेत्।
द्वारेऽवटे सुसञ्छाद्य पूजनं च समाचरेत्।।

समाप्तेऽहनि तत्रैव भूमियज्ञं सुहूयताम्।
औपासनाग्निमाधाय आघारान्ते विशेषतः।।

जुहुयात्पौरुषं सूक्तं विष्णुसूक्तमतः परम्।
वैष्णवं द्वारदैवत्यं व्याहृत्यन्तं प्रति प्रति।।

द्वाराधिपमथावाह्य देवेशं स्नपनं चरेत्।

### ९.१०.२४ गर्भशक्तिनाशे कर्तव्यम्

### खि.५.८५ - ८९

ग्रामे वा नगरे वापि पत्तने खर्वटेऽपि वा।।

देवालये सभास्थाने मण्डपेऽन्यत्र वार्चने।
शून्ये तु द्वादशाब्दान्ते गर्भशक्तिर्विनश्यति।।

सदोषन्तु विमानञ्चेत् पुनस्संस्कारमर्हति।
कर्षणादिक्रमं सर्वं पूर्वोक्तेन विधानतः।।

कृत्वा तु स्थापयेद्गर्भं बिम्बं कृत्वा सलक्षणम्।
पूर्वोक्तेन विधानेन स्थापयेद्देवमव्ययम्।।

स्नपनं विधिवत्कृत्वा अन्नाद्यञ्च स्वशक्तितः।
दत्वा तु वेदविद्भ्यश्च दक्षिणां शक्तितो ददेत्।।

### ९.१०.२५ गर्भशक्तिनाशे (ग्रामे) पुनर्गर्भन्यासप्रयोगः

### खि.५.९० - १००

ग्रामं शून्यं यदि भवेत्तद्ग्रामे सर्वमाचरेत्।
तृणगुल्मादि संशोध्य अस्थिपाषाणसञ्चयम्।।

कर्षणं पूर्ववत्कृत्वा पदं पूर्ववदाचरेत्।
वास्तुहोमञ्च कृत्वा तु ग्रहशान्तिञ्च कारयेत्।।

ग्राममध्ये प्रपां कृत्वा पञ्चाग्नीन् साधयेत् क्रमात्।
प्राच्यामाहवनीयन्तु अन्वाहार्यन्तु दक्षिणे।।

गार्हपत्यं प्रतीच्यान्तु आवसथ्यं तथोन्तरे।

मध्ये सभ्यश्च कृत्वा तु सितैः क्लिन्नैस्च वालुकैः।।

सूत्रोक्तेन विधाने कुण्डेष्वाघारमाचरेत्।
जुहुयात् पौरुषं सूक्तं प्राच्यामाहवनीयके।।

अन्वाहार्ये सुहोतव्यं विष्णुसूक्तं विशेषतः।
गार्हपत्ये सुहोतव्यं ब्राह्मं वारुणसंयुतम्।।

सहसूक्तञ्च जुहुयादावसथ्ये विशेषतः।
अष्टविंशतिकं हुत्वा व्याहृत्यन्तं पृथक् पृथक्।।

सभ्ये तु सर्वदेवत्यं जुहुयान्मन्त्रविद्वरः।
पुण्याहं वाचयित्वा तु प्रोक्षणैः प्रोक्षणं चरेत्।।

अन्नाद्यञ्चैव दद्यात्तु ब्राह्मणेभ्यः स्वशक्तितः।
पूर्वोक्तेन विधानेन स्थापयेद्गर्भमुत्तमम्।।

अन्तहोमञ्च हुत्वा तु गुरवे दक्षिणां ददेत्।
एवमेव विधानेन नगरादिषु कारयेत्।।

अन्यथा तु महान् दोषो भविष्यति न संशयः।
तस्मात्सर्वप्रयत्नेन गर्भयुक्तं समाचरेत्।।

## ९.१०.२६ विमानध्रुवयोर्युगपन्नाशे कौतुकाद्यर्चनम्

**प्र.२८.१२८ - १३०**

विमानध्रुवयोर्नाशे युगपत्तत्र निष्कृतिः।
कौतुकादीन् प्रतिष्ठाप्य विहाय प्रार्थनामनुम्।।

बालालयं प्रकल्प्यैव विधिना तत्र चार्चयेत्।

तस्य कालेऽप्यतीते तु तदा तत्र न दोषकृत्।।

यस्याङ्गस्य भवेद्धानिः तत्र बालालयं भवेत्।
कृत्वा तस्य तु संस्कारं यथोक्तं तत्पुनश्चरेत्।।

### ९.१०.२७ कौतुकध्रुवविमानानां दोषसम्भवे दारवबिम्बार्चनम्
**प्र.२८.१३१ - १३५**

कौतुकादिविनाशे च दोषयुक्ते ध्रुवे तथा।
विमाने च तथा दृष्टे कृत्वा बालालयं पुनः।।

यथालाभेन मानेन बिम्बमाहृत्य दारवम्।
प्रतिष्ठाप्याद्यतरुणालयोक्तविधिना ततः।।

कौतुकादींश्च सङ्कल्प्य प्रतिष्ठाप्यार्चयेत्क्रमात्।
अलाभे कौतुकादीनां दोषयुक्ते तु दारवे।।

बिम्बमन्यं समाहृत्य प्रतिष्ठाप्यैव दारवम्।
तद्बेरं विधिवत्त्यक्त्वा कृत्वा मूलालये पुनः।।

विधिना मूलबेरं तु प्रतिष्ठाप्य समर्चयेत्।

### ९.१०.२८ द्वितीयबालालयनिर्माणे निमित्तम्
**स.७४.१ - ४**

अतः परम् प्रवक्ष्यामि द्वितीयतरुणालयम्।
ध्रुवबेरे च जीर्णे च भिन्ने च्छिन्ने तथैव च।।

वर्णक्षये च पतिते स्फुटितादिसमुद्भवे।
विमाने पतिते भिन्ने च्छिन्ने जीर्णे तथैव च।।

इष्टकानां तु प्रक्षेपे सुधावर्णानुलेपने।
शिलाप्रक्षेपणे वापि नवकर्मणि सर्वदा।।

नवीकरणमुद्दिश्य बालागारं प्रकल्पयेत्।

**९.१०.२९ बृहद्बेरप्रतिष्ठादोषे तलणालयः**

**स.७५.२८ - ३०**

बृहद्बेरप्रतिष्ठा चेद्दोषयुक्ता हरिं प्रति।
तरुणालयं च कृत्वैव तत्र संस्थाप्य चार्चयेत्।।

निर्दोषं तत्र तद्बिम्बं वस्त्रेण परिवेष्टयेत्।
ईकारादींश्च जुहुयादष्टाशीत्याहुतिं तदा।।

सहस्राहुतिपर्यन्तं यजेत्तद्दोषशान्तये।

**९.१०.३० परिवारप्रतिष्ठादोषे तरुणालयः**

**स.७५.३०, ३१**

परिवारे तु दोषे तु तत्तत्पार्श्वे तथैव च।।

बालागारं च कृत्वैव तत्तन्मन्त्रं सवैष्णवम्।
हुत्वा च तत्र संस्थाप्य नवकर्म च कारयेत्।।

**९.१०.३१ विमानतलदोषे तरुणालयः**

**स.७५.३३ - ४२**

द्वितले त्रितले वापि चतुष्पञ्चतलेऽथवा।
द्वादशान्ततले तत्र दोषयुक्तं तलं च यत्।।

तत्तत्स्थ(त्त ?)लं समुद्दिश्य बालागारं प्रकल्पयेत्।
द्वितीयावरणे वाथ प्रथमावरणेऽथवा।।

उक्तदेशे यथान्यायं कल्पयेत्तरुणालयम्।
द्वारमभ्यन्तरं तद्वन्मण्टपेन समन्वितम्।।

बालागारं च कृत्वैव तत्र संस्थाप्य चार्चयेत्।
विमाने वाथ बेरे वा तले वा दोषसंयुते।।

तत्तद्दोषं व्यपोह्यैव नवकर्म च कारयेत्।
स्थापयेत पुनस्तत्र शान्तिहोमसमायुतम्।।

निर्दोषे च तले तत्र प्रोक्षयेत्पञ्चगव्यकैः।
बाह्यद्वारे तदूर्ध्वे च सोपानक्रमसंयुते।।

अधस्तले तु निर्दोषे दोषश्चोर्ध्वतले भवेत्।
सदोषतलमुद्दिश्य बालागारं प्रकल्पयेत्।।

निर्दोषतलमुद्दिश्य बालागारं न चाचरेत्।
अर्चयेत तले तत्र देवं पूर्ववदेव वै।।

ऊर्ध्वं तलं समुद्दिस्य पश्चिमे तु प्रकल्पयेत्।
अधस्तलस्य तत्पूर्वं स्थानं सम्यक्प्रकल्पयेत्।

तत्तत्स्थानं समुद्दिश्य बालागारं विचक्षणः।
एवमेव प्रकारेण पूर्वे पूर्वे प्रकल्पयेत्।।

**प्र.२९.४२ - ४४**

नवषट्पञ्चमूर्तीनां विमाने दोषसंयुतम्।
यत्तलं तत्तलं गृह्य बालस्थानं प्रकल्प्य च।।

कौतुकादीन् सुसंस्थाप्य विधिना सम्यगर्चयेत्।
पश्चात्तले तु निर्दुष्टे कौतुकादीन्प्रगृह्य च।।

स्थापयित्वा पुनश्चैव विधिनापि समर्चयेत्।

### ९.१०.३२ बालालयदिग्व्यवस्था

**स.७४. ४ - ७**

आग्नेय्यां धनलाभः स्याद्याम्ये वृद्धिकरो भवेत्।।

नैर्ऋत्यां कर्मसिद्धिः स्याद्वारुण्यां धनवृद्धिदम्।
वायव्यां दिशि कुर्याच्चेत् कर्तुर्दुःखं महद्भवेत्।।

सौम्ये कर्मविनाशः स्यादीशान्यां विघ्नमिष्यते।
ऐन्द्रे महद्भयं प्रोक्तं तद्देशे मरणं ध्रुवम्।।

इष्टदेशं समालोक्य कारयेत्तरुणालयम्।

### ९.१०.३३ बालालयप्रमाणादि

**स.७४.७, ८**

यथा मूलालयद्वारं तथैव तरुणालयम्।।

विमानस्य समं वापि तच्चतुर्थैकहीनकम्।
ऊर्ध्वं कपोततुल्यं वा पादाग्रसममेव वा।।

### ९.१०.३४ बालागारकल्पने स्थानविशेषः

**स.७४.९**

श्रीहरेश्शयनागारे शून्यागारे च वर्जयेत्।
तस्य चावरणेऽतीते बालागारं न कल्पयेत्।।

## ९.१०.३५ (द्वितीय) बालालयारम्भकालः

**स.७४. १०**

जीर्णादिदोषसंयुक्ते बेरे तत्रार्चनं तु यत्।
तद्विनाशो भवेत्तस्मात् कालापेक्षा न विद्यते।।

## ९.१०.३६ द्वितीयतरुणालयकल्पनविलम्बे प्रायश्चित्तम्

**ज्ञा.१०७.१९८**

द्वादशाहेऽतीते महाशान्तिं हुत्वा वैष्णवान् सम्पूज्य शक्तितो दक्षिणां दत्त्वा आरभेत। मासेऽतीते महाशान्तिं च हुत्वा विप्रशतं भोजयित्वा देवमनुज्ञाप्य कुर्यात्। षण्मासेऽतीते भगवान् न रमेत। तस्मात् तरुणालये पूर्ववत् संस्थाप्यार्चयेत्। संवत्सरेऽतीते प्रेतावासो भवति। तस्मात्तरुणालये देवं संस्थाप्य जीर्णबेरं विसर्जयेत्।

**प्र.२८.१८८ - १९०**

अज्ञानादर्थलोभाद्वा कालस्यातिक्रमे सति।
देवं विशेषतोऽभ्यर्च्य शान्तिं वैष्णवसंयुतम्।।

हुत्वा सम्पूज्य पूज्यांश्च यजमानो गुरुस्तथा।
सम्प्रार्थ्य देवं कालस्य चावधिं ज्ञापयेत्पुनः।।

भक्तिनम्रस्ततः कुर्याच्छीघ्रं कर्मेदमादरात्।

## ९.१०.३७ बालागारस्य अयथावत्करणे प्रायश्चित्तम्

**ज्ञा.१०७. १९९**

बालागारे अयथावत्कृते भूमियज्ञं पुनः पुण्याहं शान्तिं च हुत्वा यथास्थानं निवेश्यारभेत।

### ९.१०.३८ जीर्णोद्धारे बालालयाकरणे प्रायश्चित्तम्

**क्रि.२३.६८ - ७१**

बालालयमकृत्वा तु नवकर्माचरेद्यदि।।

आभिचारिकमित्युक्तं तस्य दोषस्य शान्तये।
नवाहं वाथ सप्ताहं पञ्चाहं त्रियहं तु वा।।

हुत्वाऽब्जाग्नौ महाशान्तिं स्थापयित्वा समर्चयेत्।
आदित्यमण्डलात्कुम्भे समावाह्य समर्चयेत्।।

अन्येषामपि देवानाम् एष एव विधिः स्मृतः।

**ज्ञा.१०७.१९९**

तरुणालयमकृत्वा नवकर्मणि कृते महत्तरो दोषो भवति। कर्तारो रौरवं यान्ति। अतः सहस्रभोजनं कृत्वा सहस्राहुतीः हुत्वा महाशान्तिं हुत्वा पुनर्बालागारे संस्थाप्यारभेत।

### ९.१०.३९ द्वितीयबालालयार्थं ध्रुवात् शक्त्याकर्षणम्

**स.७४.११ - ३६**

आचार्यः स्थापकांश्चैव होमार्थं ऋत्विजोऽपि वा।
पूर्वोक्तगुणसम्पन्नान् वरयेत विधानतः।।

यागशालां तथा कृत्वा शय्यावेदिं च पञ्च च।
कारयेदग्निकुण्डानि सर्वं पूर्ववदाचरेत्।।

श्वः कर्ताऽस्मीति संचिन्त्य यजमानोऽथ भक्तितः।
वस्त्रयुग्माङ्गुलीयैश्च हेमसूत्रादिभूषणैः।।

आचार्यं पूजयेत्तत्र स्थापकांश्च स्वशक्तितः।

सायं सन्ध्यामुपास्यैव रात्रावेव विशेषतः।।

बालागारस्योत्तरतः कुण्डे चौपासनीयके।
आघारं विधिवत्कृत्वा वास्तुहोमश्च हूयताम्।।

पर्यग्निं कारयेत्तत्र बालागारं विशेषतः।
पञ्चगव्यैः समभ्युक्ष्य पुण्याहं वाचयेत् क्रमात्।।

पूर्वयागे गते पश्चाद्देवेशं सम्यगर्चयेत्।
हवींषि च निवेद्यैव भक्त्या देवं प्रणम्य च।।

पञ्चाग्नीनामधाघार पूर्ववज्जुहुयात् क्रमात्।
पूर्ववत्कुम्भमादाय तन्तुना च यवान्तरम्।।

त्रिगुणेनैव सूत्रेण चैकसूत्रेण वा पुनः।
'इन्द्रं नरो न' इत्युक्त्वा तन्तुना वेष्टनं चरेत्।।

शुची वो हव्येति मन्त्रेण कुम्भप्रक्षालनं चरेत्।
'नमस्सुलोमि' मन्त्रेण पूरयेद् गन्धवारिभिः।।

नवरत्नं क्षिपेत्तत्र सौवर्णगरुडादिकान्।
आयुधान् मङ्गलांश्चैव वर्णचिह्नानि सर्वशः।।

प्रक्षिप्य च कुशकूर्चं वस्त्रयुग्मेन वेष्टयेत्।
देवदेवस्य पुरतस्तथा कुम्भं सुसाधितम्।।

संन्यसेत्प्रणवेनैव देवपार्श्वे यमान्तरे।
कुशैः पुण्यैस्सुसम्बद्धं कुर्याद्वृद्धिं च वाचयेत्।।

प्रार्थयेदेवमुक्त्वैव भक्त्या देवेशमव्ययम्।
अनर्हमेतद् गेहं ते जीर्णं तूर्णं व्यपोह्य च।।

यावद्वयं नवं कृत्वा प्रतिष्ठां कारयामहे।
वस त्वं कौतुके बिम्बे देवदेव प्रसीद मे।।

एवं ध्यात्वा नमस्कृत्य प्रार्थयेद्भक्तिसंयुतः।
एकं संवत्सरं वाथ द्वौ वा त्रीन्वा यथाक्रमम्।।

इष्टं सम्वत्सरं यावत्तावद्विज्ञापयेद्बुधः।
ध्यायन्मन्त्रं समुच्चार्य ध्रुवबेरात्ततस्तथा।।

शक्तिमादाय कूर्चेन कुम्भे तस्मिन्निवेशयेत्।
ततो देवं प्रणम्यैव नादेयेन जलेन वै।।

मन्त्रेण ध्रुवबेरस्य पादप्रक्षालनं चरेत्।
देव्यावपि मुनी चान्यान् गर्भालयगतानपि।।

आवाहयेद्विधानेन तत्तद्देवमनुस्मरन्।
कुम्भं बिम्बं समादाय स्नानश्वभ्रे निवेशयेत्।।

कलशैश्च प्रतिष्ठोक्तैः पूर्ववत्स्नापयेद्बुधः।
प्लोतवस्त्रेण संमृज्य वस्त्रमाभरणं ददेत्।।

तत उत्थाप्य देवेशं कुम्भेन सह संयुतम्।
शयनानि पञ्च चास्तीर्य तत्र देवं निवेशयेत्।।

पुण्याहं वाचयित्वैव बद्धप्रतिसरं तथा।
पूर्वोक्तेन क्रमेणैव शयने शाययेत्प्रभुम्।।

दक्षिणाग्नौ विशेषेण हौत्रमत्र प्रशंसयेत्।
मूर्तिमन्त्रैर्विधानेन देवानावाहयेत्तथा।।

आवाहनक्रमेणैव निरूप्याज्याहुतीर्यजेत्।

सर्वेष्वपि च होमेषु पूर्वोक्तेन क्रमेण वै।।

तत्तन्मन्त्रैस्तथा सर्वैर्जुहुयुस्तैरसङ्करम्।

## ९.१०.४० (द्वितीय) बालालये बिम्ब स्थापनम्
### स.७४.३६ - ४६

आचार्यस्तु प्रभाते तु स्नात्वा स्नानविधानतः।।

ततस्सुप्तं हरिं किञ्चिदोङ्कारेण प्रबोधयेत्।
ओङ्कारजयशब्दैश्च नृत्तगेयैस्समायुतम्।।

स्तोत्रध्वनिसमायुक्तं वाद्यघोषसमायुतम्।
शकुनसूक्तं जपन्नेव देवमुत्थाप्य वै ततः।।

स्थिरराशिं विहायैव चरराशिं प्रगृह्य च।
चरोदये च नक्षत्रे चरराशौ विशेषतः।।

तत्कुम्भं बिम्बमादाय बालागारं प्रवेशयेत्।
रत्नन्यासं विना तत्र स्थापयेदिति शासनम्।।

प्रतद्विष्णुस्तवतेति मन्त्रेण स्थापनं स्मृतम्।
शक्तिमादाय कुम्भस्थामिदं विष्णुरिति ब्रुवन्।।

आयातु भघवांचेति बिम्बे शक्तिं निवेशयेत्।
तथा देव्यौ मुनीशौ वा ब्रह्माणं शङ्करं तथा।।

गर्भालयस्थितान्सर्वान् द्वारपालानपि क्रमात्।
तदालये समावाह्य विमानस्याधिदेवताः।।

बाह्यस्थ परिवारांश्च तत्तत्स्थाने समाह्वयेत्।

पुण्याहान्ते तमभ्यर्च्य हविस्सम्यङ् निवेदयेत्।।

आवाहनविसर्गौ द्वौ नाचरेत्तरुणालये।
उत्सवस्नपनादीनि पूर्ववत्सर्वमाचरेत्।।

नवकर्म समाप्तौ तु पूर्ववत्स्थापयेद्बुधः।

## ९.१०.४१ बालालयनाशे नवीकरणम्

**प्र.२८.१९३ - १९७**

प्रथमेऽथ द्वितीये वा नष्टे बालालयेऽर्चिते।।

दुष्टे वा येन केनापि मण्डपादौ मनोरमम्।
देशं तु समलङ्कृत्य संशोध्य विधिवत्पुनः।।

संस्थाप्य कौतुकादींश्च समभ्यर्चेद्विधानतः।
बालालयं नवीकृत्य तदेव त्वरितं यथा।।

वास्तुशुद्धिं च पुण्याहं कृत्वा संस्थाप्य चार्चयेत्।
अयुक्ते तु ततस्तस्मिन्निधायान्यत्र मन्दिरम्।।

पुनः प्रतिष्ठामार्गेण प्रतिष्ठाप्य समर्चयेत्।

## ९.१०.४२ प्रासादादिदोषे नवीकरणम्

**स.७५.३२**

प्रासादे मण्डपे कूपे शालायां वा तथैव च।
तत्तद्दोषं च संशोध्य वास्तुहोमस्सुहूयताम्।।

## ९.१०.४३ आलयबाह्यावयवनवीकरणम्

**स.७६.१ - ६**

दोषयुक्तस्य बिम्बस्य संस्कारं कारयेद्बुधः।
एवमभ्यन्तरे प्रोक्तो नवबिम्बक्रियाक्रमः।।

आलयस्य बहिः पार्श्वे तस्यापि मुखमण्टपे।
शिलायामिष्टकायां वा सुधायां च तथैव च।।

जीर्णायां शोधयित्वा तां प्रक्षिप्य च दृढं पुनः।
तत्तत्प्रक्षेपणं कृत्वा सुधावर्णानुलेपनम्।।

कारयेन्नवकर्मैवं प्रायश्चित्तं यजेत्पुनः।
पञ्चगव्यैः समभ्युक्ष्य वास्तुहोमस्सुहूयताम्।।

पौण्डरीकाग्निमादाय परिषिच्य च पावकम्।
वैष्णवं विष्णुसूक्तं च पुरुषसूक्तं यजेत्क्रमात्।।

व्याहृतीरङ्गहोमं च पारमात्मिकसंयुतम्।

## ९.१०.४४ अन्यत्र स्थापितयोः ध्रुवकौतुकयोः स्थापने प्रायश्चित्तम्

**स.७५.२५ - २७**

अन्यत्र स्थापितं पूर्वं ध्रुवं वा कौतुकं तु वा।।

आहृत्य च तदज्ञानात् स्थापितं चेत्प्रमादतः।
क्षिप्रं विवर्ज्य तद्बिम्बं महाशान्तिं च कारयेत्।।

अन्यद्बिम्बं समादाय स्थापयित्वा तदर्चयेत्।
तद्बिम्बमपि तत्स्थाने पूर्ववत्स्थापयेद्बुधः।।

### ९.१०.४५ अधस्तल बिम्बस्योर्ध्वतले प्रतिष्ठायां प्रायश्चित्तम्

**स.७५.४३ - ४५**

अधस्तलस्थतद्बिम्बमूर्ध्वे तत्रैव चार्चयेत्।
लोभादज्ञानतो वापि चार्चयेच्चेद्विनश्यति।।

तथा कृते पुनः क्षिप्रं बालागारे प्रकल्प्य च।
शान्तिहोमं च हुत्वैव स्थापयित्वा तथा च यत्।।

पञ्चमूर्तिविधाने तु बालागारं यथाविधि।
तत्तन्मूर्तिं समुद्दिश्य तत्तद्दिशि च कारयेत्।।

### ९.१०.४६ जीर्णबेरविसदृश नूतनबेरकरणे प्रायश्चित्तम्

**स.६८.१० - १२**

पौराणिके विमाने तु यथापूर्वं तथैव च।
अन्यरूपं न कर्तव्यं कृत्वा तु स विनश्यति।।

अन्यथा तु प्रतिष्ठा चेदब्जाग्नौ होममाचरेत्।
विष्णुसूक्तं च जुहुयात्पौरुषं सूक्तमेव च।।

एवं हुत्वा विधानेन दक्षिणां च ददेत्पुनः।
यथा पूर्वं तथा सम्यक् प्रतिष्ठामाचरेद्बुधः।।

### ९.१०.४७ मृन्मयध्रुवबेरदोषे कुम्भार्चनम्

**प्र.२९.३३ - ४१**

वर्णक्षये ध्रुवे दोषसम्भवे स्फुटितादिभिः।
अल्पदोषेपि वा शक्तिं ध्रुवबेरस्थितां तदा।।

कुम्भेऽम्भसि समावाह्य तत्कुम्भं कौतुकादि च।
समादाय विधानेन मालिकायां तु मण्डपे।।

सन्न्यस्य कौतुकादौ तु समावाह्य समर्चयेत्।
काले कुम्भे समारोप्य क्रियास्सर्वास्समाचरेत्।।

अतीते द्विदिने कुम्भमन्यमादाय चात्वरः।
कुम्भाच्छक्तिं समादाय कुम्भेन्यस्मिन् विधानतः।।

अर्चयेत्तिद्दिने चैवं कुम्भसंशोधनं चरेत्।
पश्चाच्च वर्णलेपादीन् कृत्वा संशोध्य चैव हि।।

वास्तुहोमं च पुण्याहं ध्रुवशुद्धिं च कारयेत्।
कुम्भं बिम्बं समादाय प्रविश्याभ्यन्तरं ततः।।

कौतुकादीन् सुसंस्थाप्य न्यासादींश्च विधाय च।
कुम्भस्थां शक्तिमादाय ध्रुवबेरेऽवरोपयेत्।।

ध्रुवात्पुनः कौतुकादिष्वावाह्य तु समर्चयेत्।
दोषाणां गौरवान्मासादूर्ध्वं काले त्वपेक्षिते।।

देवं बालालये स्थाप्य शोधयेन्मृण्मयं पुनः।
यावच्छूलं पुनश्शैलं शिलान्तं शोधयेत्क्रमात्।।

### ९.१०.४८ ध्रुवबेरे अङ्गादिभङ्गे पुनः सन्धानम्
### वि.७३.४५३

तस्मादुपाङ्गे हीने पूर्ववत् कुम्भं संसाध्य, तच्छक्तिं कुम्भे समावाह्य, तद्बिम्बस्य पुनः सन्धानं कृत्वा, जलाधिवासादीनि कृत्वा, वास्तुहोमं

हुत्वा, पञ्चगव्यैः कुशोदकैश्च संस्नाप्य, सप्तभिः कलशैः संस्नाप्य, कुम्भस्थां शक्तिं तद्बिम्बे समावाह्यार्चयेत्।

**प्र.२९.५५ - ५८**

**स.७६.२९ - ३२**

उपाङ्गहीने बिम्बस्य ताम्रजस्य तु भक्तितः।।

ध्रुवबेरे तथा शक्तिं समारोप्य पुनस्तथा।
तुल्यलोहेन सन्धानं कृत्वा शान्तिं सुहूयताम्।।

तथा पुरुषसूक्तेन विष्णुसूक्तेन वैष्णवैः।
ईंकारादींश्च जुहुयादष्टाशीतिसमायुतम्।।

रात्रिसूक्तेन हुत्वैव जयाद्यैर्जुहुयात्पुनः।
बिम्बं च पूर्ववत्कृत्वा प्रतिष्ठां कारयेत्पुनः।।

**क्रि.२३.८४ - ८७**

**वि.७३.४५३**

प्रत्यङ्गे हीने तच्छक्तिं महाबेरे समारोप्य, बिम्बमुद्धृत्य, पञ्चगव्यैः प्रोक्ष्य, तुल्यलोहेन सन्धानं कृत्वा, जलाधिवासादीनि कृत्वा, पुनः प्रतिष्ठां कारयेत्।

**प्र.२९.५८ - ६०**

[अत्र कुशोदकैश्च प्रोक्षणं विधीयते। ]

**स.७६.३३**

प्रत्यङ्गे च तथा हीने सन्धानं कारयेत्क्रमात्।

**वा.५१**

सर्वोपाङ्गविहीने तु तस्य तस्य समीकृते।
उक्तवत्प्रोक्षणं कृत्वा विधिना सम्यगर्चयेत्।।

तिलतिल्वद्वयं चैव माषमाषद्वयं पृथक्।
प्रत्यङ्गे च तथा हीने तत्तत्स्थाने समीकृते।।

प्रोक्षयित्वा विधानेन विधिना सम्यगर्चयेत्।
उपाङ्गप्रत्यङ्गहीने च बालस्थानं विना चरेत्।।

पादाभ्यां तु कराभ्यां तु अङ्गुल्यश्च त्रयोदश।
यवाष्टकः स चाष्टौ हीने तत्र विशेषतः।।

रुक्मं तु रजतं वापि तदन्यं तत्र योजयेत्।
बालस्थानं विना कुर्यात् प्रोक्षयित्वा समर्चयेत्।।

**प्र.२९.१, ११ - १५**

अथ वक्ष्ये विशेषेण ध्रुवबेरस्य निष्कृतिम्।
------------------------------।।

अर्धचित्रस्य शैलस्य हीनेष्वङ्गेषु चैव हि।
प्रत्यङ्गेषु तथोपाङ्गेष्वनिष्टं तद्भवेदिह।।

बालागारेऽथ तच्छक्तिं नीत्वा बिम्बं समाहरेत्।
भूमौ पिधाय तस्योर्ध्वे पद्माग्निं परिकल्प्य च।।

हुत्वा च महतीं शान्तिं शिलाग्रहणवत्तथा।
तत्तदङ्गसमुत्पत्तिं युक्त्या तक्ष्णा तु कारयेत्।।

हीने महाङ्गे तद्बेरमयुक्तं चेत्समीकृतौ।
त्यक्त्वा तद्विधिना बेरं पुनरन्यत्समाहरेत्।।

बेरं सन्धानयोग्यं यस्त्यजेत्पापी भवेत्स हि।
विनष्टं च भवेत्सर्वं सन्धानं शक्तितश्चरेत्।।

## ९.१०.४९ ध्रुवबेरे अङ्गादिभङ्गे बेरान्तरकरणम्

**वा.५१**

शिरश्चक्रारविन्दं च शङ्खचक्रगदा स्तथा।
एतदङ्गे विहीने तु बालस्थानं प्रकल्पयेत्।।

लब्धबेरं प्रतिष्ठाप्य विधिना तत्र पूजयेत्।
पश्चाद्दोषं समीक्ष्यैव शिल्पिना सार्धमाचरेत्।।

सुवर्णं रजतं ताम्रं मृच्छिला दारुणा पृथक्।
मुख्यगौणे समीक्ष्यैव गौणे मुख्यं समाचरेत्।।

मुख्ये गौणं न कुर्वीत इति शास्त्रस्य निश्चयः।
पूर्वरूपं विनिश्चित्य मुख्यद्रव्येण कारयेत्।।

अर्धतालं द्वितालं वा तालमुन्मानमुच्यते।
स्थापयित्वा यथान्यायं पूजयित्वा विधानतः।।

**वि.७३.४५३, ४५४**

अङ्गहीने तद्बेरं सन्धानयोग्यं चेत्तथैव कुर्यात्। अयुक्तं चेत्, महाङ्गे हीने च बेरं भूमौ पिधाय, तस्योपरि अङ्गहोमं हुत्वा, महाशान्तिं च हुत्वा, तद्दिने अतीते बिम्बमुद्धृत्य, पञ्चगव्यैः प्रक्षाल्य, अग्नौ क्षिप्त्वा, त्रिशुद्धिं कृत्वा, राजतं चेत् द्विर्दग्ध्वा, रौक्मं चेत्सकृद्दग्ध्वा, तद्द्रव्येण पूर्ववत् बिम्बं कृत्वा, पुनः प्रतिष्ठां कारयेत्।

**प्र.२९.६० - ६४**

**स.७६.२८, २९**

पूर्वोक्ताङ्गविहीने तु बिम्बं तत्कौतुकं तथा।।

शान्तिहोमं ततो हुत्वा पूर्ववत्त्यागमाचरेत्।

**स.७६.६५ - ६७**

महाङ्गादिषु हीनेषु तद्बिम्बं लोहवत्स्मरन्।।

सौवर्णं तु सकृत्तप्त्वा द्विस्तप्त्वा राजतं तथा।
तल्लोहमन्यलोहं च तप्त्वा संस्राव्य शास्त्रतः।।

मधूच्छिष्टक्रियादीनि कुर्यात्पूर्वोक्तमार्गतः।
बिम्बं कृत्वा विधानेन प्रतिष्ठाप्य समर्चयेत्।।

**य.३०. २९ - ३४**

संभवेद्यादि जीर्णादिदोषे बिम्बे तु कौतुके।
विनैव देव्यौ तं त्यक्त्वा शक्ति मुद्रास्य पूर्ववत्।।

गुरुलाघव मालोक्य दोषाणां शास्त्रवित्तमः।
यदिदोषो गुरुर्धीमान् सन्त्यजेत्प्रतिमां तथा।।

सन्धानयोग्यप्रतिमां न त्यजेन्मतिमांस्तथा।
त्यजेच्चेत्प्रतिमां मोहात्पापीयान् भवति ध्रुवम्।।

कृत्वा बेरं ततः पश्चात् ध्रुवादिषु तथैव च।
यद्द्रव्येण कृतं पूर्वं तद्द्रव्येण च कारयेत्।।

अक्ष्युन्मेषण मारभ्य देवीभ्यां सह मन्त्रवित्।
न विवाहक्रमश्चात्र स्थापयेत्पूर्ववत्सुधीः।।

बहुबेरेषु सर्वेषु तत्त्यजेद्दोषजन्तु यत्।
कृत्वा बेरं पुनस्तस्माच्छिष्टैस्सार्थं तु पूजयेत्।।

**९.१०.५० स्थापितबिम्बे वैरूप्य दर्शने पुनः प्रतिष्ठा**

**स.७७.१३, १४**

अथवा चेद्विरूपं तु स्थापितं चेत्त्वरान्वितः।
तद्वेरोद्धाटनं यत्र यदि तत्र परीक्षयेत्।।

रेखासुषिरसंयुक्ते भग्ने चाङ्गादिहीनके।
गुरुलाघवमालक्ष्य बेरं त्यक्त्वा विधानतः।।

**९.१०.५१ बिम्बे दोषापवादाः**

**स.७७.१५**

पौराणे चार्षके चैव दैविके तु स्वयंस्थले।
अवैधकमलक्षण्यमप्रमाणं न दोषकृत्।।

**९.१०.५२ दैविक बिम्बलक्षणम्**

**स.७७.१६**

दैविकं ब्रह्मरुद्राद्यैः कृतं तत्परिकीर्तितम्।।

**९.१०.५३ पौराणिकबिम्बलक्षणम्**

**स.७७.१६**

कर्तुः कालो न निर्दिष्टः पौराणिकमिति स्मृतम्।

**९.१०.५४ आर्षकबिम्बलक्षणम्**

**स.७७.१७**

ऋषिभिर्मार्दृशैर्लोके आर्षकं सुप्रतिष्ठितम्।।

### ९.१०.५५ स्वयंव्यक्तबिम्बलक्षणम्

**स.७७.१७**

स्वयमाविर्भवेद्यत्तत्स्वयं व्यक्तमुदीरितम्।।

### ९.१०.५६ कौतुकादिबेरपुनःप्रतिष्ठाक्रमः

**स.७७.२१ - २२**

कौतुकं बलिबेरं वाप्यौत्सवं स्नपनं तु वा।
रत्नन्यासं विनैवात्र प्रतिष्ठाप्यार्चयेदिति।।

अन्यत्सर्वं च कर्तव्यं यथा पूर्वं तथाचरेत्।
एवमत्र क्रमेणैव प्रतिष्ठां पुनराचरेत्।।

### ९.१०.५७ परिवारबिम्बपुनस्स्थापनक्रमः

**स.७७.१८ - २०**

देव्यादिपरिवाराणि प्रभापीठं तथैव च।
विधिना मार्गमालक्ष्य नवीकृत्य प्रयत्नतः।।

रत्ननासे तु सम्प्राप्ते रत्नं तत्र पुनः क्षिपेत्।
शिल्पिभिस्सुदृढं कृत्वा अष्टबन्धं प्रलेपयेत्।।

यागशालामलङ्कृत्य वास्तुहोम सुहूयताम्।
पूजयेत्पूर्ववत्कुम्भमधिवासादि पूर्ववत्।।

### ९.१०.५८ बिम्बस्य पीठचलनादौ पुनःसन्धानम्

**स.७६.३३ - ३५**

बिम्बस्य चलने पीठे तथा पीठे वियोजिते।।

रेखासुषिरसंयुक्ते सन्धानं कारयेद्दृढम्।
वस्त्रादिषु च चक्रे च च्छेदे भेदे तथैव च।।

सन्धानं च पुनः कृत्वा निश्चयित्वोक्तवत् क्रमात्।
पूर्वोक्तशान्तिं[1] हुत्वैव पुनः संस्थापयेत्क्रमात्।।

## ९.१०.५९ नूतने ध्रुवे विवाहाभावः

**वा.५१**

देव्यौ स्थिते ध्रुवे नष्टे अन्यद्बेरं समाहरेत्।।

कुर्याद् गौणे पुनर्मुख्यं मुख्ये गौणं न चार्प(चरे)येत्।
स्थापयित्वा विधानेन विवाहं नैव कारयेत्।।

अन्योन्यसङ्करो यत्र तत्र दोषो न विद्यते।
नष्टबेरस्य देवी स्यात् अन्यद्बेरं समाहरेत्।।

दोषं विनाशे द्रष्टव्यं नृसिंह इव तत्कृतम्।
स्तम्भोत्पन्ननृसिंहस्य नो उत्पन्ने श्रियाविति ।।

तस्माद्विवाहो नास्त्येवमेवं पूर्ववदेव तत्।
तस्मात्सर्वप्रयत्नेन अकृते कृतमाचरेत्।।

पुनः प्रतिष्ठा चावाह्य देवं नो देवीमाचरेत् ।

---

1. बिम्बे प्रत्यङ्गहानौ उक्तां शान्तिम्।

**९.१०.६० नूतनयोर्देव्योस्तु विवाहः**

**वा.५१**

देव्यौ नष्टे ध्रुवस्थिते पुनर्देव्यौ च कारयेत्।
उक्तवत् स्थापयेद्विद्वान् वैवाहविधिमाचरेत्।।

पूर्वं मह्याश्च कृत्वा तु स्थापयेत्पाणिसङ्ग्रहम्।
परं श्रियैव संस्थाप्या पाणिसङ्ग्रहणे कृते।।

तयोः साङ्कर्यमेवेति दोषो नैवात्र यत्पुरा।

**९.१०.६१ जीर्णोद्धरणफलश्रुतिः**

**खि.१७. ३५४ - ३५६**

जीर्णोद्धारक्रियाकर्तुः फलं स्याद्द्विगुणं पुनः।।

लोकशान्तिर्भवेच्चैव राजराष्ट्रविवर्धनम्।
आरोग्यदं प्रजानाञ्च सर्वसम्पत्करं भवेत्।।

वर्षदन्तु यथाकालं तस्माद्यष्टव्यमेव हि।
इत्येवं भगवान् प्राह ब्रह्मा लोकपितामहः।।

***

# ११. सम्प्रोक्षणविधिः

## ९.२१.१ त्रिविधं सम्प्रोक्षणम्

**प्र.३१.१, २**

अथ वक्ष्यामि तत्रो(न्त्रो?)क्तप्रायश्चित्तस्य सङ्ग्रहम्।
जलसम्प्रोक्षणं चैव लघुसम्प्रोक्षणं तथा।।

महासम्प्रोक्षणं चेति प्रायश्चित्तं त्रिधा स्मृतम्।

## ९.११.२ सम्प्रोक्षणे कालनियमाभावः

**प्र.३१.१ - ५**

अथ वक्ष्यामि तत्रो(न्त्रो?)क्तप्रायश्चित्तस्य सङ्ग्रहम्।
------------------------------------ ।।

------------------------------------।

निमित्ते समनुप्राप्ते ज्ञात्वा गौरवलाघवम्।।

वक्ष्यमाणप्रकारेण सद्यस्सम्प्रोक्षणं चरेत्।
सम्प्रोक्षणविधानस्य न कालनियमस्स्मृतः।।

न कुर्यान्मासनक्षत्रतिथिवाराद्यवेक्षणम्।
तस्मान्निमित्ते सम्प्राप्ते सद्यः सम्प्रोक्षणं चरेत्।।

देशकालाद्यवेक्षाया निमित्ते सति गौरवम्।

### ९.२१.३ जलसम्प्रोक्षणे निमित्तम्

**प्र.३१.५ - १३**

बहुबेरेषु चैकस्मिन् स्थावरे जङ्गमेऽथवा।।

अर्चनायां विहीनायां कालेऽतीते विपर्यये।
निर्माल्यपूजने चैव निवेदितनिवेदने।।

एकाहेऽप्यर्चनाहीने नित्यस्नापनवर्जिते।
बलिहोमादिहीने च नित्योत्सवविवर्जने।।

प्राकाराभ्यन्तरे प्राप्ते प्रमादादशुभे सति।
अस्पृश्यागमने तत्र चण्डालाद्यैः प्रवेशने।।

श्वकुक्कुटवराहोष्ट्रगर्दभानां प्रवेशने।
उदक्यया सूतिकया पाषण्डाद्यैरथापि वा।।

कुण्डगोलव्रतभ्रष्टतुरुष्कादिप्रवेशने।
अन्यसूत्रिद्विजैस्स्पृष्टे मोहादज्ञानतोऽपि वा।।

महावातहते बिम्बे संसिक्ते वर्षबिन्दुभिः।
विण्मूत्ररुधिरस्रावे बहुजल्पे च मैथुने।।

एवमादिनिमित्ते तु जलसम्प्रोक्षणं चरेत्।
नैवासम्प्रोक्षिते बिम्बे हरिर्वसति निश्चयः।।

तस्माद्बिम्बविशुद्ध्यर्थं सम्प्रोक्ष्यैव समर्चयेत्।

### ९.११.४ जलसम्प्रोक्षणप्रयोगः

**प्र.३१.४२ - ५३**

जलसम्प्रोक्षणविधिं प्रवक्ष्यामि तपोधनाः।।

यजमानाभ्यनुज्ञातो गुरुस्स्नात्वा विधानतः।
आलयाभिमुखे वापि दक्षिणे वा मनोरमे।।

स्थण्डिले सैकते शुद्धे पुण्याहाग्निमुखात्परम्।
वास्तुहोमावसाने च दोषदुष्टं तु यत् स्थलम्।।

पर्यग्निपञ्चगव्याभ्यां संस्कृत्य विधिना बुधः।
बिम्बं पुरुषसूक्तेन कलशैरभिषिच्य च।।

षड्द्रोणधान्यराशौ तु पञ्चकुम्भान्निधाय च।
वस्त्रयुग्मेन संवेष्ट्य प्रतिमास्तेषु निक्षिपेत्।।

नारिकेलाम्रपत्राद्यैरलङ्कृत्य पृथक् घटान्।
पञ्चसूक्तं जपित्वैव पञ्चशान्तिभिरेव च।।

पञ्चमूर्तिभिरावाह्य समभ्यर्च्याष्टविग्रहैः।
पश्चादग्निं परिस्तीर्य पञ्चसूक्तं हुनेत्सुधीः।।

ईंकारादींश्च जुहुयातदष्टाशीतिमतः परम्।
पञ्चवारुणमन्त्रैश्च महाव्याहृतिभिस्सह।।

पश्चादग्निं विसृज्यैव गुरवे दक्षिणां ददेत्।
निष्काहीनसुवर्णं च वस्त्राभरणकुण्डलान्।।

पश्चात्कुम्भजलेनैव प्रोक्षयित्वा समन्त्रकम्।
प्रभूतं च निवेद्यैव नित्यार्चनमथाचरेत्।।

अनेन विधिना दोषो नश्यत्येव न संशयः।
तद्बिम्बे देवसान्निध्यं भवेदित्याह चाङ्गिराः।।

एतावानेव सम्प्रोक्तो जलसम्प्रोक्षणक्रमः।

### ९.११.५ लघुसम्प्रोक्षणनिमित्तम्

**प्र.३१.१३ - २०**

दोषाधिक्ये समुत्पन्ने लघुसम्प्रोक्षणं चरेत्।।

राष्ट्रक्षोभे च दुर्भिक्षे तन्त्रसङ्करदूषणे।
शूद्रैर्वाथानुलोमैर्वा पाषण्डैर्भ्रमितैरपि।।

उदक्यया सूतिकया पतितैर्वाथ पातकैः।
चण्डालाद्यैः प्रविष्टे च गर्भागारे विशेषतः।।

सूतैर्वा कुण्डगौलाद्यैस्तथा देवलकादिभिः।
श्वकुक्कुटवराहाद्यैः प्रविष्टे गार्दभादिभिः।।

उलूकगृध्रकाकाद्यैः प्रविष्टेऽन्तर्गृहे तथा।
तुरुष्काद्यैः प्रविष्टे वा शुक्रशोणितयोरपि।।

विण्मूत्रादेर्विसर्गे वा गर्भागारेऽर्धमण्डपे।
त्र्यहादूर्ध्वं विहीने तु पूजने दीपवर्जने।।

एकरात्रमतिक्रम्य देवे ग्रामान्तरस्थिते।
अग्निदाहेऽशनिपाते गर्भागारेऽर्धमण्डपे।।

अन्यसूत्र्यर्चिते बिम्बे स्पृष्टे वा बुद्धिपूर्वकम्।
अन्यैरनुक्तैर्दोषैश्च लघुसम्प्रोक्षणं चरेत्।।

### ९.११.६ लघुसम्प्रोक्षणप्रयोगः

**प्र.३१.५३ - ७६**

लघुसम्प्रोक्षणं कुर्याद्यजमानेन वै गुरुः।।

यथार्हं पूजितः पूर्वमारम्भदिवसादधः।
त्र्यहे वा द्वियहे वापि कृत्वा चैवाङ्कुरार्पणम्।।

औपासनाग्नौ श्वोभूते वास्तुहोमं विधाय च।
पर्यग्निपञ्चगव्याभ्यां शोधयित्वा समन्ततः।।

अभिषिच्य च देवेशमष्टोत्तरशतैर्घटैः।
शोधयित्वा विधानेन वस्तुवास्तु परिच्छदान्।।

पश्चात्पद्माग्निमासाद्य कृत्वाघारं विधानतः।
कुम्भपूजां ततः कुर्यात् सम्यक् ध्यानयुतो गुरुः।।

द्वात्रिंशत्प्रस्थसम्पूर्णान् कुम्भानाहृत्य शोभनान्।
तन्तुना वेष्टयित्वा तु तोयैरापूर्य मन्त्रतः।।

षड्भारधान्यराशौ तु वेद्यां सप्तदश क्रमात्।
वस्त्रयुग्मेन संवेष्ट्य प्रतिमास्तेषु निक्षिपेत्।।

निष्कत्रयकृतां(ता)स्तत्र नवरत्नानि यत्नतः।
रत्नालाभे सुवर्णं वा प्रत्येकं निक्षिपेद्घटे।।

गन्धपुष्पैः समभ्यर्च्य नारिकेलाम्रपल्लवैः।
आयुधैः पञ्चभिस्तद्वत् तोरणैरष्टमङ्गलैः।।

अलङ्कृत्य गुरुर्धीमान् स्पृष्ट्वा कूर्चेन तान् घटान्।
पञ्चसूक्तं पञ्चशान्तिं ततो द्वादशसूक्तकम्।।

सारस्वतादिसूक्तं च दिक्सूक्तं पञ्चवारुणम्।
स्वस्तिसूक्तं जपित्वैव तथैवौषधिसूक्तकम्।।

नवमूर्तिभिरावाह्य देवीभ्यां सह पार्षदैः।
द्वात्रिंशद्विग्रहैः सम्यक् अभ्यर्च्य तु निवेदयेत्।।

पौण्डरीकाग्निमासाद्य परिषिच्य च पावकम्।
पञ्चसूक्तेन जुहुयात् व्यापकत्रयमन्त्रतः।।

अष्टोत्तरशतं तद्वत् अष्टाविंशतिरेव वा।
ईंकारादींश्च जुहुयात् अष्टाशीतिमतः परम्।।

धाता(त्रा)दिं मूलहोमं च पञ्चवारुणमेव च।
हुत्वा कूष्माण्डहोमं च पारमात्मिकमेव च।।

पङ्कजैर्बिल्वपत्रैश्च विष्णुगायत्रिया ततः।
अष्टोत्तरशतं हुत्वा पश्चादग्निं विसर्जयेत्।।

पश्चाद्गुरुः पूजितस्सन् वस्त्राभरणकुण्डलैः।
कुम्भमादाय शिरसा ग्राममालयमेव वा।।

प्रदक्षिणं परीत्याथ देवदेवस्य सन्निधौ।
कूर्चेनादाय तत्तोयं प्रोक्षयेत्पञ्चमूर्तिभिः।।

'शुची वो हव्य'मन्त्रेण प्रोक्षयेत्सर्वमन्दिरम्।
उपचारैस्समभ्यर्च्य क्षमस्वेति प्रणम्य च।।

महाहविः प्रभूतं वा देवेशाय निवेदयेत्।
ब्राह्मणानां सहस्रं च भोजयेद् गुरुणा सह।।

गुरवे दक्षिणां दद्यात्सुवर्णं पञ्चनिष्ककम्।
प्रदद्याद्भूमिमिष्टां च प्रोन्मिषत्सस्यमालिनीम्।।

दशदानं ततः कृत्वा नित्यार्चनमथाचरेत्।
एवं यः कुरुते भक्त्या लघुसम्प्रोक्षणं हरेः।।

विष्णुसान्निध्यमाप्नोति दोषशान्तिश्च जायते।
राजराष्ट्राभिवृद्धिश्च जगत्पुष्टिकरं भवेत्।।

लघुसम्प्रोक्षणविधिर्मया प्रख्यापितः किल।
काश्यपाद्यैश्च मुनिभिरेवमेव प्रचोदितः।।

### ९.११.७ महासम्प्रोक्षणनिमित्तम्

**प्र.३१.२१ - ४२**

महानिमित्ते सम्प्राप्ते महासम्प्रोक्षणं चरेत्।
द्वादशाहात्समारभ्य वत्सरान्तं विधानतः।।

हीनायामर्चनायां तु नित्ये नैमित्तिके तथा।
क्रियाहीने विपर्यासे हीने मासोत्सवादिके।।

नित्यस्नपनहीनेपि मात्रादानविहीनके।
बलिहोमादिहीने च सम्प्राप्ते शास्त्रसङ्करे।।

एवमादिषु हीनेषु वत्सरान्तं प्रमादतः।
पर्षदां परिवाराणामाश्रितालयसेविनाम्।।

ध्वजारोहणपूर्वं तु कृते कालोत्सवादिके।
विप्रादिमरणे प्राप्ते देवागारे विशेषतः।।

गर्दभाश्वलुलायोष्ट्रश्वसूकरमुखे मृते।
गजादिमृगनाशे च देवागारे प्रमादतः।।

चण्डालाद्यन्त्यजातीनां मरणे वा विशेषतः।
शूद्रैर्वाथानुलोमैर्वा पाषण्डैः पतितादिभिः।।

संस्पृष्टे वैष्णवे बिम्बे तुरुष्काद्यैर्मलिम्लुचैः
स्पृष्टे चण्डालकाद्यैर्वा महापातकदूषितैः।।

विमानेऽशनिपाते वा महोल्कापतनेऽपि वा।
लोहितोपलवर्षे च पांसुवर्षे विशेषतः।।

भूकम्पाच्चलिते बिम्बे वल्मीकस्य समुद्भवे।
शिथिलीभवने वापि चाष्टबन्धे विशेषतः।।

जीर्णे स्तम्भादिपतने देवागारे नवीकृते।
अग्निस्पर्शे च बेरस्य मनुष्यप्रसवे तथा।।

सुधाकर्मणि सर्वत्र गर्भगेहादिके पुनः।
बिम्बेषु गर्भगेहे वा क्रिमिकीटादिदर्शने।।

हसने रोदने चैव भाषणे च विशेषतः।
स्वेदशोणितयोर्वापि दर्शने वर्णसङ्क्षये।।

विमाने मण्डपे वाथ यत्र कुत्रापि वा हरेः।
देवागारे समुत्पन्ने दोषेष्वेतेषु वा पृथक्।।

दुर्भिक्षे राष्ट्रसङ्क्षोभे दुर्निमित्तेषु चैव हि।
दुस्स्वप्ने भूमिकम्पे वा परराजाद्युपद्रवे।।

भूगुप्ते चोद्धृते बिम्बे चिरमन्यालये स्थिते।
अतिक्रम्य तिरात्रं तु देवे ग्रामान्तरे स्थिते।।

कुण्डगोलकसूताद्यैर्दीक्षितैरर्चने कृते।
अनुक्तानि च सर्वाणि दुरितान्यद्भुतानि च।।

दृष्ट्वा तु यजमानश्च ये तत्परिसरे जनाः।
ग्रामस्थिता जनाश्चैव राजा राष्ट्रं च यत्नतः।।

ज्ञात्वा शास्त्रोक्तविधिना दोषजं भक्तितः फलम्।
महासम्प्रोक्षणं कुर्यान्महादोषापनुत्तये।।

महादोषेषु सर्वत्र महाशान्तिर्विधीयते।
पूर्वं स्थापितबिम्बस्य न साधारणहेतुना।।

स्यात्पुनस्स्थापनं तस्मात् महासम्प्रोक्षणं चरेत्।
महासम्प्रोक्षणविधेर्नूतनस्थापनस्य च।।

स्वल्पो भेद इति प्रोक्तमृषिभिः काश्यपादिभिः।

**९.११.८ महासम्प्रोक्षणप्रयोगः**

**प्र.३१.७७ - १२६**

महासम्प्रोक्षणविधौ विशेषो वक्ष्यते मया।
जलाधिवासरहितं नेत्रोन्मीलनवर्जनम्।।

प्रतिष्ठोक्तविधानेन सर्वं पूर्ववदाचरेत्।
नेत्रयोस्तेजने तद्वद्दृष्टिदोषे विशेषतः।।

जलाधिवासनं कुर्यादक्ष्णोरुन्मीलनं पुनः।
महाशान्तिविधानस्य विशेषोऽत्र प्रकीर्तितः।।

जङ्गमप्रतिमास्सर्वा अधिवासपुरस्सरम्।

प्रोक्षयित्वा विधानेन देवं पूर्ववदर्चयेत्।।

महानिमित्ते सम्प्राप्ते यजमानार्थितो गुरुः।
प्रतिष्ठोक्तदिने विद्वानृत्विग्भिर्लक्षणान्वितैः।।

वस्त्रैराभरणैश्चापि पूर्वोक्तमिव भूषितः।
प्रोक्षणादिवसात्पूर्वमङ्कुरार्पणमाचरेत्।।

द्रव्याण्यपि सुसम्भृत्य यागशालां प्रविश्य च।
कदलीपूगमालाद्यैः पताकाद्यैरलङ्कृताम्।।

तन्मध्ये कल्पयेद्वेदिं शयनार्थं विधानतः।
तस्यास्तु पूर्वदिग्भागे कुम्भवेदिं सलक्षणम्।।

परितश्चाग्निकुण्डांश्च पौण्डरीकं च कारयेत्।
देवालयं च संशोध्य मृष्टसिक्तोपलेपनैः।।

आचार्यस्सुप्रसन्नात्मा यजमानार्थितो मुहुः।
स्नात्वा स्नानविधानेन गायत्रीं च सहस्रशः।।

जप्त्वा द्वादशसूक्तानि पुण्याहमपि वाचयेत्।
वास्तुहोमं ततः कृत्वा कुण्डे त्वौपासने गुरुः।।

पर्यग्निपञ्चगव्याभ्यां संशोध्यैव च सर्वतः।
गार्हपत्यादिकुण्डेषु क्रमादाघारमाचरेत्।।

पक्वबिम्बसमाकारघटानां पञ्चविंशतिम्।
तन्तुना त्रिवृता वेष्ट्य शोधयित्वा सुधूपितान्।।

आदाय मन्त्रवद्दिव्यं जलमाहृत्य यत्नतः।
पूताभिरद्भिरापूर्य नारिकेलाम्रपल्लवैः।।

अलङ्कृत्य तथा कूर्चैर्गन्धपुष्पाक्षतादिभिः।
यवैर्वा व्रीहिभिर्वाथ वेद्यां द्वादशभारकैः।।

आस्तीर्य तेषु संस्थाप्य पृथग्वस्त्रेण वेष्टयेत्।
सौवर्णप्रतिमास्तत्र पञ्चनिष्ककृताः पृथक्।।

गजकूर्मादिरूपाणि नवरत्नानि च क्षिपेत्।
ध्यानमार्गेण कुम्भेषु मध्यमादिषु च क्रमात्।।

नवमूर्तिक्रमेणैव मन्त्रेणावाहयेद् गुरुः।
वेद्यधःस्थेषु कुम्भेषु चेन्द्रादीनष्टदिक्पतीन्।।

आवाह्य गन्धपुष्पाद्यैस्समभ्यर्च्य निवेदयेत्।
सहस्रकलशैस्स्नाप्य स्नपनोक्तप्रकारतः।।

सौर्णं कौतुकं बद्ध्वा प्रतिष्ठोक्तविधानतः।
शय्यावेदिं समभ्युक्ष्य पञ्चतल्पान् प्रकल्प्य च।।

शालिव्रीहियवैश्चापि षड्भारैश्च पृथक् पृथक्।
तदर्धैस्तण्डुलैश्चाथ तदर्धैश्च तिलैस्तथा।।

उपर्युपरि चास्तीर्य चर्मजादीन् समास्तरेत्।
शयने शाययेद्वेद्यामौत्सवं बिम्बमुक्तवत्।।

कूर्चाधिवासं कुर्वीत ध्रुवमात्रं यदि क्रमात्।
वेदानध्यापयेद्दिक्षु 'ऋचां प्राची'रिति श्रुतिः।।

गार्हपत्यादिकुण्डेषु प्रतिष्ठोक्तविधानतः।
ऋत्विग्भिः कारयेद्धोमं तत्तद्दैवत्यपूर्वकम्।।

गुरुस्सभ्याग्निमासाद्य परिषिच्य च पावकम्।
पञ्चसूक्तं क्रमणैव महाव्याहृतिपूर्वकम्।।

व्यापकत्रयमन्त्रं च विष्णुगायत्रिया पुनः।
अष्टोत्तरशतं हुत्वा व्याहृत्या च तथैव च।।

ततोब्जाग्निं समासाद्य पञ्चसूक्तैस्सहैव तु।
धात्रादिमन्त्रहोमं च पञ्चवारुणसंयुतम्।।

महाशान्त्युक्तमन्त्रांश्च त्रिरावर्त्य हुनेत्ततः।
कुम्भवेदिं समासाद्य समभ्यर्च्याष्टविग्रहैः।।

स्पृष्ट्वा कूर्चेन तत्कुम्भानृत्विग्भिः सह वै गुरुः।
आत्मसूक्तं जपित्वैव पञ्चसूक्तमतः परम्।।

स्वस्तिसूक्तं च दौर्गं च रात्रिमेकाक्षरं तथा।
अष्टदिक्पालसूक्तानि पञ्चशान्तिमतः परम्।।

'आपो' 'हिरण्यवर्णा'भ्यां 'पावमानीभि'रेव च।
जप्त्वा द्वादशसूक्तं च ततस्सभ्यानले क्रमात्।।

हौत्रप्रशंसनं कुर्यात्सर्वं होता तु पूर्ववत्।
चतुर्मूर्तिक्रमेणैव सहस्राहुतिना सह।।

'यद्देवा' द्यैश्च कूष्माण्डैस्सर्वदैवत्यमन्त्रकैः।
हुत्वा तु दोषशान्त्यर्थं लाजैस्तद्वत्तिलैरपि।।

सापूपैर्विष्णुगायत्र्या हुत्वा कुण्डेषु पूर्ववत्।
अष्टोत्तरशतं तद्वदष्टाविंशतिरेव वा।।

परिषेकं ततः कृत्वा पौण्डरीके विशेषतः।

पद्मैर्वा बिल्वपत्रैर्वा विष्णुगायत्रिया ततः।।

अष्टोत्तरसहस्रं तु घृतेनाप्लुत्य वै हुनेत्।
पारमात्मिकमन्त्रैश्च ईकाराद्यैश्च यत्नतः।।

अष्टाशीतिं ततो हुत्वा महाव्याहृतिपूर्वकम्।
हुत्वा तद्दोषनाशाय राजराष्ट्राभिवृद्धये।।

सभ्याग्निं पौण्डरीकाग्निं हित्वान्येष्वन्तहोमकम्।
---------- अत्र ग्रन्थपातः ----------।।

नृत्तगीतादिवाद्यैश्च रात्रिशेषं नयेद् गुरुः।
प्रात स्स्नात्वा विधानेन कलशैः स्नपनं चरेत्।।

पञ्चसूक्तैश्च संस्नाप्य पञ्चशान्तिसमन्वितम्।
पश्चाद्देवमलङ्कृत्य सुवस्त्राभरणादिकैः।।

गन्धपुष्पैः सुगन्धैश्च यावन्नेत्रमनः प्रियम्।
मुहूर्ते समनुप्राप्ते कुम्भमादाय देशिकः।।

स्वस्तिसूक्तं जपन् ग्राममालयं वा प्रदक्षिणम्।
कृत्वा देवाग्रतः कुम्भं धान्यपीठे निवेशयेत्।।

यजमानेन शक्त्या वै गुरुः सम्पूजितस्तदा।
कुर्यादनन्तरोक्तांश्च संस्कारान् भगवत्प्रियान्।।

वस्त्रैराभरणैः शुभ्रैः कुण्डलैश्च विशेषतः।
यजमानस्सुसम्पूज्य पशुभूम्यादिभिर्गुरुम्।।

गुरवे दक्षिणां दद्यान्निष्काणामेकविंशतिम्।

ऋत्विग्भ्यश्च तथा दद्यात्सुप्रीतो भगवान् हरिः।।

गुरुः पश्चात्समावाह्य समभ्यर्च्याष्टविग्रहैः।
महाहविर्निवेद्यैव पायसापूपसंयुतम्।।

साज्यं सव्यञ्जनं दत्वा मुखवासं निवेदयेत्।
पुष्पाञ्जलिं ततो दत्वा 'क्षमस्वे'ति प्रणम्य च।।

सहस्रं ब्राह्मणानां च भोजयेच्छान्तिहेतवे।
दशदानं विशेषेण देवप्रीतिकरं भवेत्।।

एवमाद्वादशाब्दात्तु प्रतिष्ठामाचरेत्ततः।
पुनस्स्थापनसंस्कारात्प्रायश्चित्तं न हीतरत्।।

तस्मात्सर्वप्रयत्नेन शास्त्रोक्तं सर्वमाचरेत्।

### ९.११.९ सम्प्रोक्षणफलम्

**प्र.३१.१२६, १२७**

एवं यः कुरुते भक्त्या विष्णोस्सम्प्रोक्षणत्रयम्।।

प्रतिष्ठाफलमासाद्य वैष्णवं लोकमाप्नुयात्।

***

# १२. पवित्रारोपणम्

## ९.१२.१ पवित्रारोपणस्योद्देशः

**वि.७८. ४६९**

सर्वयज्ञफलप्रदं, सर्वदोषोपशमनं, सर्वतुष्टिकरं, सर्वकामप्रदं, सर्वलोकशान्तिदं मन्त्रक्रियाद्रव्यहीनं यत्कृतं तद्दोषशान्त्यर्थं पवित्रारोपणं कुर्यात्। पवित्रारोपणहीना या पूजा सा निष्फला भवति, राजा राष्ट्रं विनश्यति। तस्माद्यत्नेन पवित्रमारोपयेत्।

**प्र.३२. ३५ - ३९**

**क्रि. ३१. २१ - २४**

अथातः संप्रवक्ष्यामि पवित्रारोपणं हरेः।
नित्ये नैमित्तिके वापि तथा संवत्सरार्चने।।

ज्ञानतोऽज्ञानतो वापि ये दोषाः संभवन्ति वै।
पवित्रारोपणेनैव ते शाम्यन्ति न संशयः।।

सर्वदोषप्रशमनं सर्वकामसमृद्धिदम्।
आयुरारोग्यदं कर्तुः सर्वाध्वरफलावहम्।।

पवित्रारोपणं विष्णोः कारयेत्सर्वशान्तये।

**वा. ३९**

अतः परं प्रवक्ष्यामि सूत्रस्यारोपणक्रमम्।
भुक्तिं चैव तथा मुक्तिमायुःकीर्तिप्रवृद्धिदम्।।

धनवृद्धिं च पुण्याहं सर्वपापहरं तथा।
सूत्रस्यारोपणं तस्मात् पवित्रं परमं स्मृतम्।।

संवत्सरं नरो भक्त्या संपूज्यैव जनार्दनम्।
यत्पूजाफलमाप्नोति संपूर्णं लभते ध्रुवम्।।

वर्षे वर्षे च कर्तव्यं कारयेद्देशिकोत्तमः।
न्यूनातिरिक्तव्याघातसर्वदोषस्य शान्तये।।

## ९.१२.२ पवित्रारोपणकालः

**वा.३९**

आषाढे श्रावणे चैव मासि भाद्रपदेऽपि वा।
एवं मासे सिते पक्षे द्वादश्यां रोपणं हरेः।।

एतच्चान्द्रमसे वापि सौरे वापि च कारयेत्।
संसर्पं चाधिमासं च तिथिशून्यं दिनत्रयम्।।

दशम्येकादशीमिश्रं मासशून्यं तथैव च।
अंहस्पतियुतं चैव चान्यदोषादिना युतम्।।

एतैर्दोषैर्युते तत्र सूत्रस्यारोपणं न च।
कर्त्रा वा त्वरितं चैव नृपस्यैवाज्ञया यदि।।

तत्रैवारोपयेद्विद्वान् उक्तदोषो न विद्यते।
रवौ तुलागते चैव न कुर्यादिति शासनम्।।

अथ वा चेद्विशेषेण कुर्यात्तच्छास्त्रपारगः।
ज्येष्ठ आषाढे श्रावण्यां भाद्रपदाश्वयुजे तथा।।

कार्तिके मार्गशीर्षान्तं कारयेदिति केचन।
आग्नेयी प्रतिपत्प्रोक्ता श्रियश्चैव द्वितीयया।।

भगस्य च तृतीया च यमस्यैव चतुर्थ्यपि।
सोमस्य पञ्चमी ज्ञेया गुहःषष्ठ्यां तथैव च।।

सप्तमी भास्करस्योक्ता दुर्गायाष्टमी तथा।
मातॄणां नवमी प्रोक्ता दशम्या वायुरेव च।।

एकादश्यामृषीणां च द्वादश्यां चक्रपाणिनः।
विष्णोस्तु पौर्णमास्यां तु कैश्चिदुक्तं विशेषतः।।

शंकरस्य त्रयोदश्यां ब्रह्मणश्च चतुर्दशी।
तिथयः पौर्णमास्यन्तं प्रोक्ताश्चैवाथवा मया।।

अथवा कृष्णपक्षे च द्वादश्यन्तं प्रगृह्य च।
विष्णुपञ्चदिने केचित् सूत्रारोपयेद्बुधः।।

**वि. ७८. ४६९, ४७०, प्र. ३२. ३९ - ४१, क्रि. ३१. २०**
**क्रि. ३१. २४ - २८**

पवित्रारोपणं विष्णोः कारयेत् सर्वशान्तये।
मार्गशीर्षाख्यमासे तु शुक्लपक्षे विशेषतः।।

द्वादश्यां कृष्णपक्षे वा नक्षत्रे श्रावणेऽथवा।
दक्षिणायनमासेषु विष्णुपञ्चदिने तथा।।

कवेराश्वयुजे मासि चाश्वयुज्यां समाचरेत्।
कृष्णाष्टमीचतुर्दश्योः शम्भोर्मासेषु षट्सु च।।

द्वादश्यां भास्करस्योक्तं षष्ठ्यां स्कन्दस्य कीर्त्यते।
कार्तिके मासि दुर्गायाः नवम्यां कृत्तिकासु च।।

पूर्वपक्षेऽथवा कृष्णे श्रीदेव्याः पञ्चमीतिथौ।
अथवोत्तरफल्गुन्योः पवित्रारोपणं चरेत्।।

## ९.१२.३ पवित्रद्रव्यस्य त्रैविध्यम्

**वि. ७८. ४७०**

पद्मक्षौमसुवर्णसूत्रमुत्तमं, मध्यमं रौप्यं, अधमं कार्पासम्।

**प्र. ३२. ५३**

**वा. ३९**

सुवर्णेन कृतं सूत्रमारोप्यमुत्तमोत्तमम्।।

रजतेन कृतं सूत्रमारोपेदुत्तमं स्मृतम्।
ताम्रसूत्रकृतारोप्यं मध्यमं स्याद्विचक्षणाः।।

क्षौमं वा पट्टसूत्रं वा कौशेयेनात्र सूत्रकम्।
तेषां चैव त्वलाभे तु सूत्रं कार्पासतस्तु वा।।

**क्रि. ३१. ४७ - ४९**

निष्कहीनसुवर्णेन ध्रुवादीनां पृथक्पृथक्।
देव्योस्तदर्धमानेन तथा परिषदामपि।।

---------------------------

अशक्तस्तान्तवं वाथ सूत्रं कृत्वा समाचरेत्।

## ९.१२.४ पवित्रकल्पनम्

**वा. ३९**

ब्राह्मण्या निर्मितं वापि कन्यया त्वथवापि च।
साधुशीलवती ग्राह्या सूत्रं केशादिवर्जितम्।।

नीलरक्तादिदोषैश्चानुपयुक्तानि वर्जयेत्।
स्थूलत्वं च कृशत्वं च न गृह्णीयात् कदाचन।।

तमेकनेमिरित्युक्त्वा जपेच्चैवादरात्पुनः।
त्रिगुणीकृत्य सूत्राणि पवित्राणि च कारयेत्।।

अथवात्र विशेषेण कारयेद्देशिकोत्तमः।
एकैकं त्रिगुणीकृत्य कारयेच्च पवित्रकम्।।

'आमावाजे' ति मन्त्रेण 'तन्तुं तन्वन्नि' ति ब्रुवन्।
नवतन्तून् गृहीत्वैव क्षालयित्वा विचक्षणः।।

'आपोहिष्ठे' ति मन्त्रेण 'यन्मेगर्भे' ति च ब्रुवन्।
कुशाग्रैः पञ्चगव्येन सूत्राणां प्रोक्षणं चरेत्।।

उपलिप्ते शुचौ देशे पञ्चवर्णैरलङ्कृते।
स्वासस्थेति जपेच्चैव चासनं कल्पयेत्तथा।।

दर्भानास्तीर्य सूत्राणि निधायाचार्यशिष्यकौ।
गायत्रीं च ततो जप्त्वा सूत्रतन्तूंश्च खानयेत्।।

कल्पयेत पवित्राणि तत्तद्देवानुरूपतः।
परिवारैश्च देवानां तत्तत्स्थानेषु योजयेत्।।

उत्तमं मध्यमं चैव ह्यधमं तत् त्रिधा भवेत्।
तत्रोत्तमस्थसूत्राणि ह्यष्टोत्तरशतं क्रमात्।।

ग्रीवापृष्ठं समारभ्य बाह्वन्तं च समन्वितम्।
मध्यमस्य तु सूत्राणि चतुःपञ्चाशदित्यपि।।

ऊर्वन्तं तत्प्रमाणं वै कनीयश्च विशेषतः।
सप्तविंशतिभिस्सूत्रैः नाभ्यन्तं तु प्रमाणतः।।

अष्टोत्तरसहस्राणि वनमाला विशेषतः।
देवप्रमाणेनावेष्ट्य विशेषेणैव कारयेत्।।

एतत्प्रमाणं सर्वं वै शान्तं च गरुडं तथा।
औत्सवं बलिबेरं च उक्तलक्षणसंयुतम्।।

इन्द्रादिलोकपालादीन् श्रियं चैव सरस्वतीम्।
भास्करं चैव सोमादीन् दुर्गां ये ऋषयस्तथा।।

वित्तानुसारतः कुर्यात् यजमानस्य चेच्छया।
तत्तत्स्थानेषु कुर्याच्चेत्तत्तत्काले विशेषतः।।

तत्तद्देवान् समारोप्य तत्तन्मन्त्रमुदीरयन्।
ग्रन्थयेच्च पवित्रं यत् यवान्तरं तु पर्यया।।

अधिवासं पवित्राणां तत्सूत्रं सप्तविंशतिः।
तत्प्रमाणं कनिष्ठे च परिवारैर्युतं तथा।।

द्वादशे सूत्रसंख्यानां विशेषेणैव कारयेत्।
यजमानाचार्यशिष्याणामुपवासव्रतं चरेत्।।

तदुक्तेषु पवित्राणां सप्तविंशतिभिः क्रमात्।
प्रमाणं नाभिमात्रं वा हस्तमात्रमथापि वा।।

कनीयांसि पवित्राणि व्यङ्गुलं बन्धयेत्क्रमात्।
मध्यमे च तु संबध्य चतुरङ्गुलमेव वा।।

उत्तमे च पवित्राणि बन्धनेऽष्टाङ्गुलं विदुः।
अथ केचिद्वदन्त्यस्मिन् ग्रन्थिसंख्याविशेषतः।

षट्त्रिंशद्ग्रन्थिसंयुक्तं केचिदुत्तमसंयुतम्।।

मध्यमं च पवित्रं च चतुर्विंशति बन्धयेत्।

कनिष्ठे द्वादशबन्धं वनमालां विशेषतः।।

वदन्त्यष्ठोत्तरशतग्रन्थिना मुख्यमुत्तमम्।

पुनर्ग्रन्थीन् विशेषेण उत्तमेऽङ्गुष्ठमात्रकम्।।

बन्धयेन्मध्यमस्योक्तं तस्यार्धं बन्धयेत्क्रमात्।

कनिष्ठाऽनामिकामध्यपर्वमात्रेण बन्धयेत्।।

वनमालां विशेषेण बन्धयेच्चतुरङ्गुलम्।

एवं ग्रन्थीन् विशेषेण उक्तं संक्षेपतो मया।।

तदूर्ध्वे वक्ष्यमाणं तु अधिवासक्रमं श्रृणु।

**वि. ७८. ४७०, ४७१**

सर्वदोषविवर्जितं पतिव्रतासुमङ्गल्या ब्राह्मण्या कन्यकया वा निर्मितं सूत्रं गृह्णीयात्। तदलाभे पण्यविक्रयिणः सङ्गृह्य, मूषिकादिभिराघ्रातं केशयुतं स्थूलं कृशं वर्जयित्वा, सर्वतः समं सूत्रं गायत्र्या त्रिगुणीकृत्य, आपोहिष्ठा, यन्मे गर्भ इति कुशाग्रैः पञ्चगव्येन प्रोक्ष्य, अष्टोत्तरशतसूत्रं ग्रीवापृष्ठमारभ्य जान्वन्तमुत्तमम्, चतुष्पञ्चाशदूर्वन्तं मध्यमम्, सप्तविंशतिर्नाभ्यन्तमधमं, बिम्बालम्बप्रमाणामष्टोत्तरसहस्रैर्वनमालां कुर्यात्। ग्रन्थिश्चाङ्गुष्ठमात्रमुत्तमं, मध्यमाङ्गुलिप्रमाणं मध्यमं, अनामिकाङ्गुलिप्रमाणमधमं, ग्रन्थिं विष्णुसूक्तेन बध्नीयात्।

## ९.१२.५ उपवीतकल्पनम्

### वि.७८. ४७२

उपवीतं सप्तविंशतिकग्रन्थि, यजमानाचार्यशिष्यवह्निकुण्डकुम्भानाम् अष्टग्रन्थि, परिवाराणां द्वादशग्रन्थि, कुङ्कुमोशीरचन्दनसौवर्णराजतचूर्णैः यथालाभैः हरिद्राचूर्णैः ग्रन्थीनलङ्कृत्य इमे गन्धेत्यगरुं धूपयेत्।

### क्रि. ३१. ४९ - ५२

तान्तवं यदि कुर्वीत त्रिगुणीकृत्य तत्पुनः।
प्राङ्मुखौ द्वौ तु तिष्ठन्तौ एकस्त्वभिमुखस्तयोः।।

जपन्वै विष्णुगायत्रीं दक्षिणोर्ध्वं तु वर्धयेत्।
तत्पुनस्त्रिगुणीकृत्य वामोर्ध्वं वर्धयेत्पुनः।।

शुचौ देशे च सन्न्यस्य तस्योपरि मृदं तथा।
सन्न्यस्य हस्तौ सत्ताड्य त्रिगुणीकृत्य कल्पयेत्।।

यज्ञोपवीतमित्युक्तं ग्रन्थिसूत्रमथोच्यते।

## ९.१२.६ पवित्रब्रह्मसूत्रलक्षणम्

### क्रि. ३१. ४८

छन्नगुल्फतलं चैकं सूत्रं विष्णोः प्रकल्पयेत्।
तद् ब्रह्मसूत्रमित्युक्तं तदसाधारणं हरेः।।

## ९.१२.७ पवित्रवनमालालक्षणम्

### प्र. ३२. ५५,५६

गृह्णीयाद्बिम्बमानेन चाष्टोत्तरसहस्रकम्।

ग्रन्थयोऽङ्गुष्ठमात्राः स्युः ताभिर्मालां च कारयेत्।।

वनमाला समाख्याता विष्णोः प्रियतमा भवेत्।

### ९.१२.८ पवित्रसंस्कारः

**वा.३९**

अधिवासमथो वक्ष्ये कारयित्वा यथाक्रमम्।
अधिवासपवित्राणां ग्रन्थींश्चैवाधिवासयेत्।।

परिवारपवित्रेषु ग्रन्थीनामष्ट बन्धयेत्।
आचार्यादिपवित्रं चेत् ग्रन्थीनष्टौ समाचरेत्।।

अथवा द्वादशग्रन्थीन् कृत्वा चैव विचक्षणः।
एवं दशम्यां यत्नेन यागद्रव्याणि सर्वशः।।

संग्राह्यमेव सर्वेषां नियतं यागमन्दिरे।
स्नात्वा चैव विधानेन दशम्यां प्रातरेव हि।।

देवालयं प्रविश्यैव प्रतद्विष्णुरिति ब्रुवन्।
इदं विष्णुरिति प्रोच्य विष्णुगायत्रिमुच्चरन्।।

एवं कृत्वा तु सर्वं वै प्रदक्षिणमथाचरेत्।
पादौ प्रक्षाल्य चाचम्य प्रविश्यैवान्तरे तथा।।

बन्धयित्वा तु सूत्राणि विष्णुसूक्तं समुच्चरन्।
हारिद्रं कुङ्कुमं चैव गोरोचनमथापि वा।।

सिन्दूरं गैरिकं वापि पवित्राणां विशेषतः।
अणोरणीयानित्युक्त्वा वर्णमिश्रक्रमेण वै।।

कर्पूरं कुङ्कुमं चैव वर्णं श्रेष्ठमिहोच्यते।
गोरोचनं च सिन्दूरं मिश्रं वै मध्यमं विदुः।।

हारिद्रं गैरिकं मिश्रमधमं चेति कीर्त्यते।
अलाभे कुङ्कुमादीनां हारिद्रं ग्राह्यमेव च।।

एवं ग्रन्थीनलङ्कृत्य वर्णमेव विधानतः।
इमे धूपेति मन्त्रेण धूपयेत्तद्विचक्षणः।।

उशीराद्यैश्शुभैर्द्रव्यैः ग्रन्थीनां च सुधूपयेत्।

**प्र.३२. ५६ , ५७**

विष्णुसूक्तं च जप्त्वा तु अणोरणीयानिति ब्रुवन्।।

प्रोक्ष्य हारिद्रतोयेन इमे धूपेति धूपयेत्।

## ९.१२.९ पवित्रार्थम् उत्तमं सूत्रम्

**प्र. ३२. ५४**

सुमङ्गलीभिर्युग्माभिः ब्राह्मणीभिर्विशेषतः।
अलाभे कन्यकाभिर्वा निर्मितं सूत्रमुत्तमम्।।

## ९.१२.१० पवित्रोत्सवे यागशालानिर्माणम्

**वि. ७८. ४७०**

आलयात्पुरतो मण्टपे, प्रपायां वा यागशालां कृत्वा, पादैः, षोडशैः, चतुर्विंशद्भिर्वा अन्तस्तम्भविवर्जितं वा, तन्मध्ये द्विहस्ताऽऽयतविस्तारां, तालोच्छ्रयामष्टाङ्गुलोच्छ्रयां वा, दर्पणोदरवद्वेदिं कृत्वा, चतुर्द्वारेषु तोरणपूर्णकुम्भाङ्कुरदर्भमालातरङ्गस्तम्भवेष्टनमुक्तादामादिभिरलङ्कृत्य, वेद्याः

पुरतो पौण्डरीकमग्निकुण्डं सभ्याग्निकुण्डं वा कृत्वा, गोमयेनोपलिप्य, पञ्चवर्णैरलङ्कृत्य, सम्भारानाहरेत्। गन्धतोयैः आपोहिरण्यपवमानैः प्रोक्ष्य, तद्दिनात्पूर्वं पूर्ववदङ्कुरानर्पयित्वा ------- सूत्रं गृह्णीयात्।

### ९.१२.११ यागशालाया अलङ्करणम्

**वा.४०**

एवं कृत्वा त्वलङ्कृत्य तोरणैः पल्लवाङ्कुरैः।
दर्भमालादि संवेष्ट्य पुष्पमालादिसंयुतम्।।

मुक्तादामवितानाद्यैः पताकैर्ध्वजसंयुतैः।
घण्टाभिश्चामरैश्चापि दर्पणं चूतमेव वा।।

नालिकेरैश्च नारङ्गमातुलुङ्गादिसंयुतम्।
कदलीक्रमुकं चापि स्तम्भवेष्टनमाचरेत्।।

एवं कृत्वा विधानेन मण्डपादिष्वलङ्कृतिम्।
सूर्यस्त्वेति जपेच्चैव यजमानादरान्वितम्।।

प्रणवं चैव परितः रक्षां चैव समाचरेत्।

**क्रि. ३१. ३० - ३३**

पवित्रमण्डपं कुर्यात् देवाग्रे वाऽथ दक्षिणे।
स्नपनालयेऽथवा तत्र स्थानं कृत्वा यथाविधि।।

तोरणैः पूर्णकुम्भैश्च कदलीक्रमुकध्वजैः।
चतुर्द्वारिष्वलंकृत्य स्तम्भयोरुभयोरपि।।

वितानैश्च पताकाभिः तरङ्गैः स्तम्भवेष्टनैः।

मुक्तादामावलम्बैश्च पुष्पैर्वा दर्भमालया।।

किंकिणीजालकैर्हैमैः कल्पवृक्षैस्सरत्नकैः।

अलङ्कृत्यान्तरं सर्वं दीपानारोपयेद्बहून्।।

## ९.१२.१२ यागशालाशोधनम्

**प्र. ३२. ४८,४९**

वास्तुहोमं च हुत्वा तु गव्यं कृत्वा विधानतः।।

पर्यग्निपञ्चगव्याभ्यां यागशालां विशोधयेत्।

## ९.१२.१३ पवित्रारोपणे अङ्कुरार्पणकालः

**क्रि. ३१. २९**

तस्मात्तु दिवसात्पूर्वं नवमे वाऽथ सप्तमे।

पञ्चमेऽहनि वा कुर्यात् तृतीये वाऽङ्कुरार्पणम्।।

**वि. ७८. ४७१**

**प्र. ३२. ४७**

--------------- मृत्सङ्ग्रहणमाचरेत्।

अङ्कुरानर्पयित्वैव मुद्गान्नं च निवेदयेत्।।

## ९.१२.१४ पवित्रारोपणे आचार्यादीनां वरणम्

**प्र. ३२. ४२, ४३**

उक्तलक्षणसम्पन्नमाचार्यं वरयेत्क्रमात्।।

ऋत्विजो वरयेत्तद्वत् शिष्यांश्च वरयेत्ततः।

### ९.१२.१५ पवित्रारोपणे द्रव्यसंभारकालः

**क्रि. ३१. ३०**

अङ्कुरार्पणकादूर्ध्वं द्रव्याण्यपि समाहरेत्।

### ९.१२.१६ पवित्रारोपणे भूमण्डलकल्पनम्

**क्रि. ३१. ३४ - ४६**

गोमयेनोपलिप्यैव पञ्चवर्णैरलंकृतम्।
चतुर्दिशं चतुर्हस्तं त्रिहस्तं वाथ मध्यमे।
गृहीत्वा प्रागुदक्सूत्रैः उपपीठपदे कृते।।

तन्मध्ये मेरुरेकः स्यात् हस्तमात्रसमुच्छ्रयः।
तत्तुरीयांशहीनाश्च परितोऽष्टौ कुलाचलाः।।

तत्त्रिभागैकहीनास्तु परितस्तस्य षोडश।
इन्द्रादीनां तथाष्टानां शिवादीनां पदानि वै।।

चतुर्भिर्दशभिः सूत्रैः बहिः पङ्क्तिं चतुर्दिशम्।
सागराः सप्त चैतेषु द्वीपाः शाकादयश्च षट्।।

तत्र मेरुः सुवर्णाभः सितपीतासितारुणाः।
हिमाचलादयो द्वन्द्वाः तथाष्टौ कुलपर्वताः।।

श्वेतपीतासितश्यामरक्तनीलसितारुणाः।
तद्बहिः षोडशपदे कल्पनीयाः प्रयत्नतः।।

जम्बूद्वीपादिकं ध्यात्वा तद्बहिर्लवणार्णवम्।
सस्यश्यामनिभं कुर्यात् शाकद्वीपं बहिस्तथा।।

श्वेतं क्षीरार्णवं बाह्ये कुशद्वीपं ततो बहिः।
बहिर्घृतार्णवं नीलं क्रौञ्चद्वीपं तथैव च।।

दधितोयनिधिः शुक्लः शाल्मलीद्वीपसंयुतः।
मदवर्णः पिशङ्गाभः गोमेदद्वीपसंयुतः।
शुद्धतोयार्णवो रक्तो लोकालोकाचलस्तथा।।

एवं भूमण्डलं कृत्वा वर्णैर्धातुविकारजैः।
पौष्पैः परागैरथवा पत्रचूर्णैरथापि वा।।

तत्तद्वर्णयुतान् कृत्वा सर्वानेतानसङ्करान्।
जपेदुपोष्य पूर्वेद्युः वेदान् त्रिषवणाप्लुतः।।

**९.१२.१७ पवित्रारोपणे सम्भारन्यासः**

**क्रि. ३१. ५५ - ६६**

-------------- सायं सन्ध्यामुपास्य च।।

त्रिलोकीमण्डपं कृत्वा तद्द्रव्यन्यासमाचरेत्।
पवित्राणि च सर्वाणि मेरुश्रृङ्गोपरि न्यसेत्।।

अष्टोपचारद्रव्याणि न्यसेदष्टकुलाचले।
मङ्गलानि न्यसेदष्टलोकपालपदाष्टके।।

प्लोतवस्त्रोत्तरीयादीन् धातून्याभरणान्यपि।
हविः पानीय ------------------।।

------------ मित्रादीनां पदाष्टके।
पुरुषादिपवित्राणि प्रागादिषु कुलाद्रिषु।।

कोणेषु कपिलादीनां आग्नेयादिषु विन्यसेत्।
तद्बहिः षोडशांशेषु सूत्रं परिषदामपि।।

तत्तदुक्तेषु शैलेषु नववस्त्रोपरि न्यसेत्।
सागरेषु च सर्वेषु तत्तद्द्रव्यसुपूरितान्।।

प्रत्येकमष्टौ कलशान् सन्न्यसेत्सूत्रवेष्टितान्।
आढकाहीनधान्येषु पृथग्वस्त्रोत्तरच्छदान्।।

तदुपस्नानकलशान् बहिर्द्वीपेषु सन्यसेत्।
चक्रवालाचलाद्बाह्ये प्राच्यां वीशं समर्चयेत्।।
दक्षिणे चक्रखड्गौ च शरं चैव समर्चयेत्।।

पक्षीशं पश्चिमेऽभ्यर्च्य वामे चैव विशेषतः।
शङ्खखेटकशार्ङ्गाणि तथा कौमोदकीमपि।।

छत्रं चामरयुग्मं च दर्पणं च ध्वजं तथा।
ऐशान्यादिषु कोणेषु सन्न्यसेत्तानसङ्करम्।।

## ९.१२.१८ पवित्रारोपणे प्रार्थनम्

**वा. ३९**

अर्चयित्वा विशेषेण एतत्कार्यं निरूप्य च।
विज्ञापयेन्नमस्कृत्य तिष्ठंश्चैव कृताञ्जलिः।।

भगवतो बलेनेत्युक्त्वा प्रार्थयेद्विष्णुमव्ययम्।
अङ्कुरार्पणकं कृत्वा पूर्वोक्तेन विधानतः।।

पूर्वरात्रौ विशेषेण देवेशं सम्यगर्चयेत्।

**वा. ४०**

एकादश्यां प्रभाते वा स्नात्वा चैव विचक्षणः।।

देवादींस्तर्पयित्वा तु प्राणायामं च कारयेत्।
सावित्रीं चैव जप्त्वा तु ब्रह्मयज्ञमतः परम्।।

परीत्य मन्दिरं पश्चाद् अतो देवा इतीरयन्।
एतत्कर्म क्षमस्वेति याचयेदनुमानकम्।।
उपवासं च सर्वेषां प्रार्थयेद्देवसन्निधौ।।

स्त्रीशूद्रादीनसंभाष्य कामक्रोधादि वर्जयेत्।
एवं कल्प्योपवासं वै यागशालां प्रविश्य च।
भगवतो बलेनेति प्रार्थयेद्देवसन्निधौ।।

**वि. ७८. ४७२**

**प्र. ३२. ४३, ४४**

तद्दिनात्पूर्वरात्रौ तु देवेशं प्रार्थयेद् गुरुः।।

भगवतो बलेनेति प्रोच्य नम्रःसमाहितः।
पाद्याद्यैश्च विशेषेण देवमभ्यर्च्य सत्वरः।।

प्रार्थनासूक्तमुच्चार्य ---------------।

## ९.१२.१९ प्रवित्रारोपणे वेदपारायणम्

**प्र.३२. ४५ - ४७**

----------------- वेदाध्ययनमारभेत्।
परितो यागशालायाः शिष्यैः परिवृतो गुरुः।।

चतुर्षु द्वारदेशेषु क्रमात्प्रागादिषु स्वयम्।
चतुर्वेदादिमन्त्रांश्च शक्त्याध्ययनमाचरेत्।।

पुण्याहं च ततः कृत्वा ----------।

### ९.१२.२० पवित्रारोपणे आघारहोमः

**वा. ४०**

एवं कृत्वा तु तन्मध्ये पौण्डरीकं प्रकल्पयेत्।।

अथवा कारयेत्तत्र सभ्यं कृत्वा समाहितः।
आघारं विधिवत्कृत्वा परिषिच्य च पावकम्।।

**वि. ७८. ४७१**

**प्र. ३२. ४८**

औपासनाग्निकुण्डे तु आघारं विधिवद्यजेत्।

### ९.१२.२१ पवित्रारोपणे प्रतिसरबन्धः

**वा.४०**

मण्डपे पश्चिमे भागे धान्यैः पीठानि कल्पयेत्।
षट् द्रोणानि तदर्धं वा शालितण्डुलसंयुतम्।।

दर्भानास्तीर्य तन्मध्ये प्रतद्विष्णुरिति ब्रुवन्।
कौतुकस्य तथा बन्धं पुण्याहं वाचयेत् सुधीः।।

कौतुकं बन्धयेच्चैव रक्षायाश्चैव बन्धनम्।
तद्वत्प्रतिसरं चैव त्रिविधं चैव पर्यया।।

स्वस्तिसूक्तं समुच्चार्य स्वस्ति वा विशमुच्चरन्।

सौवर्णं तान्तवं वाथ प्रतिसरं पूर्ववच्चरेत्।।

अतोदेवादिना जप्त्वा देवेशं प्रार्थयेत्ततः।
पाद्याद्यैरर्चयेद्देवमर्घ्यान्तं तु समर्चयेत्।।

**वि. ७८. ४७१**

वेद्याः पश्चिमे धान्यपीठे सूत्राणि संस्थाप्य, पाद्याद्यर्घ्यान्तमभ्यर्च्य, पुण्याहं वाचयित्वा, पूर्ववत् प्रतिसरमाबध्य

**प्र.३२. ५९ - ६३**

बिम्बाध्यर्धप्रमाणेन शय्यावेदिं प्रकल्पयेत्।
तिलतण्डुलधान्यैश्च धान्यपीठं प्रकल्प्य च।।

दर्भांस्तत्र समास्तीर्य चाण्डजादीनि चास्तरेत्।
प्रतद्विष्णुरिति प्रोच्य पवित्रं सन्निधाय च।।

पञ्चमूर्तिभिरावाह्य समभ्यर्च्य प्रणम्य च।
जप्त्वा प्रतिसरं मन्त्रं धूपदीपादि दर्शयेत् ।।

अतोदेवादिना पश्चात् देवेशं प्रार्थयेद् गुरुः।
पाद्यादिभिः समभ्यर्च्य धूपदीपादि दर्शयेत्।।

बध्वा प्रतिसरं देवं श्रीभूम्यौ च तथैव च।
आचार्यस्यर्त्विजां चैव बद्ध्वा प्रतिसरं तथा।।

## ९.१२.२२ पवित्राणां शय्याधिवासः

**वि. ७८. ४७२**

पश्चाच्छय्यावेद्यां षड्द्रोणादहीनैः शालिधान्यैः तदर्धतण्डुलैः तदर्धतिलैर्वोपर्युपर्यास्तीर्य, साग्रान् कुशान् दर्भान् प्रागग्रान् वा विन्यस्य

पञ्चशयनानि, वासांसि वाऽऽस्तीर्य, धूपदीपैरष्टमङ्गलैः पञ्चायुधैश्च विन्यस्य, सर्ववाद्यसमायुक्तं घण्टानादपूर्वं शाकुनसूक्तं पठन्, आचार्यः स्थापकैस्सह पवित्रं शयनमारोप्य, 'यद्वैष्णव' मिति पवित्राण्यधिवास्य, नववस्त्रैः पुष्पाक्षतैः शयनं प्रच्छाद्य, सूत्रं स्पृष्ट्वा, पुरुषसूक्तं, रुद्रसूक्तं, दुर्गासूक्तं, रात्रिसूक्तं, सारस्वतसूक्तं, विश्वजित्सूक्तं, ऋतं सत्यं, सहस्रशीर्षं, श्रीसूक्तं, भूसूक्तं, विष्णुसूक्तं, गोदानसूक्तं, आत्मसूक्तं, वैष्णवं जपेत्। उत्तमं पञ्चदशसूक्तं, मध्यमं सप्त, अधमं पञ्चसूक्तं जपेत्।

**वा. ४०**

तद्धान्योपरि संस्थाप्य ह्यण्डजादीन् प्रकल्पयेत्।
येद्वैष्णवेति मन्त्रेण पवित्राण्यधिवासयेत्।।

प्रच्छाद्य च नवैर्वस्त्रैः दूर्वाक्षतसमन्वितम्।

सूत्रं स्पृष्ट्वा जपेन्मन्त्रं सूक्तं गोदानसंयुतम्।।

आत्मसूक्तं च जप्त्वैव वैष्णवं सूक्तमेव च।
एवं पञ्चदशसूक्तं जपेदुत्तममेव च।।

दशसूक्तं तु जप्त्वैव मध्यमं तु विचक्षणः।
अधमं पञ्चसूक्तानि जपेच्चैवाधमं बुधः।।

एवं कर्तुमशक्तश्चेत् वैष्णवं च जपेत्पुनः।

**प्र. ३२. ६४ - ६८**

यद्वैष्णवं समुच्चार्य पवित्रं शयनं चरेत्।
सूक्ष्मवस्त्रेण चाच्छाद्य चार्चयेत्पुष्पमक्षतम्।।

विष्णुसूक्तं च गोदानसूक्तं चैवात्मसूक्तकम्।

एकाक्षरादिसूक्तं च वैष्णवं सूक्तमेव च।।

नृसूक्तं रुद्रसूक्तं च दुर्गासूक्तं तथैव च।
सारस्वतं तथा सूक्तं रात्रिसूक्तमतः परम्।।

ऋतं च सत्यं जप्त्वैव सहस्रशीर्षमेव च।
श्रीभूसूक्तं च जप्त्वैव कारयेद्देशिकोत्तमः।।

दशानां चैव पञ्चानां सूक्तानां जप उत्तमम्।
मध्यमं दशसूक्तानां पञ्चानामधमं भवेत्।।

### ९.१२.२३ पञ्चदशसूक्तपरिचयः

**प्र. ३२. ११२ - १३६**

प्रीयतां भगवान्विष्णुः प्रार्थनासूक्तमुच्यते।।

'कनिक्रदा' दिमन्त्राश्च शाकुनं सूक्तमीरितम्।
'स्वस्ति नो मिमी' तेत्युक्त्या स्वस्तिसूक्तमिति स्मृतम्।।

'शुद्धा इमे पशव' इति गोसूक्तं समुदाहुतम्।
'ऋतं च सत्यं' चेत्यादि अघमर्षणमुच्यते।।

'अणोरणीया' नित्युक्त्वा सूक्तं प्रोक्षणमीरितम्।
'आपो हिरण्यवर्णाश्च पवमान' इति त्रयः।।

प्रोक्षणं सूक्तमिति तु केचिद्वैकल्पिकं जगुः।
'या जाता' इति मन्त्राश्च औषधीसूक्तमुच्यते।।

'कृणुष्व पाज' इत्यादि सूक्तं प्रतिसराह्वयम्।

('अतोदेवा' दि षड्भिस्तु वैष्णवं सूक्तमुच्यते।।)

अतो देवादि षण्मन्त्रा ष्षड्वैष्णवपदाह्वयाः।
'विष्णोर्नु' कादि षण्मन्त्रा विष्णुसूक्तमुदीरितम्।।

'सहस्रशीर्षा पुरुष' इति पौरुषसूक्तकम्।
'हिरण्यवर्णा' मित्यादि श्रीसूक्तं सर्वकामदम्।।

'भूमिर्भूम्ने' त्यादिमन्त्रा भूमिसूक्तमुदाहृतम्।
'उप श्वासय' इत्यादि दुन्दुभीसूक्तमुच्यते।।

'सुपर्णोऽसि गरुत्मा' नित्युक्तं सूक्तं च गारुडम्।
'हिरण्यगर्भ' इत्यादि ब्रह्मसूक्तमुदाहृतम्।।

'इन्द्रं वो विश्वत' इति इन्द्रसूक्तमिहोच्यते।
'अग्ने नयेत्या' दिषड्भिरग्निसूक्तं प्रचक्षते।।

'आयातु देव' इत्यादि यमसूक्तं प्रकीर्तितम्।
'नमस्सु ते निर्ऋते' सूक्तं नैरृतमुच्यते।।

'अस्तभ्ना द्यामृषभ' इति वारुणसूक्तकम्।
'पीवोन्नां रयि वृथस्सुमेथा' इति वायवम्।।

'अद्ध्यस्तिरोधा' इत्यादि कौबेरं सूक्तमुच्यते।
'स्तुहि श्रुतं गर्त' इति रुद्रसूक्तं प्रकीर्तितम्।।

'ओमासश्चर्षणी' त्यादि सूक्तं सारस्वतं भवेत्।
'विश्वजिते धन'| इति विश्वजित्सूक्तमुच्यते।।

'रात्रि व्यख्य' दित्यादि रात्रिसूक्तमुच्यते।
'जातवेदस' इत्यादिषड् दुर्गासूक्तमुच्यते।।

'आ गोदाना' दिति प्रोच्य गोदानं सूक्तमुच्यते।
'एकाक्षर' मिति प्रोच्य सूक्तमेकाक्षरादिकम्।।

'आत्मात्मा परमे' त्यादि आत्मसूक्तं प्रकीर्तितम्।
वैष्णवं विष्णुसूक्तं च पुरुषसूक्तमतः परम्।।

श्रीभूसूक्तं च पंचैतैः पंचसूक्तमिहोच्यते।
विष्णुसूक्तं नृसूक्तं च श्रीभूसूक्तमंतः परम्।।

एकाक्षरादिसूक्तं च पंचसूक्तं जगुः परे।
विष्णुसूक्तं नृसूक्तं च श्रीभूसूक्तं च वैष्णवम्।।

एकाक्षरादिसूक्तं च विष्णुगायत्रिया सह।
आहत्य सप्तभिश्चैतैस्सप्तसूक्तं समीरितम्।।

रुद्रसूक्तं ध्रुवसूक्तं दुर्गासूक्तं ततः परम्।
रात्रिसूक्तं तथा सूक्तं सारस्वतमपि क्रमात्।।

विश्वजित्सूक्तमथ च सहस्रशीर्षमित्यपि।
अघमर्षणसूक्तं च गोदानं सूक्तमेव च ।।

आत्मसूक्तेन संयुक्तं दशसूक्तमुदाहृतम्।
दशसूक्तं पञ्चसूक्तं कृत्वा संहृतमेव च।
एवं भवेत्पञ्चदशसूक्त संज्ञा प्रभाषिता।।

## ९.१२.२४ पवित्राणां शय्याधिवासे परिवारदेवार्चनम् वा. ४०

ऊर्ध्वे चक्रं च संपूज्य रक्षां चैव विशेषतः।
तस्यैव परितः कल्प्य कुर्यादावरणक्रमम्।।

देवदेवमलङ्कृत्य स्वस्तिकं भद्रकं तु वा।
ईशाने स्थाप्य कुम्भं च वस्त्रयुग्मेन वेष्टयेत्।।

तृतीयावरणे चैव आचार्यानर्चयेत्क्रमात्।
शान्तं च गरुडं चैव चक्रं शङ्खमतः परम्।।

न्यक्षं विवस्वतं चैव मित्रं चैव महीधरम्।
एवमित्यादिदेवानां धान्यपीठं पृथक्पृथक्।।

आयामं विस्तृतं चैव हस्तमात्रक्रमेण वै।
त्रिवेदिसहितं पीठमुन्नतं तु षडङ्गुलम्।।

यथालाभोन्नतं चैव पृथक् पीठं प्रकल्पयेत्।
ऊर्ध्वे कूर्चे तु निक्षिप्य प्रणवं मन्त्रमुच्चरन्।।

पाद्याद्यैरर्चयेद्विद्वान् अर्ध्यान्तं तु समर्चयेत्।
मुद्गान्नं कृसरान्नं च बलिं दत्वा तु सोदकम्।।

पादौ सम्प्रोक्ष्य मतिमान् कर्णे दक्षिणतः स्पृशेत्।

**वि. ७८. ४७२**

पश्चादूर्ध्वे सर्वरक्षाचक्रं सम्पूज्य, तस्य परितः आवरणत्रयदेवानां प्रादक्षिण्यक्रमेणाभ्यर्च्य, शान्त गरुड चक्र न्यक्षादि विमानपालानां धान्यपीठे कूर्चान्निधाय, पाद्याद्यर्घ्यान्तमभ्यर्च्य, मुद्गान्नकृसरैः बलिं दत्वा स्वपादं प्रक्षाल्य, दक्षिणे कर्णे स्पृष्ट्वा,

**प्र.३२. ६९ - ७१**

प्रागादिदिक्षु च तथा विदिक्षु च चतुर्ष्वपि।
क्रमाच्छान्तं खगाधीशं चक्रं शङ्खं तथैव च।।

विमानपालांश्चावाह्य सम्यगर्च्य विशेषतः।
मुद्गान्नं विनिवेद्यैव प्रणामं मुहुराचरेत्।।

सर्वरक्षाकरं चक्रं पवित्रोपरि चार्चयेत्।
निवेदयेत्तदान्नेन शान्तादीनां बलिं ददेत्।।

पादौ प्रक्षाल्य चाचम्य यथोक्तेन विधानतः।

### ९.१२.२५ पवित्रेषु देवावाहनम्

**वि. ७८. ४७२**

पश्चादग्निं प्रज्वाल्य तत्काले होतारमाहूय तं पादौ प्रक्षाल्य, आचम्य, सोदकं दक्षिणां दत्वा हौत्रं प्रशंस्य तत्काले देवमूर्तीरावाहयेत्।

### ९.१२.२६ पवित्रारोपणे बलिनिर्वापः

**वि. ७८. ४७३**

आलयं मण्डपं विष्णुसूक्तेन पुरुषसूक्तेन आवेष्ट्य, महाहविः, प्रभूतं वा यथाशक्ति निवेद्य पानीयाऽऽचमनं दत्वा, कर्पूरजातीफलैलालवङ्गसहितं क्रमुकफलताम्बूलं मुखवासं दत्वा बलिं निर्वपेदिति पूर्ववद्यजमानाचार्यशिष्याणां कृतं देवसन्निधौ दत्वा

### ९.१२.२७ पवित्रारोपणप्रयोगः

**वा. ४०**

अग्निं प्रज्वाल्य तत्काले होमश्चैव सुहूयताम्।
पादौ प्रक्षाल्य चाचाम्य सोदकं दक्षिणां ददेत्।।

हौत्रं प्रशंस्य तत्काले मूर्तीनावाहयेत्क्रमात्।

विष्ण्वादि पञ्चमूर्तींश्च देव्योर्मूर्ती समाचरेत्।।

जुष्टाकारं च कृत्वा तु मूर्तिहोमं सुहूयताम्।
पूर्वोक्तेनैव विधिना स्नापयित्वा हरिं परम्।।

अष्टोत्तरशतैर्वापि कलशैः स्नापयेद्बुधः।
मित्रस्सुपर्ण इत्युक्त्वा प्लोतेन परिमृज्य च।।

तेजोवत्सव इत्युक्त्वा वस्त्रं दद्याद्विचक्षणः।
पूर्वोक्तेन क्रमेणैव अलङ्कृत्य प्रयत्नतः।।

एकबेरविधानं चेत् ध्रुवे सर्वं समाचरेत्।
प्रादुर्भावं च सर्वेषामाविर्भावं तथैव च।।

नीलोत्पलं च मन्दारं द्विकर्णं च विशेषतः।
नन्द्यावर्तं च पुन्नागं श्वेतदूर्वाक्षतैर्युतम्।।

स्थलारविन्दं श्रीपत्रं विष्णुक्रान्त्यतसीस्तथा।
तुलसीं चैव सर्वेषां गृहीत्वैव समर्चयेत्।।

सप्तविंशतिभेदेन क्रमेणैवार्चयेत्तथा।
धूपं दीपं च तत्रैवमर्घ्यमाचमनं ददेत्।।

अधिवासपवित्राणि देवमारोपयेद्बुधः।
देव्यादीनां तथा चैव सूत्रमारोपयेत्तथा।।

शालादिसर्वदेवानां आरोपणमथाचरेत्।
आलयं मण्टपं चैव सूत्रेणावेष्टयेद्बुधः।।
आरोपणस्य मन्त्रेण विष्णुसूक्तं समुच्चरन्।।

द्विद्रोणं तदर्धं वा यथाशक्ति निवेदयेत्।
पानीयाचमनं दत्वा बलिं दत्वा तु पूर्ववत्।

यजमानस्य शिष्याणां कृतं सूत्रं ददेत्पुनः।
तद्देवसन्निधौ दद्याद् यागशालां प्रविश्य च।।

अग्निं प्रज्वाल्य तत्काले हुत्वा तद्देशिकोत्तमः।
श्रीभूसूक्तं ततो हुत्वा विष्णुसूक्तमतः परम्।।

हुत्वा तु पौरुषं सूक्तं सूत्रसंख्यां स्मरेदिति।
ग्रन्थिसंख्यां विशेषेण प्रत्येकं वैष्णवं यजेत्।।

प्रत्येकं शतमावर्त्य ह्यष्टोत्तरशतं क्रमात्।
ईंकारादीनि हुत्वा तु पारमात्मिकसंयुतम्।।

अष्टाशीतिं यजेत्पश्चात् पर्षद्धोमं पृथक्पृथक्।
हुत्वा तु सर्वदेवत्यं धात्रादींश्च सुहूयताम्।।

एवं कर्तुमशक्तश्चेत् विष्णुसूक्तमथाचरेत्।
देवानां देवमन्त्रेण हुत्वा चैव विशेषतः।।

एवं तु यजनं सर्वमुत्तमोत्तममुच्यते।
हौत्रादि सर्वमूर्तीनां पारमात्मिकमुच्यते।।

सर्वदेवं विना कुर्यात् मध्यमं तु विदुर्बुधाः।
अन्यच्छिष्टसमायुक्तं अधमं चेति कीर्त्यते।।

त्रिविधं चैवमालोच्य यजमानस्य चेच्छया।
चतुर्दिशं चतुर्वेदैः क्रमादध्ययनं चरेत्।।

नृत्तैर्गेयैश्च वाद्यैश्च स्तोत्रध्वनिसमायुतम्।
एवं घोषणसंयुक्तं रात्रिशेषं नयेत्क्रमात्।।

सूत्रे चैव पवित्रं यत्तुल्यार्थं तु विचक्षणः।
अनुक्तं चैव तत्काले युक्तितः कारयेत्क्रमात्।।

**वि. ७८. ४७३**

**प्र. ३२. ७२- ७४**

हौत्रं प्रशंस्य विधिवत् आवाहनमथाचरेत्।।

जुष्टाकारं च कृत्वा तु जुहुयाच्च यथाक्रमम्।
हावयेत्पञ्चभिः सूक्तैः तत्तद्दैवत्यमेव च।।

पश्चादग्निं विसृज्यैव रात्रिशेषं नयेद् गुरुः।

**क्रि.३१. ६९ - ७७**

द्रव्याधिदेवानभ्यर्च्य विधानैश्च विधायकः।
कल्पयेन्मण्डपप्राच्यां पौण्डरीकं सलक्षणम्।।

तत्र नित्याग्निमाधाय परिषिच्य च पावकम्।
जुहुयाद्वैष्णवैर्मन्त्रैः आज्येन चरुणा तथा।।

हौत्रं प्रशंस्य चावाह्य देवानभ्यर्च्य पूर्ववत्।
निरुप्याज्याहुतीर्हुत्वा परितस्तान् समर्चयेत्।।

वैष्णवं विष्णुसूक्तं च पौरुषं सूक्तमेव च।
जुहुयात् श्री-मही-सूक्तं पञ्चवारुणसंयुतम्।।

जयाद्यैरपि हुत्वा तु यद्देवादींस्तथैव च।

सहस्रमाहुतीनां च सर्वदैवत्यमेव च।।
मिन्दाहुती च विच्छिन्नं पद्महोमं ततः परम्।
पारमात्मिकसंयुक्तं ईंकारादींस्तथैव च।।

रात्रिसूक्तं च जुहुयात् सूक्तं सारस्वतं तथा।
हिरण्यगर्भमित्यादि ब्रह्मसूक्तं तथैव च।।

रुद्रमन्त्रद्वयेनापि, विश्वजित्सूक्तसंयुतम्।
नमोवाचे समुच्चार्य शन्नोवात इतीर्य च।।

देवदेवं स्मरन्नेव रात्रौ होमं समाप्य च।

### वि. ७८. ४७४, ४७५

देवं प्रणम्य, पार्श्वे प्राङ्मुख उदङ्मुखो वा समासीनः देवार्हतस्तिष्ठन् प्रणम्यानुमान्य, निर्माल्यमादाय, विष्वक्सेनं समाराध्य, भूरग्नयेति वेदिं प्रक्षाल्य, देवेशं नित्यपूजाविधानेनाभ्यर्च्य स्नानासने सूत्रं समारोप्य आपो, हिरण्य, पवमानैः प्रोक्ष्य, देवेशमलङ्कृत्याभ्यर्च्य हविर्निवेद्य मुखवासं दत्वा, पश्चाद्यागशालां प्रविश्य, नित्यहोमं हुत्वा, चरुणाऽऽज्येन वैष्णवं विष्णुसूक्तं, श्री भूमिदेवत्यं हुत्वा, प्रत्येकं समिदाज्येन सहितमष्टाविंशति पर्यायेण जुहोति। देवस्य पादौ स्पृष्ट्वा तत्सर्वं होमयेत्।

(ततः) पुण्याहं वाचयित्वा, तत्काले प्रतिसरं विसृज्य, अधिवासपवित्रमुत्थाप्य ध्वजैः छत्रैः पिञ्छचामरैः भक्तैश्च परिवृतो नृत्तगेयसमायुक्तं तोयधारापुरस्सरमालयं प्रदक्षिणीकृत्य, देवस्य प्रमुखे धान्यपीठे पवित्रं संस्थाप्य, यजमान आचार्यभक्तैस्सह देवं प्रणम्य, कनिष्ठादिक्रमेण पवित्राणि आचार्यो हस्तादादाय, अतोदेवादिना कनिष्ठमारोपयेत्। विष्णोः कर्माणीति मध्यममारोप्य, विष्णोर्नुकमित्युत्तममारोपयेत्।

पश्चाद् गन्धपुष्पाद्यैरभ्यर्च्य वनमालां गृहीत्वा पुरुषसूक्तं समुच्चरन् देवमारोपयेत्।

कौतुकस्नपनोत्सवबलिबेराणां सूत्रमारोपयेत्।

प्रादुर्भावानामप्येवं पूर्वोक्तमुच्चरन्, तद्युक्तस्य (तस्य तस्य) कृतं पवित्रमारोपयेत्।

परिषद्देवानां तत्तन्मन्त्रमुच्चार्य पवित्रमारोपयेत्।

अग्नौ अग्निं दूतमित्यग्निकुण्डप्रमाणं सूत्रमारोप्य, दण्डप्रणामं कृत्वा, यथाभागोपदंशं घृतगुडदधिफलमधुयुक्तं पञ्चहविः प्रभूतं निवेद्य पानीयाचमनकर्पूराद्यैर्मुखवासं दत्वा, बलिमाराध्य, बलिभ्रमणं कृत्वा, अग्निं विसृज्य, पुण्याहान्ते आचार्यादीन् सम्पूज्य, सुवर्णपशुरत्नादीनि सोदकं दक्षिणां दद्यात्।

**प्र. ३२. ७४ - ७९**

ततः प्रभाते धर्मात्मा स्नात्वा स्नानविधानतः ।।

नित्यपूजाविधेरन्ते देवेशं प्रार्थयेद् गुरुः।
अष्टोत्तरशतैर्देवं स्नापयेत्कलशैस्ततः ।।

अलङ्कृत्य च देवेशं धूपदीपादिकं ददेत्।
उद्यन्तमिति मन्त्रेण पवित्रं मूर्ध्नि धारयेत्।।

सर्ववाद्यसमायुक्तं तोयधारापुरस्सरम्।
प्रदक्षिणं शनैर्गत्वा देवाग्रे सन्निधाय च।।

सूर्यस्त्वेति च मन्त्रेण शतं जप्त्वा तु पल्लवम्।
आचार्यः सुप्रसन्नात्मा स्वात्मरक्षां विधाय च।।

विष्णुसूक्तं समुच्चार्य कनिष्ठादि च रोपयेत्।
पाद्याद्यैर्देवमभ्यर्च्य मुखवासान्तमादरात्।।

**क्रि. ३१. ७८ - ८७**

प्रातः स्नात्वाऽथ कृत्यानि यथाविधि समाचरेत्।
देवदेवं समुद्धृत्य निर्माल्यमपि शोधयेत्।।

ऐशान्यां मण्डलाच्छुभ्रे देवं संस्थाप्य पूर्ववत्।
अष्टोपचारैरभ्यर्च्य स्नापयेल्लवणादिभिः।।

इषे त्वोर्जे त्वेति जपन् स्नापयेत्सर्ववस्तुभिः।
पुरुषसूक्तं निमृज्याथ स्थापयेत्पूर्वविष्टरे।
अन्तः स्नानादिकं सर्वमेकबेरे समाचरेत्।।

वस्त्रोत्तरीयाभरणैः धातुभिश्च यथोचितम्।
पूर्वमन्त्रैरलङ्कृत्य पूजयित्वाष्टविग्रहैः।।

नारायणानुवाकेन कृत्वा सूत्राभिमर्शनम्।
कर्पूराद्यैश्च गन्धैश्च वासितं च परीमलम्।।

पूर्वोक्तेनैव मन्त्रेण दद्याद्देवस्य भक्तितः।
मूर्तीनां पुरुषादीनां पृथग् दद्यात् तदुत्तमम्।।

विष्णोरेकं तथा तेषामेकमेकं तु मध्यमम्।
सर्वेषामेकसूत्रं चेदधमं परिचक्षते।।

ग्रन्थिसूत्रं निवीतं च दद्याद्देवाय भक्तितः।
ध्रुवादीनां च सर्वेषामेवं सूत्रं च सन्ददेत्।।

स्त्रीदेवतानां सर्वासां दद्यात् सूत्रं निवीतकम्।
एवं देयं तु सर्वेषां शङ्खवाद्यपुरस्सरम्।।

### ९.१२.२८ पवित्रारोपणहोमः अशक्तविषयकः

**वि. ७८. ४७३**

एवं कर्तुमशक्तश्चेत् विष्णुसूक्तं पुरुषसूक्तं सर्वदेवानां मूर्तिमन्त्रं हुत्वा एवं यजेत उत्तमम्। हौत्रादि सर्वमूर्तीनां पारमात्मिकं सर्वदेवत्यं विना मध्यमम्। अन्यदुक्तमधमम्।

### ९.१२.२९ गृहार्चायां पवित्रारोपणहोमे विशेषः

**क्रि. ३१. ९६ - ९९**

गृहार्चना यदि भवेद् विशेषो होमकर्मणि।
विनैव सर्वदैवत्यं पारमात्मिकमेव वा।।

ईङ्कारादीन् विना सर्वान् यजेदौपासनानले।
ब्रह्मादीनां तु देवानां तत्तन्मन्त्रं शताष्टकम्।।

जयादींश्चैव कूश्माण्डान् पञ्चवारुणमेव च।
मिन्दाहुती च विच्छिन्नं जुहुयाद् व्याहृतीरपि।।

एतदेव विधानं स्यादन्यत्सर्वं च पूर्ववत्।

### ९.१२.३० पवित्रारोपणे पुष्पाञ्जलिदानादि

**वि. ७८. ४७३**

प्रागादिचतुर्दिक्षु चतुर्वेदानध्यापयेत्। पूर्वादिचतुर्दिक्षु दक्षिणवामयोर्वा आचार्य ऋत्विजश्च परात्परतरं गुह्यं सर्ववेदार्थसारभूतमष्टाक्षरं द्वादशाक्षरं विष्णुगायत्रीं जपन् पुष्पाञ्जलिं दत्वा, नृत्तगेयवाद्यैश्च रात्रिशेषं व्यपोह्य,

**९.१२.३१ पवित्रारोपणे चलबिम्बशायनम्**

**क्रि. ३१. ६६ - ६९**

रात्रिपूजावसाने तु स्नापनं चौत्सवं तु वा।।

परं रंहेति मन्त्रेण पीठादादाय चात्वरः।
स्वस्तिसूक्तं जपित्वा तु सर्वालङ्कारसंयुतम्।।

मण्डलात्पश्चिमे पीठे स्थापयित्वाऽष्टविग्रहैः।
समभ्यर्च्य निवेद्यैव बद्ध्वा प्रतिसरं तथा।।

पूर्ववच्छाययेद्देवं वेदानध्यापयेत्क्रमात्।

**९.१२.३२ पवित्रारोपणे उपचारसमर्पणादि**

**क्रि. ३९. ८७ - ९१**

एवं देयं तु सर्वेषां शङ्खवाद्यपुरस्सरम्।
अष्टोपचारैर्देवेशं समभ्यर्च्य यथाविधि।।

हवींषि पायसादीनि प्रभूतं च निवेदयेत्।
पानीयाचमनं दत्वा ताम्बूलं धनसंयुतम्।।

कुर्यात् पुष्पाञ्जलिं स्तोत्रैः नमेत्पञ्चाङ्गकं गुरुः।
सर्वालङ्कारसंयुक्तं ग्राममालयमेव वा।।

प्रदक्षिणं शनैः कृत्वा जीवस्थाने निवेशयेत्।
दद्यादाचार्यपूर्वेभ्यो दक्षिणां देवसन्निधौ।।

**९.१२.३३ पवित्रारोपणे मध्यमकल्पः**

**क्रि. ३१. ९१, ९२**

मध्यमे तु प्रकुर्वीत त्रिलोकीमण्डलं विना।।

धान्यपीठे पवित्राणि नववस्त्रोपरि न्यसेत्।
नित्याग्निकुण्डे जुहुयात् पौण्डरीकं विनाऽनलम्।।

**९.१२.३४ पवित्रारोपणे अधमकल्पः**

**क्रि. ३१. ९३**

स्नपनं शुद्धतोयेन केवलन्त्वधमे भवेत्।

**९.१२.३५ पवित्रारोपणे आचार्यसम्माननम्**

**प्र. ३२. १०९ - १११**

यजमानोऽपि शुद्धात्मा भक्तिनम्रः समाहितः।
आचार्यं पूजयेत्तत्र गन्धमाल्यानुलेपनैः।।

पञ्चाङ्गभूषणैश्चैव दुकूलैश्च नवैस्तथा।
ततो गुरुः प्रसन्नात्मा प्रयुञ्ज्यादाशिषस्तदा।।

तदुक्तं भगवत्प्रोक्तं प्रतिगृह्णीयुरादरात्।

**९.१२.३६ परदिनकृत्यम्**

**वा. ४१**

ततः प्रभाते धर्मात्मा स्नानार्घ्यादीनि कारयेत्।
देवालयं प्रविश्याथ क्रमाच्चैव प्रदक्षिणम्।।

पादौ प्रक्षाल्य चाचम्य ऊर्ध्वपुण्ड्रादि कारयेत्।
प्राणायामं ततः कृत्वा ह्यात्मसूक्तादिना चरेत्।
पूर्वोक्तेन विधानेन मातृकान्विन्यसेत्क्रमात्।।

देवपार्श्वे समासीनः प्राङ्मुखोदङ्मुखोऽपि वा।
बिम्बार्हं च तथा तिष्ठन् प्रणम्यैवानुमान्य च।।

तत्र संपूज्य निर्माल्यमादाय शान्तमर्चयेत्।
'भूरग्नये' ति मन्त्रेण वेदिं प्रोक्ष्यैव मन्त्रवित्।।

'नारायणाय विद्मे' ति पादे पुष्पं सुविन्यसेत्।
अन्येषां चैव देवानां निर्माल्यं शोधयेत्तथा।।

अवधूतेति मन्त्रेण मार्जयेद्धाम पूर्ववत्।
आशासुसप्त इत्युक्त्वा प्रोक्षणैश्चोपलिप्य च।।

श्वेतचूर्णैरलङ्कृत्य नित्यपूजां समाचरेत्।
नित्यपूजोक्तमार्गेण नैमित्तिकमथाचरेत्।।

स्नानकाले तु सर्वेषां सूत्रमादाय वै क्रमात्।
स्नानान्ते पुनरारोप्य प्रोक्षयित्वा विचक्षणः।।

आपोहिष्ठादिभिः ऋग्भिः प्रोक्षयेत त्रिभिः क्रमात्।
सौवर्णं पुष्पमित्यादि भूषणैरेव भूषयेत्।।

**९.१२.३७ पवित्रविसर्जनकालः**

**वि. ७८. ४७५**

एवं नवाहं सप्ताहं पञ्चाहं त्र्यहमेकाहं वा विशेषतोऽभ्यर्च्य, ब्राह्मणान्

वैष्णवान् सम्पूज्य, वैष्णवान् भोजयित्वा, सूत्रान् विसृज्य, निर्माल्यं संशोध्य, विष्वक्सेनं समाराध्य ददेत्। पुनः सोदकं दक्षिणां ददेत्। विपरीतं न कारयेत्।

**प्र. ३२. ४२**

नवाहं वाऽथ सप्ताहं पञ्चाहमथवा त्र्यहम्।

**वा.४१**

अब्दान्तमेवं सम्पूज्य उत्तमोत्तममुच्यते।
तदर्धं मध्यमं विद्यदधमं मासमिष्यते।।

अर्धमासं विशेषेण कृत्वा तद्देशिकोत्तमः।
पञ्चाहमेव सम्पूज्य कृत्वा चेदेवमुत्तमम्।।

त्रिरात्रमेव सम्पूज्य आचरेन्मध्यमं बुधः।

एकाहं चात्र सम्पूज्य अधमं चेति कीर्त्यते।
तन्निवेदितमन्नाद्यं दापयेत्सर्ववर्णिनाम्।।

पवित्रानाहरेद्यावत्तावद् ब्राह्मणभोजनम्।
स्वकुलं बन्धुवर्णं च श्रद्धाभक्तिसमन्वितः।।

पूजयेद्देवदेवेशमनन्तं पुरुषोत्तमम्।
वेदित्रयाणामारोपेदग्निकुण्डप्रमाणतः।।

मण्डलोद्धारविधिना भद्रमण्डलकं तथा।
मण्डलं सूत्रमारोपेत्तद्विष्णोरितिमन्त्रतः।।

कुम्भमारोपयेत्तत्र इदं विष्णुरिति ब्रुवन्।
मण्डलं विष्णुदैवत्यं परमात्मा तु कुम्भके।

पूर्वे तु वासुदेवं च दक्षिणे बलभद्रकम्।।

प्रद्युम्नः पश्चिमे चैव उत्तरे अनिरुद्धकम्।
एतान् देवान् तद्दिक्क्षु बाह्ये चैन्द्रादि अर्चयेत्।।

पद्मे पद्मिनि दैवत्यं कोष्ठे इन्दुस्तथैव च।
वर्तुलं भानुदैवत्यं पञ्चवर्णैरलङ्कृतम्।।

श्वेतं च विष्णुदैवत्यं पीतं पुरुषमेव च।
कृष्णं सत्याधिदैवत्यं रक्तमच्युतकं तथा।।
कुङ्कुमं चानिरुद्धं च पञ्चवर्णाधिदेवताः।।

तत्तन्नाम्ना समभ्यर्च्य एतैर्मन्डलमर्चयेत्।
कुम्भेषु ध्यानमाविश्य निष्कलं परमात्मकम्।।

कुम्भं मण्डलमध्ये तु अर्चयित्वाष्टा विग्रहैः।
सूत्रमारोपयेत्पश्चात् प्रभूतं च निवेदयेत्।।

इह लोके सुखान् विद्वान् सम्प्राप्यैव ततः परम्।
विसर्गदिसं यावत्तावच्चैव ततः परम्।।

पूजां कृत्वा तु होमान्ते पूण्याहं वाचयेत्ततः।
सूत्रान् सर्वान् विसृज्यैव निर्माल्यं शोधयेत्ततः।।

विष्वक्सेनं समाराध्य आचार्याय ददेत्पुनः।
सोदकं दक्षिणां दद्याद्विपरीतं न कारयेत्।।

एवं नवाहं सप्ताहं पञ्चाहं त्रियहन्तु वा।
एकाहं वा विशेषेण पवित्रोत्सवमाचरेत्।।

समाप्तिदिवसे चैव कुर्याद् ब्राह्मणभोजनम्।
अग्निं विसृज्य तत्काले यजमानयुतो गुरुः।।

## ९.१२.३८ आशौचादौ नियमाः

**वा.४१**

अङ्कुरार्पणकादूर्ध्वमवसानदिनादधः।
आशौचमाचर्यादीनां सूतकं प्रेतकं यदि।।

मार्जनेनैव शुद्धिः स्यात् पुनः कर्म समाचरेत्।
पवित्रान्याहरेद्यावत्तावद्दोषैर्न लिप्यते।।

नवभिः कलशैः स्नाप्य देवदेवं प्रणम्य च।
नित्यपूजोक्तमार्गेण विशेषं चात्र पूजयेत्।।

द्रोणैर्द्रोणार्धकैर्वापि देवेशाय निवेदयेत्।
पानीयाचमनं दद्यात् ताम्बलं च निवेदयेत्।।

वेददूषकपाषण्डपापरोगादिस्पर्शने।
अन्त्यजातिसमुद् भूतैःश्वकाकाद्यैर्विशेषतः।।

मण्डपादीनि संशोध्य तद्दोषमपहाय च।
मृद्भाण्डादीनि संत्यक्त्वा नवानि परिगृह्य च।।

पात्रं कांस्यादि सर्वेषां यथार्हं शोधयेद् बुधः।
मण्डपादीनि संशोध्य वास्तुहोमः सुहूयताम्।।

पर्यग्निपञ्चगव्याभ्यां संशोध्यैव विचक्षणः।
पूण्याहं वाच्य तत्काले महाशान्तिं च कारयेत्।।

ब्राह्मणान्भोजयित्वैव अन्येषां पूर्ववच्चरेत्।
अग्निं विसृज्य तत्काले यजमानयुतो गुरुः।।

वर्षेवर्षे समारोप्य ईप्सितं लभते ध्रुवम्।

देवदेवोपयुक्तं तु तत्सूत्रमपि भक्तितः।
अश्वमेधक्रतुफलं संप्राप्नोति न संशयः।।

### ९.१२.३९ आगमसङ्करप्रतिषेधः

**वा. ४१**

एवं कर्तुमशक्तते कुर्याद् बोधायनक्रमम्।।

सूत्रोक्तेन विधानेन सर्वं कृत्वा विचक्षणः।
आलयार्चा गृहार्चेति उभौ आरोपयेत्क्रमात्।।

बोधायनस्य सूत्रस्य सूत्रं विखनसा कृतम्।
किञ्चिद्भेदं तयोस्तत्र दोषो नैवात्र संशयः।।

तस्मात्सर्वप्रयत्नेन गृहे देवालयेऽर्चयेत्।
अन्यत्र वैदिकादीनि नाचरेत्तत्र सङ्करम्।।

तत्र सङ्करदोषेण राजा राष्ट्रं विनश्यति।
तस्मात्सर्वप्रयत्नेन द्वयोरत्रैव कारयेत्।।

### ९.१२.४० पवित्रारोपणफलम्

**क्रि. ३१. ९३ - ९६**

एवं यः कुरुते भक्त्या पवित्रारोपणं हरेः।।

सर्वाभीष्टमवाप्नोति सर्वदानफलं लभेत्।
सर्वपापविनिर्मुक्तः कीर्तिमान् लभते श्रियम्।।

संवत्सरार्चनफलं लब्ध्वा सायुज्यमाप्नुयात्।
देवदेवोपयुक्तं तत् सूत्रं मर्त्यो बिभर्ति यः।।

अश्वमेधायुतफलं संप्राप्नोति न संशयः।

**वा. ४१**

एवं क्रमेण कर्तव्यं विष्णोस्सायुज्यमाप्नुयात्।
महापातकनाशं च त्रिषु कालेषु विन्दते।।

वर्षे वर्षे समारोप्य ईप्सितं लभते ध्रुवम्।
पवित्रं देवदेवस्य यो जनः शिरसा वहेत् ।।

तस्य कायगतं पापं तत्क्षणादेव नश्यति।
इह लोके सुखी भूत्वा अन्ते वैकुण्ठमाप्नुयात्।।

**वि.७८. ४७५**

य एवंकृतेन पवित्रारोपणेन देवेशं यजेदब्दं, तदेव सम्पूर्णं भवति, सर्वान् कामानवाप्नोति विष्णुलोकं स गच्छतीत्याह मरीचिः।

**प्र. ३२. १११, ११२**

एवं कुर्वीत प्रत्यब्दं पवित्रारोपणं हरेः।।
इहलोके सुखी भूत्वा स याति परमां गतिम्।

***

# १३. द्वात्रिंशद् अपचाराः

## ९.१३.१ द्वात्रिंशदपचाराः संक्षेपेण

**प्र. ३६. १ - ११**

अपचारास्तथा विष्णोर्द्वात्रिंशत्परिकीर्तिताः।
यानैर्वा पादुकैर्वाऽपि गमनं भगवद्गृहे।।

देवोत्सवाद्यसेवा चाप्रणामं च तदग्रतः।
एकहस्तप्रणामश्च तत्पुरस्तात्प्रदक्षिणम्।।

उच्छिष्टे चैव चाशौचे भगवद्वन्दनादिकम्।
पादप्रसारणं चाग्रे तथा पर्यङ्कबन्धनम्।।

शयनं भोजनं चैव मुधाभाषणमेव च।
उच्चैर्भाषा वृथाजल्पो रोदनाद्यं च विग्रहः।।

निग्रहोऽनुग्रहश्चैव स्त्रीषु साकूतभाषणम्।
अश्लीकथनं चैवाप्यधोवायुविमोक्षणम्।।

कम्बलावरणं चैव परनिन्दा परस्तुतिः।
शक्तौ गौणोपचारश्चाप्यनिवेदितभक्षणम्।।

तत्तत्कालोद्भवानां च फलादीनामनर्पणम्।
विनियुक्तावशिष्टस्य प्रदानं व्यञ्जनादिषु।।

पृष्ठीकृत्यासनं चैव परेषामभिवन्दनम्।
गुरौ मौनं निजस्तोत्रं देवतानिन्दनं तथा।।

अपचारांस्तु विविधानीदृशान् परिवर्जयेत्।
अपचारेष्वनन्तेषु सत्स्वन्येषु प्रमादतः।।

क्षमस्वेत्यर्थनैवैका निष्कृतिर्निरुपद्रवा।
अन्यथा यदि कुर्वाणः प्रमादात् ज्ञानतोऽथवा।।

स याति नरकान् घोरान् सन्ततं भृशदारुणान्।

### ९.१३.२ द्वात्रिंशन्नरकाः

**प्र. ३६. ११ - ३४**

ये तु स्मरणमात्रेण भवन्ति हृदयच्छिदः।।

द्वात्रिंशन्नरकास्ते तु कीर्त्यन्ते ब्रह्मवादिभिः।
रौरवध्वान्तशीतोष्णतापाम्बुजमहाम्बुजाः।।

कालसूत्रोऽष्टमो ह्येते नरका इति विश्रुताः।

सूच्यग्रकालखड्गाश्च क्षुरधाराम्बरीषकाः।।

तप्ताङ्गारमहादाहौ संतापश्चेति केचन।
भवन्त्यष्टसु भीभत्सा महाशब्दा भयानकाः।।

लाक्षाप्रलेपमांसादनिरुच्छ्वसनसोच्छ्वसाः।
युग्माद्रिशाल्मलीलोहप्रदीपक्षुत्पिपासिकाः।।

कृमीणां निचयश्चैव राजानः परिकीर्तिताः।
लोहस्तम्भोऽथ विण्मूत्रे तथा वैतरणी नदी।।

तामिस्रश्चान्धतामिस्रः कुम्भीपाकोऽथ रौरवः।
महापदानुगामी च राजराजेश्वराह्वयः।।

त्रयस्त्रिंशत्पुटेष्वर्धं पार्थिवं चार्धमायसम्।
तन्मध्ये नरका घोरा बहुशस्तमसि स्थिताः।।

तेषां नरकभेदानामष्टाविंशतिकोटयः।
एतेषां दारुणानां तु नरकाणां पतिः स्थितः।।

कूश्माण्ड इति विख्यातः प्रलयार्कानलद्युतिः।
करालवदनः क्रुद्धो वृत्तकोटरलोचनः।।

टङ्कपाणिस्तथाभूतैर्भूतैर्भूयोभिरावृतः।
पापास्त्वेतेषु पच्यन्ते नराः कर्मानुरूपतः।।

यातनाभिर्विचित्राभिरापापप्रक्षयान्तकम्।
प्रायश्चित्तोज्क्षिता दृप्ता निजधर्मपराङ्मुखाः।।

परधर्मरताश्चोराः पतन्ति नरकाग्निषु।
महापातकिनः कल्पं तिष्ठन्ति नरकाग्निषु।।

मन्वन्तरं पातकिनो देवब्रह्मस्वहारिणः।
उपपातकिनो मर्त्या देवदेवाग्नियज्वनाम्।।

द्विजगोगुरुधर्माणां निन्दका ब्रह्मणो दिनम्।
अन्ये चतुर्युगं मर्त्यास्तदर्धं च नराधमाः।।

तिष्ठन्ति नरके घोरे निजपापानुरूप्यतः।
द्यूतस्त्रीविषयासक्ता ये धर्मविकलाः खलाः।।

पतन्ति तेषु घोरेषु नरकेषु नराधमाः।
न शृण्वन्ति च ये मूढाः सदुक्तं धर्मगौरवम्।।

'प्रत्यक्षं केन तद्दृष्टं प्रत्युते'ति वदन्ति च।
कामलोभाभिभूताश्च बिडालव्रतिनस्तथा।।

पापिष्ठाः कर्महीनाश्च जिह्वोपस्थपरायणाः।
यतिनिन्दापरा ये च क्षेत्रतीर्थादिदूषकाः।।

पतन्ति तेषु ते मर्त्या विवशाः पापबन्धनाः।
इहानुभूय निर्दिष्टमायुर्मर्त्यास्स्वयम्भुवा।।

निमित्तं किञ्चिदासाद्य विमुच्यन्ते कलेवरैः।
लभन्ते ते पुनर्देहं यातनीयं स्वकर्मजम्।।

तन्मात्रगुणसंपन्नं सुखदुःखोपभोगदम्।
पापाः पापक्षयो यावत्पच्यन्ते नरकाग्निषु।।

आ मलप्रक्षयाद्वह्नौ ध्मायन्ते धातवो यथा।
यावन्तो जन्तवस्स्वर्गभूपातालेषु सर्वतः।।

तावन्त एव घोरेषु सन्त्यधो नरकाग्निषु।

### ९.१३.३ अष्टाविंशतिकोटिनरकाः

**प्र.३६. ३४ - ७६**

अष्टाविंशतिरेवोक्ताः क्षितेर्नरककोटयः।
सप्तमस्य तलस्याधो घोरे तमसि संस्थिताः।
घोराख्या प्रथमा कोटिस्सुघोरतलसंस्थिता।।

अतिघोरा महाघोरा घोरघोरा च पंचमी।
षष्ठी तरलताराख्या सप्तमी च भयावहा।।

अष्टमी कालरात्री च नवमी च भयोत्कटा।
दशमी तदधश्चण्डा महाचण्डा ततोऽप्यधः।।

चण्डकोलाहला चान्या प्रचण्डा नरकाधिका।
पद्मा पद्मवती भीमा भीमभीषणनायका।।

कराला विकराला च वज्रा विंशतिका स्मृता।
त्रिकोणा पञ्चकोणा च सुदीर्घा परिवर्तुला।।

सप्तभौमाष्टभौमा च दीप्ता यामेति चाष्टमी।
इत्येता नामतः प्रोक्ता घोरा नरककोटयः।।

अष्टाविंशतिरेवैताः पापानां यातनात्मनाम्।
तासां क्रमेण विज्ञेयाः पञ्चपञ्चैकनायकाः।

प्रत्येकं सर्वकोटीनां नामतस्तान्निबोधत।
रौरवः प्रथमस्तेषां रुदन्ते यत्र देहिनः।।

महारौरवको यत्र महान्तोऽपि रुदन्ति च।
तमश्शीतं यथा चोष्णं पञ्चाद्या नायकास्स्मृताः।।

सुघोरस्सुतपस्तीक्ष्णः पद्मस्संजीवनश्शतः।
महामांसो विलोमश्च सुभीमश्च कटङ्कटः ।।

तीव्रवेषी करालश्च विकरालः प्रकम्पनः ।
महापद्मःसुपद्मश्च कालवक्रश्च गर्जनः।।

सुचीमुखस्सुनेमिश्च खादकस्सुप्रपीडनः।
कुम्भीपाकस्सुपाकश्च चक्रकश्चातिदारुणः।।

अङ्गारराशिभवनमसृक्पूयहूदस्तथा।
तीक्ष्णायस्तुण्डशकुनिर्महासंवर्तकस्तथा।।

सुतप्ताब्जस्सुरलोपश्च पूतिमांसो द्रवत्रपु।
उच्छ्वासश्च निरुच्छ्वासो सुदीर्घः कूटशाल्मली।

दरीष्टस्सुमहानादःप्रभावस्सुप्रभावनः।
ऋक्षमेषवृकाश्शल्यसिंहव्याघ्रगजाननाः।।

श्वसूकराजमहिषखरमेषहयाननाः।
ग्रहकुम्भीरनक्रास्याः सर्पकूर्मास्यवायसाः।।

गृध्रोलूकजलूकाश्च शार्दूलकपिकर्कटाः।
गन्धकः पूतिवक्रश्च रक्ताक्षः पूतिमृत्तिकः।।

कणधूमस्तुषाग्निश्च कृमीणां निचयस्तथा।
अमेध्यश्चाप्रतीकारो रुधिरान्नस्य भोजनम्।।

लालाभक्षमभक्षश्च सर्वभक्षश्च दारुणः।
जङ्कटस्सुविलासश्च विकटः कटपूतनः।।

अम्बरीषः कटाहश्च कष्टा वैतरणी नदी।
सुतप्तलोहशयनमेकपादप्रतप्तकम्।।

असितालवनं घोरमस्थिभङ्गप्रपीडनम्।
तिलातसीक्षुयन्त्राणि कूटपाशप्रमर्दनम्।।

महाचुल्ली सुचुल्ली च तप्तलोहमयी शिला।
पर्वतक्षुरधाराख्यं तथा च मलपर्वतः।।

मूत्रविष्ठान्धकूपेषु क्षाररूपेषु पातनम्।
मुसलोलूखलं यन्त्रं शिलाशकललाङ्गलम्।।

तालपत्रासिगहनं महामशकमण्डपम्।
सम्मोहनोऽस्थिभङ्गश्च तप्तशूलमयोगुडः।।

बहुदुःखं महादुःखं कश्मलं शमलं मलम्।
हालाहलो विरूपश्च सुरूपश्च तमोऽनुगः।।

एकपादस्त्रिपादश्च तीव्रवीचिश्च रन्तिमः।
अष्टाविंशतिरेवैते क्रमशः पञ्चकाः स्मृताः।।

कोटीनामानुपूर्व्येण पञ्चपञ्चैव नायकाः।
रौरवाद्यं च वीर्यं च शतमेकन्तु सर्वतः।।

चत्वारिंशत्समधिकं महानरकमण्डलम्।
तेषु पापाः प्रपच्यन्ते नराः कर्मानुरूपतः।।

यातनाभिर्विचित्राभिराकर्मप्रक्षयाद् भृशम्।
सुगूढं हस्तयोर्बद्ध्वा तप्तशृङ्खलया नराः।।

महावृक्षाग्रशाखासु गम्यन्ते यमकिङ्करैः।
डोलिताश्चातिवेगेन निस्संज्ञा यान्ति योजनम्।

अन्तरिक्षस्थितानां च लोहभारशतं ततः।
पादयोर्बध्यते तेषां यमदूतैर्महाबलैः।।

तेन भारेण महता भृशमाताडिता नराः।
आख्यान्तस्स्वानि कर्माणि तूष्णीं तिष्ठन्ति विह्वलाः।।

ततस्तप्तैरग्निवर्णैर्लोहदण्डैस्सकण्टकैः।
हन्यन्ते किङ्करैर्घोरैस्समन्तात्पापकारिणः।।

ततः क्षारेण दीप्तेन वह्नेरपि विशेषतः।
समन्ततः प्रलिप्यन्ते ताम्रेण च पुनः पुनः।।

द्रुतेनात्यन्तलिप्तेन क्षताङ्गा जर्जरीकृताः।
पुनर्विधाय चाङ्गानि शिरःप्रभृति च क्रमात्।।

वार्ताकवत्प्रपच्यन्ते तप्ततैले कटाहके।
विष्ठापूर्णे तथा कूपे कृमीणां निचये पुनः।।

मेदोऽसृक्पूयपूर्णायां वाप्यां क्षिप्यन्ति ते पुनः।
भक्ष्यन्ते कृमिभिस्तीव्रैर्लोहतुण्डैश्च वायसैः।।

श्वभिर्दंशैर्वृकैरुग्रैर्व्याघ्रैश्च विकृतैर्नरैः।
पच्यन्ते चरुवद्वाऽपि प्रदीप्ताङ्गारराशिषु।।

प्रोतास्तीक्ष्णेषु शूलेषु नराः पापेन कर्मणा।
शैलपीठैरथाक्रम्य घोरैः कर्मभिरात्मजैः।।

तिलवत् सम्प्रपीड्यन्ते चक्राख्ये नरके नराः।
पच्यन्ते चातितप्तेषु लोहभाण्डेष्वनेकधा।।
तैलपूर्णकटाहेषु सुतप्तेषु पुनःपुनः।
सर्वेन्द्रियाणि सम्बद्धय क्रमात्पापेन यातनाः।।

भवन्ति घोराः प्रत्येकं शरीरे तत्कृतेन च।

## ९.१३.४ पापफलभोगाः

### प्र. ३६. ७६ - १४२

ये शृण्वन्ति हरेर्निन्दां तेषां कर्णः प्रपूर्यते।।

अग्निवर्णैरयःकीलैस्तप्तैस्ताम्रादिकद्रुतैः।
त्रपुसीसारकूटाद्यैः क्षारेण जतुना पुनः।।

सुतप्ततीक्ष्णतैलेन वज्रलेपेन चान्ततः।
क्रमादापूर्यते कर्णो नरकेषु च यातनाः।।

अनुक्रमेण सर्वेषु भ्रमन्त्येतेषु यातनाः।
ये तु देवगृहं गत्वा तत्र सेवार्थमागताः।।

अथ वाऽन्यत्र तद्रूपा मदमोहपराजिताः।
परदारांश्च गच्छन्ति लुब्धाः स्निग्धेन चक्षुषा।।

गुरोः कुर्वन्ति भ्रुकुटिं क्रूरनेत्राश्च ये नराः।
सूचीभिरग्निवर्णाभिस्तेषां चक्षुः प्रविध्यते।।

क्षाराद्यैश्च क्रमात्सर्वैर्देहे सर्वाश्च यातनाः।
स्पर्शलोभेन ये मूढास्संस्पृशन्ति परस्त्रियः।।

तेषां तप्ताग्निवर्णाभिस्सूचीभिर्विध्यते करः।
ततः क्षारादिकैस्सर्वं शरीरमनुलिप्यते।।

यातनाश्च महाकष्टास्सर्वेषु नरकेषु च।
परिष्वजन्ति चात्युग्रं प्रदीप्तं लोहशाल्मलिम्।।

हन्यन्ते पृष्ठदेशेषु पुनर्भीमैर्महाबलैः।
दन्तुरेणातिकुण्ठेन क्रकचेन बलीयसा।।

शिरःप्रभृति पाट्यन्ते घोरैः कर्मभिरात्मजैः।
तेन तेनैव रूपेण हन्यन्ते पारदारिकाः।।

गाढमालिङ्ग्यते नारी ज्वलन्ती लोहनिर्मिता।
पूर्वाकारं ज्वलन्तं तं पुरुषं लोहनिर्मितम्।।

दुश्चारिण्यः स्त्रियो गाढमालिङ्गन्ति वदन्ति च।
किं प्रधावसि वेगेन न ते मोहोऽस्ति संप्रति।।

लङ्घितस्ते यथा भर्ता पापं भुङ्क्ष्व तथाऽधुना।
लोहकुम्भे विनिक्षिप्ताः सापिधाने शनैश्शनैः।।

मृद्वग्निना प्रपच्यन्ते स्वपापैरिव मानवाः।
उलूखलाद्यैः क्षोद्यन्ते प्रपीड्यन्ते शिलासु च।।

क्षिप्यन्ते चान्धकूपेषु दश्यन्ते भ्रमरैर्भृशम्।
कृमिभिर्भिन्नसर्वाङ्गाश्शतशो जर्जरीकृताः।।

सुतीक्ष्णक्षुरकूपेषु क्षिप्यन्ते तदनन्तरम्।
महाज्वाले च नरके पापाः पच्यन्ति सर्वतः।।

इतस्ततश्च धावन्ति दह्यमानास्तदर्चिषा।
पृष्ठेनानीय जङ्घे द्वे विन्यस्ते स्कन्धयोजिते।।

तयोर्मध्येन चाकृष्य बाहुपृष्ठेन गाढतः।
बद्ध्वा परस्परं सर्वं सुदृढं पापरज्जुभिः।।

पिण्डबद्धं दशन्त्येनं भ्रमरास्तीक्ष्णलोहजाः।
मानिनां क्रोधिनां चैव तस्कराणां च दारुणाः।।

पिण्डबद्धास्स्मृता याम्यमहाज्वाले च यातनाः।
रज्जुभिर्वेष्टिताङ्गाश्च प्रलिप्ताः कर्दमेन च।।

करीषवत्प्रपच्यन्ते म्रियन्ते तेन ते तया।
सुतीक्ष्णक्षारतोयेन कर्कशासु शिलासु च।।

आ पापसंक्षयात्पापा घृष्यन्ते चन्दनं यथा।
शरीराभ्यन्तरगतैः सन्ततं कृमिभिर्नराः।।

भक्ष्यन्ते तीव्रवदनैरादेहप्रक्षयाद् भृशम्।
कृमीणां निचये क्षिप्ताः पूतिमांसस्य राशिषु।।

तिष्ठन्त्युद्विग्नहृदयाः पर्वताभ्यन्तरार्दिताः।
सुतप्तवज्रलेपेन शरीरमुपलिप्यते।।

अधोमुखोर्ध्वपादाश्च वृतास्तप्यन्ति वह्निना।
वदनान्तः प्रविन्यस्तं सुप्रतप्तमयोगुडम्।।

ते खादन्ति पराधीना हन्यमानाश्च मुद्गरैः।
ये देवारामपुष्पाणि लोभात् सङ्गृह्य पाणिना।।

जिघ्रन्ति मूढमनसो शिरसा धारयन्ति च।
आरोप्यते शिरस्तेषां सुतप्तैर्लोहशङ्कुभिः।।

ततः क्षारेण दीप्तेन तैलताम्रादिभिः क्रमात्।
शरीरे च महाघोराश्चित्रा नरकयातनाः।।

बहुधोत्पाट्यते जिह्वा येऽसत्याप्रियवादिनः।
संदंशेन सुतप्तेन प्रपीड्योरसि पादतः।।

मिथ्यागमप्रवक्तुश्च जिह्वा चान्यविनिर्गता।
क्रोशार्धजिह्वाविस्तीर्णैर्हलैस्तीक्ष्णैः प्रपाट्यते।।

निर्भर्त्सयन्ति ये क्रूरा मातरं पितरं गुरुम्।
तेषां वज्रजलूकाभिर्मुखमादश्यते यतः।।

ततः क्षारेण ताम्रेण त्रपुणा सिच्यते पुनः।
द्रुतैरापूर्यतेऽत्यर्थं तप्तलोहैश्च तन्मुखम्।।

इतस्ततः पुनर्द्धावन् बद्ध्यते यमकिङ्करैः।
ये निन्दन्ति महात्मानमाचार्यं धर्मदेशिकम्।।

विष्णुभक्तांश्च सम्मूढास्तद्धर्मं चेह शाश्वतम्।
तेषामुरसि कण्ठे च जिह्वायां दन्तसन्धिषु।।

तालुन्योष्ठे च नासायां मूर्ध्नि सर्वाङ्गसन्धिषु।
अग्निवर्णास्सुतप्ताश्च त्रिशिखा लोहशङ्कवः।।

आरोप्यन्ते सुबहुशः स्थानेष्वेतेषु मुद्गरैः।
ततः क्षारेण तप्तेन ताम्रेण त्रपुणा पुनः।।

तप्तलोहादिभिस्सर्वैरापूर्यन्ते समन्ततः।
यातनाश्च महाचित्राश्शरीरस्यापि सर्वतः।।

निश्शेषनरकेष्वेवं भ्रमन्ति क्रमशः पुनः।
ये गृह्णन्ति परद्रव्यं पद्भ्यां विप्रं स्पृशन्ति च।।

देवोपकरणाङ्गं च ज्ञानं च लिखितं क्वचित्।
हस्तपादा घनैस्तेषामापूर्यन्ते समन्ततः।।

क्षारताम्रादिभिर्दीप्तैर्दह्यन्ते क्रमशः पुनः।
नरकेषु च सर्वेषु विचित्रा देहयातनाः।।

भवन्ति बहुशः कष्टाः पाणिपादसमुद्भवाः।
प्रदत्तां देवदेवस्य तन्नाम्ना पूजकस्य वा।।

पदार्थिनामथान्येषां हद्धाद्वृत्तिं हरन्ति ये।
ते वै नरककूपेषु पच्यमानास्स्वकर्मभिः।।

व्रजन्ति यातना भूयो नातियन्ति यमाङ्गणम्।
ये देवायतनारामवापीकूपमद्धाङ्गणम्।।
उपद्रवन्ति पापिष्ठा नृपास्तत्र वसन्ति च।
व्यायामोद्वर्तनाभ्यङ्गस्नानपानान्नभोजनम्।।

क्रीडनं मैथुनं द्यूतमशौचाद्याचरन्ति च।
ते वधैर्विविधैर्घोरैरिक्षुयन्त्रादिपीडनैः।।

निरयाग्निषु पच्यन्ते यावदाचन्द्रतारकम्।
देवायतनपर्यन्ते देवारामे च कुत्रचित्।।

समुत्सृजन्ति ये मूढाः पुरीषं मूत्रमेव वा।
तेषां शिश्नं सवृषणं हन्यते लोहमुद्गरैः।।

सूचिभिर्नेत्रपर्यन्तैरग्निवर्णैस्सकण्टकैः।
आरोप्यन्ते गुदे तेषां यावन्मूर्ध्नि विनिर्गतैः।।

ततः क्षारेण महता ताम्रेण त्रपुणा पुनः।
द्रुतेनापूर्यते गाढं गुदं शिश्नं च देहिनाम्।।

मनस्सर्वेन्द्रियाणां च यस्मादुक्तं प्रवर्तनम्।

तस्मादिन्द्रियदुःखेन जायते तत्सुदुःखितम्।।

अन्नपानमदत्तं यैर्मूढैर्नाप्यनुमोदितम्।
धने सत्यपि ये दानं न च यच्छन्ति तृष्णया।।

अतिथिं चापमन्यन्ते कालप्राप्तं गृहाश्रमे।
तेजोहीना रणे बद्धा हस्तपादावधारिताः।।

विस्तारिताङ्गाः श्शुष्यन्ति तिष्ठन्त्यब्दशतं नराः।
हस्तपादललाटेषु कीलिता लोहशङ्कुभिः।।

नित्यं च विकृतं वक्रं कीलकद्वयघाटितम्।
कृमिभिः प्राणिभिश्चोग्रैर्लोहतुण्डैश्च वायसैः।।

उपद्रव्यैर्बहुविधैर्मुखमन्तः प्रपीड्यते।
जिह्वा ततः प्रभिन्ना च गाढं शृङ्खलया पुनः।।

तिष्ठन्ति लम्बमानाश्च लोहाकारास्सुवर्तुलाः।
ततः स्वमांसमुत्कृष्य तिलमात्रप्रमाणतः।।

खादितुं दीयते तेषां सूच्यग्रेण च शोणितम्।
यथा निर्मांसतां प्राप्ताः कालेन बहुधा पुनः।।

ततः क्षारेण दीप्तेन तच्छरीरं प्रलिप्यते।
भिद्यन्ते वर्षधाराभिश्शुष्यन्ते वायुना पुनः।।

पुनस्तैलेन सिच्यन्ते सुतप्तेन समन्ततः।
इति चित्रविधैर्घोरैर्मथ्यमानास्स्वकर्मजैः।।

म्रियन्ते नैव पापिष्ठा यावत्पापस्य संक्षयः।

तस्मात्पापं न कुर्वीत चञ्चले जीविते सति।।

एवं क्लिष्टा विशिष्टाश्च सावशेषेण कर्मणा।
ततः क्षितिं समासाद्य जायन्ते देहिनः पुनः।।

स्थावरा विविधाः क्रूरास्तृणगुल्मादिभेदतः।
तत्रानुभूय दुःखानि जायन्ते कीटयोनिषु।।

निष्क्रान्ताः कीटयोनिभ्यो जायन्ते पक्षिणः क्रमात्।
संक्लिष्टाः पक्षिभावेन भवन्ति मृगजातिषु।।

मार्गं दुःखमतिक्रम्य जायन्ते पशुयोनिषु।
क्रमाद् गोयोनिमासाद्य जायन्ते मानुषे पुनः।।

व्युत्क्रमेणापि मानुष्यं प्राप्यते पुण्यगौरवात्।
ततो मनुष्यतां प्राप्य तत्तत्पापानुसारतः।।

संयुताः पापचिह्नैश्च वर्तन्ते प्राणिनस्ततः।

## ९.१३.५ देवाभिगमनम्।

**प्र.३६.१४२ - २६०**

स्नातो धृतोर्ध्वपुण्ड्रश्च प्रयतः शान्तमानसः।।

अव्यग्रश्चान्यकार्येषु गृहीत्वा शक्तितस्स्वयम्।
फलादीन्युपहाराणि गन्धान् सुमनसस्तथा।।

हिरण्यं हरिमुद्दिश्य येन सर्वाः कृता इमे।
उपहारादिभिस्सम्यगभिगच्छेज्जगद्गुरुम्।।

पत्रैः पुष्पैः फलैर्वाऽपि यथाशक्ति समर्पितैः।

अयत्नसुलभेनापि तोयेनापि स तुष्यति।।

पादचार्येव गच्छेत्तु देवालयमतन्द्रितः।
अशक्तोऽप्यथवा शक्त आढ्यो वा दुर्विधोऽथ वा।।

आधिराज्ये जगद्धातुरधिकारी समःस्मृतः।
न हि संहरते ज्योत्स्नां चन्द्रश्चण्डालवेश्मनि।।

न वा सौधेषु सम्राजां सुधाधाराः प्रवर्षति।
भोगायतनमेतेषामेकाकारं कलेवरम्।।

अनुगृह्णाति वै धाता तस्य नोच्चा चो विधिः।
देवतेह परंज्योतिरेक एव परः पुमान्।।

स एव बहुधा लोके मायया भिद्यते स्वया।
विष्ण्वाख्य स्वयं मायां प्रकृतिं व्यज्य स द्विधा।।

स्थितस्त्रिधा च सत्त्वादिगुणभेदात्प्रतीयते।
विष्णुब्रह्मशिवाख्योऽसौ स्थित्युत्पत्त्यन्तकृत्स्मृतः।।

विष्ण्वाद्या मूर्त्तयस्तस्य धर्मज्ञानादिभेदतः।
चतस्र एव विज्ञेया वेदवर्णयुगाश्रयाः।।

विष्णुश्च पुरुषस्सत्यो ह्यच्युतश्चानिरुद्धकः।

------------------------------

आरुह्य शकटं गच्छेद्यो विष्णोर्मन्दिरं नरः।
नारी वा बालको वाऽथ वृद्ध आतुर एव वा।।

तस्य पुण्यफलं नास्ति प्रेत्य रुग्णश्च जायते।
ये वाहयन्ति तान्मर्त्यान्नरा वा प्राणिनश्च ये।।

ते यास्यन्ति पदं विष्णोर्यस्मात्पादचरास्तु ते।
ये वाहयन्ति जन्तूंस्तांस्तेऽपि मूढाः पतन्ति वै।।

यस्तोदयति तानेव गमने मूढचेतनः।
स यामीर्यातनाः प्राप्य तोद्यते यमकिङ्करैः।।

पुनः पशुत्वमापन्नस्तोद्यते पशुभिर्नरैः।
यो वा भृतकदानेन वाहनेन तु मानवः।।

वाहयत्यथ वोह्येत सोऽपि यास्यति दुर्गतिम्।
अपारे दुर्गसंसारे कर्मबद्धे विशेषतः।।

स्वीयं कर्म समुत्सृज्य पतन्ति नरकेऽशुचौ।
ततः पशुत्वमापन्नाश्चिरं तिष्ठन्ति भूतले।।

पादुकामधिरुह्यापि यो देवालयमाव्रजेत्।
स पशुर्जायते प्रेत्य रोगी चेह प्रजायते।।

पादुकां वाहनं चापि योऽधिरुह्य विमूढधीः।
प्रणामं हरये कुर्यात्तस्य दूरतरो हरिः।।

देवदर्शनमुद्दिश्य नैवेदंविध आव्रजेत्।
अयत्नाद् गमने जातेऽप्यवरुह्य च वाहनात्।।

पादुकादि विमुच्यैव समुपस्पृश्य वारिणा।
प्रविशेत्प्रयतो भूत्वा प्राकारं प्रथमं पुनः।।
न विशेद्धाम देवस्य यावता वाहनादिभिः।
तादृशं पुरुषं दृष्ट्वा यथाशक्त्यवबोधयेत्।।

आद्यस्त्वेषोऽपचारस्स्याद्यत्नहार्यो भवेत्ततः।

श्मशानमध्ये गत्वा तु यो गच्छेद्देवतागृहम्।।

सप्तजन्मकृतात्पुण्यात्तत्क्षणान्मुच्यते नरः।
सार्गालीं योनिमाश्रित्य वसेज्जन्मत्रयं ततः।।

दरिद्रश्चैव मूर्खश्च भविष्यति त्रिजन्मकम्।
अन्यदेवगृहं गत्वा ह्यस्नात्वा यो व्रजेद् गृहम्।।

देवदेवस्य मोहात्तु तस्य पापं महद्भवेत्।
गृहाद्गृहं तथा गत्वा भिक्षार्थी क्षुधितस्स्वयम्।।

भिक्षामलब्ध्वा कुत्रापि दरिद्रो जायते नरः।
चत्वारि चैव जन्मानि तेषामन्ते च यो बुधः।।

चण्डालयोनिमाप्नोति जन्मानि दश पञ्च च।

### ९.१३.६ देवोत्सवसेवनम्

**प्र.३६. २६१ - २७३**

हरिं देवं तु संसेव्य वाहनस्थं द्विजोत्तमः।
यदन्यं सेवते वीथ्यां तत्काले वाहनस्थितम्।।

सोऽपि पापमवाप्नोति विष्णुध्यानेन शुद्ध्यति।
देवेशस्योत्सवो यत्र ग्रामे वा नगरेऽपि वा।।

पर्वताग्रे महानद्यास्तीरे दुर्गाटवीषु वा।
तत्र गच्छेन्नरो भक्त्या सेवेतोत्सवमादरात्।।

सह पुत्रैस्सहामात्यैस्सर्वैः परिजनैर्वृतः।

वैष्णवं क्रतुदेशन्तु गत्वा सेवेत मानवः।।

यथाऽर्हमुपयुञ्जीत स्वशक्तिं तत्क्रियासु च।
श्रुत्वा देवोत्सवारम्भं पङ्गुभावेन यो नरः।।

तिष्ठेत्स जन्मसाहस्रं पङ्गुरेव भविष्यति।
तद्भवेद्विफलं जन्म भूभारस्तस्य जीवितम्।।

देवेशस्योत्सवे सम्यग्वर्तमाने महाफले।
योऽन्यत्र व्यापृतस्तत्र न गच्छेद्दुर्मना नरः।।

न तस्य निष्कृतिः प्रोक्ता स पापी नरकं व्रजेत्।
अनाहुतोऽध्वरं गच्छेत्तथा गुरुकुलं व्रजेत्।।

योऽध्वरं गन्तुकामोऽत्र प्रतीक्षेतार्हणादिकम्।
तस्य पूर्वार्जितं पुण्यं तत्क्षणादेव नश्यति।।

देवोत्सवं तु यो मर्त्यो यतमानं तु सेवितुम्।
वारयेद्येनकेनापि हेतुना स तु दुर्मतिः।।

अफलस्सफलो वाऽपि पतत्येव न संशयः।
विष्णुपञ्चदिने वाऽपि पुण्याहेष्वितरेष्वपि।।

उपोषितस्तु श्रुत्वैव देवेशस्योत्सवं हठात्।
तत्क्षणाद्यो न गच्छेत्तु तस्य पापं महद्भवेत्।।

खट्वामास्थाय यश्शेते वर्तमाने तदुत्सवे।
आसीनःस्थित एवाऽत्र स यामीयातना व्रजेत्।।

### ९.१३.७ देवप्रणामः

**प्र. ३६. २७४ - २८४**

देवेशाभिमुखं गत्वा न कुर्याद्यो नमस्क्रियाम्।
स पापिष्ठतरो लोके निष्कृतिर्नास्य विद्यते।।

उत्क्रमिष्यन्ति यत्प्राणाः प्राणदे समुपस्थिते।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपादयेत्।।

सर्वेषां प्राणभूतोऽसौ भगवान् हरिरव्ययः।
प्राणिनश्चेतनास्सर्वेऽप्राण्येकः प्राणदोऽपरः।

अन्यथा चेन्महादोषः संक्षुभ्यन्ते च मानवाः।।
एकहस्तप्रणामेन यत्पापं न तदन्यतः।

हस्तौ द्वौ निर्मितौ धात्रा किं तेन सुकृतं भवेत्।
प्राञ्जलीकृत्य हस्तौ तु याचेत मधुसूदनम्।।

य एकेनैव हस्तेन प्रणमेन्मन्दधीर्हरिम्।
तस्य हस्तो भवेदेकः पश्चाज्जन्मशतैरपि।।

इह वै जायते पङ्गू रोगी चैव न संशयः।
किमिदं बहुलैश्चित्रैः करणैर्देहकल्पनम्।।

यद्येकैकं न चेत्तस्य कैङ्कर्यायोपयुज्यते।
किं स्वाधीनेन हस्तेन स्वाधीनं कर्म सेवितुम्।।

अशक्नुवानास्स्वातन्त्र्यहताः पापहता हताः।
एकहस्तप्रणामस्तु परिहार्यो विशेषतः।।

प्रणतं चैकहस्तेन यस्तु प्रत्यभिवादयेत्।

तावुभौ नरकं यातस्तयोर्यस्मात् समागमः।।
देवतास्तादृशं मूढं शपन्ति च विशङ्किताः।

### ९.१३.८ देवप्रदक्षिणम्

**प्र.३६. २८५ - २८९**

पुरस्ताद् यस्तु देवस्य कुर्यादात्मप्रदक्षिणम्।।

आत्महा स भवेत्पापस्स द्रुह्येदात्मनेऽबुधः।
पुरस्ताद्देवबिंबे तु दिव्यमङ्गलविग्रहे।।

वर्तमाने त्वनादृत्य न ह्यन्यस्य प्रदक्षिणम्।
यत्र मानसिकार्चा स्यात्तच्च मानसिकं भवेत्।।

अन्तर्यामी य एवास्ते हृदये निष्कलो हरिः।
स एव सकलो भूत्वा बिम्बे यत्सन्निधापितः।।

तस्मात्सकलपूजायां नैव कुर्याद्व्यतिक्रमम्।

### ९.१३.९ देवगृहे उच्छिष्टाशुचिप्रवेशनिषेधः

**प्र.३६. २८९ - ३३८**

न कदापि भवेत्प्राज्ञ उच्छिष्टः स्वेषु कर्मसु।
विण्मूत्रं पथि कृत्वा तु शौचं यावन्न चाचरेत्।।

उच्छिष्टस्तावदेव स्यादनर्हः सर्वकर्मसु।
नखरोमाणि यश्चैव केशास्थीनि तथैव च।
क्षिपेत्तु देवतागारे स भवेद् ब्रह्महा नरः।।

माक्षिकीं योनिमाश्रित्य जायते म्रियते पुनः।

सप्तजन्मानि तत्रैव व्रजेन्नरकमन्ततः।।

ताम्बूलं चर्वितं यस्तु प्रक्षिपेद्देवमन्दिरे।
स याति नरकं घोरं यावदाभूतसम्प्लवम्।।

ततो मुक्तौ महापापी शुनकोऽपरजन्मनि।
संस्थितस्त्रीणि जन्मानि वसत्येव न संशयः।।
निष्ठीवनकरो यस्तु मन्दिरे मधुविद्विषः।।

कृमिभक्ष्ये पतेद् घोरे नरके पापकृन्नरः।
श्लेष्मातकतरुर्भूत्वा जायते जन्मपञ्चकम्।
मूत्रयेन्मन्दिरे यस्तु केशवस्य विमूढधीः।।

स मूत्रगर्तनरके पतत्येव ह्यवाक्शिराः।
तस्मान्मुक्तस्तु रक्तादिनिम्बकद्रुममास्थितः।।

जनिष्यति न सन्देहस्सप्तजन्मसु सौकरीम्।
पुरीषं वाऽत्र कुर्वीत यो नरो भगवद्गृहे।।

स याति नरकान् घोरान् पर्यायेणैकविंशतिम्।
ततो मुक्तस्तु पापात्मा विष्ठायां जायते कृमिः।।

समीपे मन्दिरस्यापि सकृन्मूत्रं करोति यः।
स तिष्ठेद्रौरवे घोरे वर्षाणामयुतं शतम्।।

ततोऽपि मनुजो मुक्तो ग्रामसूकरजातिताम्।
ग्रामे जन्मशतं प्राप्य विष्ठाभूसूकरस्तथा।।

यस्तु रेतोविसर्गं च कृत्वा कामादकामतः।
अस्नातो देवतागारमियात्सद्यस्स नश्यति।।

यो यत्र देवतागेहे दन्तधावनमाचरेत्।
तथा निर्लेखयेज्जिह्वां स पापी नश्यति ध्रुवम्।।

तैलेनाभ्यक्तसर्वाङ्गः कषायोद्वर्तितस्तथा।
यो नरः प्रविशेद् गेहं देवस्य परमात्मनः।।

स याति गृहगोधात्वं नव जन्मानि पञ्च च।
अनुगम्य यथा प्रेतं याति देवालयं तु यः।।

आराधितुमथेच्छेद्वा स गच्छेन्नरकायुतम्।
बलिभुग्योनितां याति जन्मानि सुबहूनि वै।

भरणं तु तथा कृत्वा मृतकस्य विशेषतः।
मन्दिरं न प्रवेष्टव्यं प्रविष्टस्तु प्रणश्यति।।

चाण्डालीं योनिमाश्रित्य जन्मकृन्नव पञ्च च।
भविष्यति तथा भूयः पृथक् क्रूरोऽथ निष्ठुरः।।

भुक्त्वा श्राद्धं परगृहे यायाद्विष्णुगृहं तु यः।
अर्चयेद्वा विशेषेण चटको जायते खलः।।

तत्र जन्मशतं प्राप्य ततो गोधावपुर्गतः।
छायामाक्रम्य यो मोहाद्याति विष्णोस्तु मन्दिरम्।।

प्रदक्षिणमकुर्वन्वा यस्तिष्ठेन्मतिपूर्वकम्।
सोऽप्युच्छिष्टो भवेन्मूढस्तस्य पापफलं त्विदम्।।

तिष्ठेत्स कानने शून्ये कण्टकैर्बहुभिर्वृतः।
फलपुष्पादिहीनश्च श्मशाने शून्यवृक्षताम्।।

यज्ञसूत्रमधःकृत्य कर्णे कृत्वा विशेषतः।
अपसव्यं च धृत्वैव धृत्वा चैव निवीतवत्।।

न गच्छेद्देवतागारं न वा मुक्तशिखो नरः।
अकच्छः पुच्छकच्छश्च नग्नः कौपीनमात्रधृक्।।

रिक्तहस्तश्शून्यफालस्त्यक्तसंव्यान एव च।
खादन्नपि च ताम्बूलमुपहारादि भक्षयन्।।

देवालयं विशेन्नैव तस्य पापं महद्भवेत्।
दुराचारो हि पुरुषो नेहायुर्विन्दते महत्।।

त्रस्यन्ति चास्य भूतानि तथा परिभवन्ति च।
तस्मादाचारवानेव कुर्याद्वै वैदिकीः क्रियाः।।

अपि पापशरीरस्य ह्याचारो हन्त्यलक्षणम्।
आचारलक्षणो धर्मः सन्तश्चारित्रलक्षणाः।।

साधूनां च यथावृत्तमेतदाचारलक्षणम्।
अप्यदृष्टं श्रवादेव पुरुषं धर्मचारिणम्।।

स्वानि कर्माणि कुर्वाणं तं जनाः कुर्वते प्रियम्।
ये नास्तिका निष्क्रियाश्च गुरुशास्त्रातिलङ्घिनः।।

अधर्मज्ञा दुराचारास्ते भवन्ति गतायुषः।
विशीलधर्ममर्यादा नित्यं सङ्कीर्णमैथुनाः।।

अल्पायुषो भवन्तीह नरा निरयगामिनः।
लोष्टमर्दी तृणच्छेदी नखखादी च यो नरः।।

नित्योच्छिष्टस्संकुसुको न हायुर्विन्दते क्वचित्।
विष्णुस्थानसमीपस्थान् विष्णुसेवार्थमागतान्।।

श्वपचान् पतितान्वाऽपि स्पृष्ट्वा न स्नानमाचरेत्।
उत्सवे वासुदेवस्य यः स्नाति स्पर्शशङ्कया।।

स्वर्गस्थाः पितरस्तस्य पतन्ति नरकेऽशुचौ।
पिबेत्पादोदकं विष्णोर्गुरूणां वा विशेषतः।।

तत्र नाचमनं कुर्यात्तद्वत्सोमे द्विजोत्तमः।
अन्यदेवार्थसन्दिष्टैः पूजयेयुश्च ये हरिम्।।

सप्त जन्मानि पञ्चापि मण्डूकत्वं व्रजन्ति ते।
जन्मद्वयन्तु वै मूढाश्शूद्रतां यान्ति ते नराः।।

कुसुमानां निवेद्यानां गन्धमाघ्राति यो नरः।
स पूतिगन्धसंयुक्तः कुष्ठी चैव भवेद् ध्रुवम्।।

तदन्ते त्रीणि जन्मानि तादृशानि भवन्त्युत।

-------------------------------

जातकं मृतकं वापि यस्याशौचं विधीयते।।

अनर्हस्सर्वकर्मभ्यो स नेयाद्देवतागृहम्।
पुंप्रसूतौ स्मृतं पूर्वैस्सापिण्ड्यं सप्तपूरुषम्।।

कन्यकाजनने तद्वत्सापिंड्यस्तु त्रिपूरुषम्।
व्रतिनां सत्रिणां तद्वद्यतीनां ब्रह्मचारिणाम्।।

नाशौचं कथ्यते प्राज्ञैर्यथा शातातपोऽब्रवीत्।
व्रतसंकल्पमात्रेण व्रतित्वं व्रतिनो भवेत्।।

वृतमात्रस्त्वथर्त्विक्च सत्रे सत्री प्रकीर्तितः।
काषायदण्डमात्रेण यतित्वं च यतेर्मतम्।।

उपनीतो वसेन्ना वा तथा गुरुकुले क्रमात्।
ब्रह्माध्येति न वाऽध्येति ब्रह्मचारी कुमारकः।।

राजाज्ञाकारिणां तद्वद्राज्ञां च स्नातकस्य च।
ईदृशानामथान्येषामत्रान्तर्भाव ईरितः।।

न कुर्याच्च नमस्कारं नैव प्रत्यभिवादयेत्।
नार्पयेदुपहारांश्च तीर्थादीन्नापि सेवते।।

आशौची ब्राह्मणो यस्तु मोहाद्देवं प्रपूजयेत्।
सप्तजन्मसु दारिद्र्यमत्यन्तं समवाप्नुयात्।।

श्वानयोनिशतं प्राप्य ततश्चण्डालतामियात्।
यो भुक्त्वा देवतागारे निक्षिप्योच्छिष्टमत्र तु।।

गच्छेदन्यत्र वा प्रास्यात्सोऽपि मूढो विपद्यते।

### ९.१३.१० देवगृहे शयन निषेधः

**प्र.३६. ३३९ - ३४६**

यस्तु देवगृहद्वारे प्रसार्य चरणौ क्वचित्।।

शेते निद्राति सम्मोहात्स याति नरकायुतम्।
पुनश्च जन्म संप्राप्य नीचयोनिष्वनेकशः।

यातनाश्चानुभूयैव दौर्ब्राह्मण्यं व्रजेत्तु सः।
यस्तु देवगृहे मूढश्शयीत मदमोहितः।।

तत्रोच्छिष्टनिधानेन भृशं निश्वासमारुतैः।
दुर्गन्धी जायते मर्त्यो जायते जन्मपञ्चकम्।।

ततस्सूकरतां प्राप्य जन्मानि नव पञ्च च।
क्लिश्यते बहुभिः कष्टैर्न शयीत हरेर्गृहे।।
उपधानादिसहितं यस्तल्पमधितिष्ठति।।

देवालये विशेषेण प्राकारे वाऽपि मूढधीः।
स भवेद्दुर्भगश्चैव सर्पयोनिषु जायते।
सप्त पञ्च च जन्मानि ततो मानुषतां व्रजेत्।।

शयीत देवतागेहे व्याधितो यस्तु दुर्मतिः।
स भवेद्दुर्मना दीनः प्रेत्य चेह च जन्मनि।।

यः स्त्रिया सहितो मूढश्शयीत भगवद्गृहे।
स भवेद्दुरितष्षण्डस्सप्त जन्मानि पञ्च च।।

**९.१३.११ देवगृहे योगासननिषेधः**

**प्र.३६. ३४७ - ३५४**

योगिभिर्योगसिद्ध्यर्थमभ्यस्यन्ते विशेषतः।
आसनानि त्वसंख्यानि देवागारे न चाचरेत्।।

मन्त्रयोगपरैस्तद्वल्लययोगपरायणैः।
हठयोगिभिरेतानि क्रियन्ते राजयोगिभिः।।

स्वस्तिकं सर्वतोभद्रं सिद्धं सिंहासनं तथा।
सव्यं शूलं सुखं चैव गोमुखं गरुडं तथा।।

मयूरं मत्स्यमत्स्येन्द्रं मण्डूकं मुद्‍गरं मृगम्।
कुञ्जरं कुक्कुटं नागं काष्ठं क्रौञ्चं च कूर्मकम्।।

खड्‍गं च कामदहनं वैयाघ्रं वेणुकासनम्।
योन्यासनं वासकं च धीरं पद्मासनं तथा।।

वाराहं चैव पर्यङ्कं पतगासनमेव च।
त्रिपदं हस्तिकर्णं च हेममर्धासनं तथा।।

इत्यादीनामासनानामशीतिश्चतुरुत्तरा।
अन्यानि शास्त्रसिद्धानि यानि सन्ति विशेषतः।।

तान्यास्थाय तु देवाग्रे नोपतिष्ठेत बुद्धिमान्।

### ९.१३.१२ देवगृहे भोजननिषेधः

**प्र.३६. ३५५ - ३७१**

भुञ्जीयाद्देवतागारे यः पापस्स तु दुर्मनाः।
कुक्षिरोगार्दितो भूत्वा जन्मानि दश पञ्च च।
ततस्सृगालतां प्राप्य पतेद्धि नरकेऽशुचौ।।

यो वा मूढमतिर्मोहात्कारयेद् द्विजभोजनम्।
देवागारे विशेषेण स भवेन्निन्दितो जनः।।

गर्भागारे चान्तराले तथा चैवार्थमण्डपे।
महामण्डपमध्ये च नान्नमद्याद्विशेषतः।।

अन्नं पात्रे विनिक्षिप्य पुटपत्रादिनिर्मिते।
आपोशनं तु कृत्वैव यद्दद्याद्भोजनं तु तत्।।

न देवताप्रसादस्य गृहीतस्याञ्जलौ तथा।
न चैवापोशनं कुर्यात्कुर्याच्चेत्तदसम्मतम्।

यस्तु पानीयपात्राणि पीतान्यत्र तु विन्यसेत्।
स गच्छेन्नरकान् क्रूरान् यावन्त उदबिन्दवः।।

पाते तिष्ठन्ति शरदस्तावतीर्नात्र संशयः।
निवेदितं तु देवस्य देवस्याग्रे विशेषतः।।

प्रदद्यात्तु क्रमेणैव वर्णाश्रमविधानतः।
अश्नन्ति भक्तास्सर्वेऽपि गृहीत्वैवाञ्जलौ पुनः।।

ब्रह्मण्यदेवमुद्दिश्य पुरुषं ब्राह्मणप्रियम्।
नारायणमनाद्यन्तं विष्णुं सर्वेश्वरेश्वरम्।।

ब्राह्मणान् भोजयेद्यस्तु कर्मसाद्‌गुण्यसिद्धये।
तथा निष्कृतिनिष्पत्त्यै शास्त्रोक्तेन विधानतः।।

कारयेन्नोक्तदेशेषु कदाऽपि द्विजभोजनम्।
यस्त्वन्नं दापयेद्विप्रो द्विजेभ्यो भक्तिसंयुतः।

निवेदितं तु देवस्य संतुष्ट्यै स्वस्य तस्य च।
तस्य तुष्यति देवेश आदाता तु विपद्यते।।

दातुस्तु सकलं पापं मनोवाक्कायकर्मभिः।
बहुशस्सञ्चितं पूर्वमादाता समवाप्नुयात्।।

प्रसादोऽपि हि देवस्य परपाकरुचिं नरम्।
स जातु पावयेन्नैव पापयेत्पावयेन्न तु।।

यदृच्छालाभसन्तुष्टं यथा भक्तवरं तथा।
महिमानं प्रसादस्य योऽवजानाति मूढधीः।।

तेन भुक्तं भवेत्पापं दातुरेव न संशयः।
अयुतं ब्राह्मणानान्तु तर्पयित्वा तु यत्फलम्।।

तत्फलं नश्यति क्षिप्रमुच्छिष्टस्य कणेन तु।

## ९.१३.१३ अन्नविक्रयणनिषेधः

**प्र.३६. ३७१ - ३८०**

अथान्नविक्रये दोषः कथ्यते विधिवित्तमैः।।

अन्नविक्रयिणः पापा व्रजन्ति यमयातनाः।
प्रेत्य शृगालतां यान्ति नव जन्मानि पञ्च च।।

यस्त्वन्नं भगवद्गेहे विक्रीणाति विशेषतः।
चण्डालो जायते प्रेत्य क्षुधितश्च चरेन्मुहुः।।

विक्रीणते तु ये विप्रा वाणिज्ये दत्तचक्षुषः।
येऽप्यन्नमुपहारादि चेतरद्देवमन्दिरे।।

तेऽपि यान्ति महाघोरं नरकं भृशदारुणम्।
यत्र नैव भविष्यन्ति पानीयायोदबिन्दवः।।

कणमन्नस्य वा न स्यात्तप्यन्ते तत्र ते जनाः।
ये गृहीत्वा तदन्नादि भुञ्जते क्षुधिता जनाः।।

उपकुर्वन्ति ये वा तानुच्यन्तेऽभक्ष्यभोजनाः।
अन्नं प्राणा मनुष्याणां सर्वमन्ने प्रतिष्ठितम्।।

अन्नं ब्रह्मात्मकं विन्द्याद् विन्द्यादन्नमयीं तनुम्।।

अन्नं विक्रीणते ये तु प्राणविक्रयिणः स्मृताः।
तस्मात्सर्वप्रयत्नेन त्यजेत्तत्क्रयविक्रयौ।
न कुर्याद्देवतागेहेऽभ्युदयं श्राद्धभोजनम्।।

कुर्यान्न चापि श्राद्धादीन्विहायापि द्विजाशनम्।
तस्मात्सर्वप्रयत्नेन नाश्नीयाद्धरिमन्दिरे।।

**९.१३.१४ देवगृहे मुधा सम्भाषणादिनिषेधः**
**प्र.३६. ३८१ - ४१०**

मुधा संभाषते यस्तु प्रविश्य हरिमन्दिरम्।
स निधिं पुरतस्सिद्धं त्यक्त्वा भिक्षति काकिणीम्।।

यस्तु संभाषते व्यर्थं देवालयमुपाश्रितः।
सिद्धमन्नं परित्यज्य भिक्षामटति दुर्जनः।।

यन्मुहूर्तं क्षणं वाऽपि परमात्मा न चिन्त्यते।
सा हानिस्तन्महच्छिद्रं सा भ्रान्तिस्सा तु विक्रिया।।

दस्युभिर्मुषितेनेव दग्धेनेव दवाग्निना।
व्याधिभिः पीडितेनेव चाकृष्टेनेव मृत्युना।।

भीतेनेवोत्तमर्णेन धर्षितेनेव राजभिः।
मग्नेनेव महासिन्धौ हतेनेव च वात्यया।।

संपिष्टेनेव पाषाणैराक्रन्देद्यस्स मुच्यते।
सन्त्यनेके प्रदेशाश्च समयाश्च विशेषतः।।

लोकयात्राविनिष्पत्त्यै देहयात्रोपयोगिनः।
तस्माद्देवगृहं गत्वा नरो नाऽन्यपरो भवेत्।।

यत्प्रसङ्गे हरेर्नाम तन्महत्त्वं च नाप्यते।
स सर्वोऽपि मुधा प्रोक्तो मिथ्येत्येके वदन्ति तम्।।

नहि देवस्य पुरतः क्वचिदप्यनृतं वदेत्।
सत्यस्वरूपी भगवान् सत्यं तस्मै न गूहयेत्।।

सत्यमेव परं ब्रह्म सत्यमेव परं तपः।
सत्यमेव परो यज्ञस्सत्यमेव परं श्रुतम्।।

सत्यं देवेषु जागर्ति सत्यं धर्मतरोः फलम्।
तपो यज्ञश्च पुण्यं च देवर्षिपितृपूजनम्।।

अद्यो विधिश्च विद्या च सर्वं सत्ये प्रतिष्ठितम्।
सत्यं यज्ञस्तथा वेदास्सत्या देवी सरस्वती।।

व्रतचर्या तथा सत्यमोंकारस्सत्यमेव च।
सत्येन वायुरावाति सत्येनार्कः प्रकाशते।।

दहत्यग्निश्च सत्येन यायात् सत्येन सद्गतिम्।
पर्जन्यो धरणीभागे सत्येनापः प्रवर्षति।।

स्वाध्यायस्सर्ववेदानां सर्वतीर्थावगाहनम्।
सत्यं तु वदतो लोके तुलितं स्यान्न संशयः।।

अश्वमेधसहस्रं च सत्यं च तुलया कृतम्।
अश्वमेधसहस्रात्तु भारस्सत्ये विशिष्यते।।

सत्येन देवाः प्रीणन्ति पितरो ब्राह्मणास्तथा।
सत्यमाहुः परं ब्रह्म तस्मात्सत्यं न लोभयेत्।
ये सत्यनिरतास्सत्यशपथास्सत्यविक्रमाः।।

महात्मनो मुनिश्रेष्ठास्ते परां सिद्धिमाप्नुवन्।
दैवतैस्सह मोदन्ते स्वर्गे सत्यपरायणाः।।

अप्सरोगणसङ्कीर्णैर्विमानैः सञ्चरन्ति च।
वक्तव्यं च सदा सत्यं न सत्याद्विद्यते परम्।।

अगाधे विमले शुद्धे सत्यतीर्थे शुचिह्रदे।
स्नातव्यं मनसा युक्तैस्तत्स्नानं परमं स्मृतम्।।

देवार्थे वा परार्थे वा पुत्रार्थे वाऽऽत्मने तथा।
येऽनृतं नाभिभाषन्ते ते स्वर्गं यान्ति मानवाः।।

यस्सत्यवादी पुरुषो नानृतं परिभाषते।
संप्राप्य विरजान् लोकानुषित्वा शाश्वतीस्समाः।।

भगवद्भक्तियुक्तानां जायते श्रीमतां कुले।
साक्षिणस्सन्ति सर्वे ते देवता भास्करादयः।।

परीक्षन्ते च सर्वासु दशासु पुरुषं सदा।
न वाच्यमनृतं तस्मात्प्राणैः कण्ठगतैरपि।।

येऽनृतं ब्रुवते मूढाश्शपथानि च कुर्वते।
देवागारे विशेषेण ते प्रणश्यन्ति सान्वयम्।।

पुनर्जन्मशतं यान्ति कीटयोनिष्वनेकशः।
गीतवादित्रनृत्तादीन् पुण्याख्यानकथाश्च ये।।

लोपयन्त्यथ पारुष्यैर्मन्दिरे मधुविद्विषः।
ते यान्ति नरकं पापा जायन्ते नीचयोनिषु।।

तथा तेऽपि दुरात्मनो गार्दभीं योनिमाप्नुयुः।
तथान्ते च जनाः क्रूरा नव जन्मानि पञ्च च।।

अनिबद्धप्रलापान् ये कुर्वते देवमन्दिरे।
तेऽपि तित्तिरितां भूत्वा जायन्ते जन्मपञ्चकम्।।

## ९.१३.१५ देवगृहे देशभाषानिषेधः

**प्र.३६. ४११, ४१२**

देवभाषां परित्यज्य देशभाषासु यो नरः।
स्तुवीत देवतागेहे देवस्याग्रे विशेषतः।।

तस्य दोषो महानाशु नैव पूजाफलं भवेत्।

## ९.१३.१६ देवगृहेऽवैष्णवशास्त्रालापनिषेधः

**प्र.३६. ४१२ - ४२१**

असाराणि तु शास्त्राणि भूयांसि पृथिवीतले।।

यत्र देवस्य माहात्म्यकथनं न प्रपञ्च्यते।
तेषु शास्त्रेषु ये जाताःशास्त्रार्थाश्च विशेषतः।।

वादाश्च प्रतिवादाश्च संस्कारास्सर्व एव हि।
चित्रशिल्पा न संदेहो नरस्तेन न मुच्यते।।

सा विद्या या हरिं स्तौति सा क्रिया यत्तदर्चनम्।
याऽन्या यदन्यदखिलं दुष्टोदर्का हि जीविका।।

न हि देवगृहं गत्वा शास्त्रार्थैर्नीरसैर्नरः।
मुहूर्तं क्षपयेत्कालं तद्देवस्य विमानना।।

विशालं वाङ्मयं सर्वं सृष्ट्वा स्रष्टा हरिः प्रभुः।
तदन्तस्संप्रविश्यैव वाच्यवाचकभेदतः।।

विज्ञानाय मनुष्याणां विज्ञानघनविग्रहः।
सदोपकुरुते यस्मात्सर्वे भक्तवराः सदा।।

सर्वा वाचो विमुच्यान्याश्चिन्तयानाश्च सादरम्।
तन्महत्त्वकथागन्धदरिद्रं वाचनं तथा।।

पाठनं लेखनाद्यं च नैव कुर्याद् गृहे हरेः।
स भवेदक्षरद्रोही यस्तु कुर्याद्व्यतिक्रमम्।।

द्रुह्येत्स वाङ्मयायापि तस्माद्युक्ततरो भवेत्।

### ९.१३.१७ देवगृहे रोदनादिनिषेधः

**प्र.३६. ४२१ - ४२६**

यस्तु देवगृहं गत्वा रोदिति प्रणयाद्यथा।।

दुःखितः स्तौति वा देवं तत्स्यान्मानसिकं मलम्।
निर्वाणपरमं स्थानं म्लानेन मनसा तु यः।।

सेवते स न जानाति तद्विष्णोः परमं पदम्।
नारी वा पुरुषो वाऽपि गत्वा देवगृहं क्वचित्।।

न रोदेत्पातयेन्नाश्रु नैवान्यं रोदयेदपि।
यावन्त्यश्रूणि रुदतां पतेयुर्देवमन्दिरे।।

तावन्त्यब्दसहस्राणि ते वसन्ति यमालये।
अनुभूय पुनस्तत्र यातनास्तीव्रचोदनाः।।

प्राप्य तित्तिरितां कालं वसिष्यन्ति चिरं भुवि।

## ९.१३.१८ देवगृहे हिंसानिषेधः

**प्र.३६. ४२६ - ४५६**

नैवात्र हिंसां कुर्वीत प्राणिनां दुःखदां क्वचित्।।

अहिंसा वैदिकं कर्म ध्यानमिन्द्रियनिग्रहः।
तपोऽथ गुरुशुश्रूषा धर्मद्वारष्षडीरिताः।।

अहिंसापाश्रयं धर्मं दान्तो विद्वान् समाचरेत्।
त्रिदण्डं सर्वभूतेषु निधाय पुरुषश्शुचिः।।

कामक्रोधौ च संयम्य ततः सिद्धिमवाप्नुते।
अहिंसकानि भूतानि दण्डेन विनिहन्ति यः।।

आत्मनस्सुखमन्विच्छन् स प्रेत्य न सुखी भवेत्।
आत्मोपमस्तु भूतेषु यो वै भवति पूरुषः।।

त्यक्तदण्डो जितक्रोधस्स प्रेत्य सुखमेधते।
सर्वभूतात्मभूतस्य सर्वभूतानि पश्यतः।।

मुह्यन्ति मार्गे देवाश्च ह्यपदस्य पदैषिणः।
न तत्परस्य संदध्यात्प्रतिकूलं यदात्मनः।।

एष सांग्रहिको धर्मः कामादन्यः प्रवर्तते।
प्रख्यापने च दाने च सुखदुःखे प्रियाप्रिये।।

आत्मौपम्येन पुरुषः प्रमाणमधिगच्छति।
ऋषयो ब्राह्मणा देवाः प्रशंसन्ति विशेषतः।।

अहिंसालक्षणं धर्मं वेदप्रामाण्यदर्शनात्।
कर्मणा न नरः कुर्वन् हिंसां जातु विचक्षणः।।

वाचा च मनसा चैव ततो दुःखात्प्रमुच्यते।
चतुर्विधेयं निर्दिष्टा ह्यहिंसा ब्रह्मवादिभिः।।

एकैकतोऽपि विभ्रष्टा न भवेन्नात्र संशयः।
यथा सर्वश्चतुष्पाद् वै त्रिभिः पादैर्न तिष्ठति।।

तथैवेयं विशेषेण कारणैः प्रोच्यते त्रिभिः।
यथा नागपदेऽन्यानि पदानि पदगामिनाम्।।

सर्वाण्येवापिधीयन्ते पदजातीनि कौञ्जरे।
एवं लोकेष्वहिंसा तु निर्दिष्टा धर्मतः पुरा।।

न ह्यतस्सदृशं किंचिदिह लोके परत्र च।
यत्सर्वेष्विह भूतेषु दयाऽहिंसात्मिका तु या।।

न भयं विद्यते जातु नरस्येह दयावतः।
दयावतामिमे लोकाः परत्रापि तपस्विनाम्।।

अभयं सर्वभूतेभ्यो यो ददाति दयापरः।
अभयं सर्वभूतानि ददतीति जगौ श्रुतिः।।

क्षतं च पतितं चैव स्खलितं क्लिन्नमाहतम्।
सर्वभूतानि रक्षन्ति समेषु विषमेषु च।।

नैनं व्यालमृगा घ्नन्ति न पिशाचा न राक्षसाः।
मुच्यते भयकालेषु मोक्षयेद् यो भयेऽपरान्।।

प्राणदानात्परं दानं न भूतं न भविष्यति।
न ह्यात्मनः प्रियकरं किंचिदस्तीह निश्चितम्।।

अनिष्टं सर्वभूतानां मरणं नाम कथ्यते।
मृत्युकाले हि भूतानां सद्यो जायेत वेपथुः।।

व्याधिजन्मजरादुःखैर्नित्यं संसारसागरे।
जन्तवः परिवर्तन्ते मरणादुद्विजन्ति च।।

गर्भवासेषु पच्यन्ते क्षाराम्लकटुकै रसैः।
मूत्रस्वेदपुरीषाणां परुषैर्भृशदारुणैः।।

जाताश्चाप्यवशास्तत्र च्छिद्यमानाः पुनःपुनः।
हन्यमानाश्च दृश्यन्ते विवशा घातुका नराः।।

कुम्भीपाके च पच्यन्ते तां तां योनिमुपागताः।
आक्रम्य मार्यमाणाश्च त्रस्यन्त्यन्ये पुनः पुनः।।

नात्मनोऽस्ति प्रियतमः पृथिवीमनुसृत्य ह।
तस्मात्प्राणेषु सर्वेषु दयावानात्मवान् भवेत्।।

येन येन शरीरेण यद्यत्कर्म करोति यः।
तेन तेन शरीरेण तत्तत्फलमुपाश्नुते।।

अहिंसा परमो धर्मस्तथाऽहिंसा परो दमः।
अहिंसा परमं दानमहिंसा परमं तपः।।

अहिंसा परमो यज्ञस्तथाऽहिंसा परं फलम्।
अहिंसा परमं मित्रमहिंसा परमं सुखम्।।

सर्वयज्ञेषु वा दानं सर्वतीर्थेषु वाऽऽप्लुतम्।
सर्वदानफलं वाऽपि नैतत्तुल्यमहिंसया।।

अहिंस्रस्य तपोऽक्षय्यमहिंस्रो जयते सदा।
अहिंस्रस्सर्वभूतानां यथा माता यथा पिता।।

### ९.१३.१९ उपवासव्रतम्

**प्र.३६. ४५७ - ४६७**

तस्मादहिंस्रस्सततमुपवासव्रतं चरेत्।
फलमङ्गिरसाप्रोक्तमुपवासस्य विस्तरात्।।

त्रिरात्रं पञ्चरात्रं वा सप्तरात्रमथापि वा।
धान्यान्यपि न हिंसेत यस्स भूयादहिंसकः।।

नाश्नाति यावतो जीवांस्तावत्पुण्येन युज्यते।
आहारस्य वियोगेन शरीरं परितप्यते।।

तप्यमाने शरीरे तु शरीरे चेन्द्रियाणि तु।
तिष्ठन्ति स्ववशे तस्य नृपाणामिव किङ्कराः।।

निरुणद्धीन्द्रियाण्येव स सुखी स विचक्षणः।
इन्द्रियाणां निरोधेन दानेन च दमेन च।।

नरस्सर्वमवाप्नोति मनसा यद्यदिच्छति।
एवं मूलमहिंसाया उपवासः प्रकीर्तितः।।

कामान् यान्यान्नरो भक्त्या मनसेच्छति माधवात्।
व्रतोपवासनात्प्रीतस्तान् प्रयच्छत्यसौ हरिः।।

मासे मासे तथैकस्मिन्नेकस्मिन्नियतं चरेत्।
उपवासव्रतमिदं तस्यानन्तं फलं भवेत्।
एकादश्यां निराहारस्संपूज्य हरिमव्ययम्।।

तत्पादसलिलं तद्वत्तुलसीं च तदर्पिताम्।
पीत्वा च भक्षयित्वा च उपवासव्रतं चरेत्।।

उपवासदिने यस्तु तीर्थं श्रीतुलसीयुतम्।
न प्राश्नीयाद्विमूढात्मा रौरवं नरकं व्रजेत्।।

### ९.१३.२० देवगृहे कामक्रोधादिवर्जनम्

**प्र.३६. ४६८ - ४८३**

न हि देवगृहं गत्वा विवदेत नरः क्वचित्।
न तत् स्थानं विवादस्य तस्मात्तं दूरतस्त्यजेत्।।

मनोऽनवस्थितं यस्य स नालं पूजितुं हरिम्।
यस्यैव निर्मलं चित्तं सोऽर्हस्सर्वेषु कर्मसु।

रागाद्यपेतं हृदयं वागदुष्टाऽनृतादिना।
हिंसादिरहितः कायः केशवाराधने त्रयम्।।

रागादिदूषितं चित्तं नास्पदं कुरुते हरिः।
न बध्नाति पदं हंसः कदाचित्कर्दमाम्भसि।।

न योग्या माधवं स्तोतुं वाग्दुष्टा चानृतादिना।

तमसो नाशनायालं मेघच्छन्नो न चन्द्रमाः।।

हिंसादिदूषितः कायः प्रभवेन्नार्चने हरेः।
जनचित्तप्रसादाय यथाऽऽकाशस्तमोवृतः।।

मनोदोषविहीनानां न दोषस्स्यात्कथंचन।
अन्यथाऽऽलिङ्ग्यते कांता स्नेहेन दुहिताऽन्यथा।।

यतेश्च कामुकानां च योषिद्रूपेऽन्यथा मतिः।
अशिक्षयैव मनसः प्रायो लोकश्च वञ्च्यते।।

लालेत्युद्विजते लोको वक्त्रासव इति स्पृहा।
विशुद्धैः करणैस्तस्माद् व्रजेद्देवगृहं नरः।।

विवादः क्रोधजो यस्मात्तस्मात्तं परिवर्जयेत्।
क्रुद्धः पापं न कुर्यात्कः क्रुद्धो हन्याद् गुरूनपि।।

क्रुद्धः परुषया वाचा नरस्साधूनधिक्षिपेत्।
साधुसज्जनसन्तापः साधूनां च विमानना।।

दहत्यासप्तमं तस्य कुलं नात्र विचारणा।
वाच्यावाच्यं प्रकुपितो न विजानाति कर्हिचित्।।

नाकार्यमस्ति क्रुद्धस्य नावाच्यं विद्यते क्वचित्।
यस्समुत्पतितं क्रोधं क्षमया तु निरस्यति।।

यथोरगस्त्वचं जीर्णां स वै पुरुष उच्यते।
ते मान्याः पुरुषश्रेष्ठाः क्षमया क्रोधमुत्थितम्।।

निर्वापयन्ति ये नित्यं दीप्तमग्निमिवाम्भसा।

परापवादं न ब्रूयान्नाप्रियं च कदाचन।।

न मन्युः कश्चिदुत्पाद्यो महतां देवसन्निधौ।

### ९.१३.२१ निग्रहानुग्रहनिषेधः

**प्र.३६. ४८४ - ४८८**

स्वयं दत्तावधानस्तु देवकार्ये विशेषतः।
मन्येत भगवत्सर्गे स्वात्मानं चाप्यकिंचनम्।।
स एव भगवान् देवस्सर्वज्ञः सर्वशक्तियुक्।।

सर्वेशस्सर्ववित्सर्वो निग्रहानुग्रहे रतः।
तस्मान्नान्यस्य जात्वस्ति शक्तिः क्रोधप्रसादयोः।।

इति संचिन्त्य भूयोऽपि सर्वेष्वपि च जन्तुषु।
भगवत्सन्निधौ स्थित्वा आनृशंस्यं प्रयोजयेत्।।

यद्यद्भावि भवद्भूतं विन्द्यात्तत्तस्य चेष्टितम्।
यद्यहंकारमाश्रित्य स्वातन्त्र्यमदमोहितः।।

निग्रहेऽनुग्रहे वाऽपि शक्तिं स्वस्यावबोधयेत्।
स याति नरकं घोरं न दैवं तस्य मृष्यति।।

### ९.१३.२२ स्त्रीषु साकूतभाषणादिनिषेधः

**प्र.३६. ४८९ , ४९० , ५३९ - ५४७**

तथा स्त्रीणां विशेषेण त्याज्या स्यादतिसंगतिः।
देवतामन्दिरं प्राप्य कालेष्वन्येषु वा तथा।।

आयुर्यशस्तपोहानिः पुंसां स्त्रीष्वतिसङ्गिनाम्।
पुरुषेष्वतिसक्तानां तुल्या सा योषितामपि।।

बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति।
तस्मात् स्त्रिया भवेद्विद्वान्नातिसक्तः कथंचन।
तस्मात् स्त्रीषु न कर्तव्यः प्रसङ्गो देवतागृहे।।

तथैव परदारेभ्यो मनः प्रहिणुयान्न च।
परदारा न गन्तव्या नरैर्बुद्धिमभीप्सुभिः।।

नहीदृशमनायुष्यं लोके किंचन विद्यते।
यादृशं पुरुषस्येह परदारनिषेवणम्।।
यावन्तो रोमकूपाः स्युः स्त्रीणां गात्रेषु निर्मिताः।।

तावद्वर्षसहस्राणि नरकं पर्युपासते।
अतिसङ्गं त्यजेत्तस्माद्योषितां देवमन्दिरे।।

यैरसभ्यः पदैरर्थः पदेनैकेन वा तथा।
गम्यते कथनं तादृगश्लीलं परिवर्जयेत्।।

अश्लीलकथनाच्चैव भवेदुद्वेजनं नृणाम्।
भक्तानां भगवद्गेहे भवेच्चित्तमथाविलम्।।

निवर्तेत मनस्तत्र निविष्टं परमात्मनि।
तस्मादश्लीलमाभाष्य नरः पापकरो भवेत्।।

स तु चण्डालतां प्राप्य जायते जन्मनां शतम्।

### ९.१३.२३ देवगृहे व्याधितानां प्रवेशनिषेधः

**प्र.३६. ५४७ - ५५५**

आर्तो न प्रविशेद् गेहं देवस्य परमात्मनः।।

वायुभूते शरीरेऽस्मिन् वायुसंचारकर्मणि।
मलवायुविसर्गस्तु देवगेहे विशेषतः।।

पातयेत्पुरुषं सत्यमपि वेदान्तपारगम्।
तस्मादपानगन्धस्य विसर्गं नैव चाचरेत्।।

अथ वायुनिरोधे तु व्याधिकोपो भविष्यति।
तस्माद्वायुविसर्गं तु कुर्यादेवाविचारयन्।।

इति देवगृहं गन्तुं व्याधितो नैव चार्हति।
तथा कुष्ठी विशेषेण पापरोगार्दितास्समे।।

उद्वीक्षितुं च देवेशं मन्दिरे मधुसूदनम्।
अर्चितुं सेवितुं चापि दातुं द्रव्यचयं तथा।।

नार्हन्ति यस्मात्तत्सक्तं पापं सांक्रामिकं भवेत्।
यद्यन्यथा भवेत्सद्यस्स पापी संप्रजायते।।

जन्मानि नव पश्चापि जायते मलभुक् कृमिः।

### ९.१३.२४ देवगृहे कञ्चुकादिधारणनिषेधः

**प्र.३६. ५५५ - ५६०**

यदा विशेद् गृहं विष्णोस्सेवार्थं मधुविद्विषः।।

कृत्वोपवीतवत्सम्यगुत्तरीयं मनोहरम्।

सेवेत देवदेवेशमुपवीतः सदा शुचिः।।

कञ्चुकेनावृताङ्गस्तु न गच्छेद्धरिमन्दिरम्।
नैवाभिवादनं कुर्यान्नाभिवाद्यस्स उच्यते।।

उष्णीषी न च सेवेत नैव पाणौ धृतायुधः।
वस्त्रेणाच्छाद्य देहं तु कम्बलेनेतरेण वा।।

यो गच्छेद्वैष्णवं धाम यो वाऽपि प्रणमेद्धरिम्।
श्वित्री संजायते मूढो नव जन्मानि पञ्च च।।

क्षौमादिभिर्वा संवीतो यो नरः प्रणमेद्धरिम्।
चण्डालयोनितां याति नव जन्मानि पञ्च च।।

### ९.१३.२५ देवगृहे परनिन्दनादिनिषेधः

**प्र.३६. ५६१ - ५७०**

न जातु त्वमिति ब्रूयादापन्नोऽपि महत्तरम्।
त्वंकारो वा वधो वेति विद्वत्सु न विशिष्यते।।

परनिन्दा परस्यैव पुंसो निन्दा भविष्यति।
परनिन्दा च शास्त्रस्य परस्य तु विनिन्दिनम्।।

परनिन्दा भवेत्क्रोधात् क्रोधात्सद्यो विनश्यति।
निन्दया वै परेषान्तु निन्दितास्ते पुनस्स्मृताः।।

तस्मान्निन्दां परेषान्तु देवाग्रे परिवर्जयेत्।
तथा परस्तुतिं चैव विधिना संत्यजेन्नरः।।

परः परात्मा पुरुषः पुराणः प्रोच्यते तु यः।

तदग्रेऽन्यस्य देवस्य न स्तुतिं स्तावयेन्नरः।।

यस्तु सर्वेश्वरादन्यमधिकं तस्य चाग्रतः।
पूजयेद्यदि मन्येत पूजार्हं वा स नश्यति।।

सर्वं जगच्च तस्यैव स्वरूपं परमात्मनः।
तथाऽपि तत्तद्रूपेण तारतम्यजुषा पुनः।।

पूज्यते भगवान् भक्तैस्तत्र शास्त्रोदिता गतिः।
तस्माद्देवेश्वरादन्नायद्यत्किंचित् स्थाणुजङ्गमम्।।

पूजार्हं विद्यते वस्तु तद्धामनि विशेषतः।
तस्मात्पूजां स्तुतिं चान्यामितरेषामसंशयम्।।

त्यजेद्देवगृहे यस्तु सुखं मन्येत जीवितुम्।

**९.१३.२६ देवोपचारेषु शक्तिलोभनिषेधः**

**प्र.३६. ५७० - ५७५**

शक्तौ सत्यां विशेषेण यस्तु लोभादिना नरः।।

गौणैरर्चयते विष्णुमुपचारैरुदीरितैः।
न तस्य विद्यते पुण्यं स तूच्छास्त्रं प्रवर्तते।।

यावता कीर्त्यते शास्त्रे फलमाढ्यदरिद्रयोः।
तत्तच्छक्त्यर्पितैरेव यथार्हं च धनादिकैः।।

यथा तुष्यति देवेशो मुक्ताहारेण भूभुजाम्।
तथैव तुलसीदाम्ना दुर्विधस्यापि तुष्यति।।

तस्मात्कुर्वीत यत्नेन शक्तिलोभं न जातुचित्।

अन्यथा यदि कुर्वाणः फलं नैव प्रपद्यते।।
प्रेत्य मार्जारतां प्राप्य जायते जन्मपञ्चकम्।

**९.१३.२७ विष्णोरनिवेदितान्नभक्षणनिषेधः**

**प्र.३६. ५७५ - ५९१**

विषं प्राश्नाति सम्मूढो यस्त्वस्मै पचते नरः।।

योऽद्यादन्नं कणं वाऽपि यद्विष्णोरनिवेदितम्।
स भवेद् ब्रह्महा भूयः स भुङ्क्ते पूयशोणितम्।।

यत्पिबेच्च यदश्नीयात् यच्च जिघ्रेच्च धारयेत्।
अनुलिम्पेच्च यत्तत्तन्निवेद्याग्रे मधुद्विषे।।

तन्निवेदितशेषं तु भुञ्जीयाद्वोपयोजयेत्।
विष्णोर्निवेदितं यस्तु न भुङ्क्ते मनुजाधमः।।

कल्पकोटिशतेनापि निष्कृतिर्नास्य विद्यते।
निवेदितं तु यद्विष्णोर्भक्तेभ्यस्तस्य दापनात्।।
प्रीयते भगवान् देवस्तत्परस्तु भवेन्नरः।
निवेदितं यदि ब्रूयादुच्छिष्टमिति मन्दधीः।।

स तु दुर्गतिमासाद्य विन्दते यमयातनाः।

-------------------------------

विभूतिं समुपाश्रित्य यस्यानन्तस्य शाश्वतीम्।।

समृद्धा धरणी सेयं सशैलवनकानना।
या च भूयांसि लोकेऽस्मिन्नुत्पादयति सन्ततम्।।

ओषधीर्निखिलास्तद्वत्पुष्पाणि च फलानि च।
तस्यानृण्यस्य हेतोर्वै यतेत विधिना नरः।।

यस्तु नार्पयते विष्णोस्तत्तत्कालोद्भवानि तु।
सस्यानि चौषधीस्तद्वत्फलानि कुसुमानि च।।

संभृतानि यथाशक्ति स भवेद् ब्रह्महा नरः।
नवानि काले जातानि सस्यादीनि विशेषतः।।

ध्यायन्ति देवदेवेशमभिगन्तुं यतन्ति च।
कदर्थयन्तो ये मूढास्तेषामभ्यर्थनं परम्।।

औदासीन्येन तिष्ठन्ति स्वयं वाऽप्युपयुञ्जते।
ते यान्ति नरकान् घोरान् कृतघ्ना यान्ति यान् बहून्।।

शपन्त्यौषधयस्सर्वास्तस्माद्भक्त्या विशेषतः।
नवं सस्यं फलं पुष्पं दधि क्षीरं घृतं मधु।।

यदर्हमर्पणे सर्वमग्रे तस्मै समर्पयेत्।
लोभान्मोहादथाज्ञानाद्य उच्छिष्टं निवेदयेत्।।

देवेशाय विशेषेण स भवेत्पातकी नरः।
उच्छिष्टमन्यदेवस्य यो देवाय निवेदयेत्।।

सोऽपि चण्डालतां प्राप्य नश्येदेव न संशयः।
निवेदितं तु देवस्य य उच्छिष्टेन योजयेत्।।

देवानामितरेषां वा मनुष्याणामथापि वा।
स पापी जन्मसाहस्रं श्वानयोनिषु जायते।

## ९.१३.२८ देवं पृष्ठीकृत्यासननिषेधः

**प्र.३६. ५९२, ५९३**

न हि देवगृहं गत्वा पृष्ठीकृत्यासनं चरेत्।
देवाभिमुख एव स्याद्भक्तस्सर्वात्मना नरः।।

न पृष्ठं दर्शयेज्ञातु देवाग्रे हितचिन्तकः।
पार्श्वतस्तु चरन्नेव निवर्तेतालयं प्रति।।

## ९.१३.२९ देवगृहेऽन्यप्रणामनिषेधः

**प्र.३६. ५९४ - ६००**

नैवान्यं प्रणमेज्ञातु प्रविश्य हरिमन्दिरम्।
स हि सर्वेश्वरश्शेषी यस्तत्रास्ते रमाधवः।।

पूजार्हश्च प्रणामार्हः पूजार्हस्तत्र नेतरः।
यस्तथा प्रणमेन्मूढस्स याति नरकायुतम्।।
चण्डालयोनिमासाद्य भजते यातना मुहुः।।

---

यस्तु देवगृहं प्राप्तान् वैष्णवान् भगवत्प्रियान्।
आचार्यमृत्विजश्चाथ पूजकान् परिचारकान्।।

नार्चयेन्मौनमास्थाय स विनश्यति सान्वयः।
यदिष्टं याजकेभ्यस्स्यात्पूरणायैव तस्य तु।।

भक्ताः परिचरेयुश्च विशेषाद् ग्रामवासिनः।
अन्यथा चेन्महादोषस्सर्वेषां च विपद्भवेत्।।

### ९.१३.३० देवगृहे स्वात्मसंमाननिषेधः

**प्र.३६. ६०० - ६१२**

आत्मानं यो विशेषेण स्तौत्यहंकारभावितः।।

अनादृत्य गुरून् दैवमनिबद्धं च संवदेत्।
अवलिप्तो न जानाति दोषमात्मनि संगतम्।।

कुलविद्यातपस्सम्पत्प्रमुखैर्गर्वितो नरः।
न सुखं न च सौभाग्यं येनात्मा स्तूयते स्वयम्।।

तस्मादात्मस्तुतिं कृत्वा नरः पतति निश्चयम्।
ततो जन्मशतं प्राप्य मृगयोनौ विशेषतः।।

जायते म्रियतेऽभीक्ष्णं तस्य पापं महद्भवेत्।
यस्तु देवगृहं गत्वा वाञ्छत्यपचितिं जनः।।

स तु तित्तिरितां याति नव जन्मानि पञ्च च।
देवेशस्य तु सेवार्थं वर्णानामानुपूर्वशः।।

अधिकारः समाख्यातस्तत्क्रमं न विमानयेत्।
विशन्ति गर्भगेहे तु ये वैखानससूत्रिणः।।

गर्भागारे प्रवेष्टव्यो न ह्यवैखानसः क्वचित्।
अन्तराले तथा येषां स्थानं तत्तु प्रवक्ष्यते।।

अन्ये द्विजाश्च तिष्ठन्ति यथा स्यादाश्रमक्रमः।
ते द्विजास्तत्स्त्रियश्चापि सेवन्ते तत्र संगताः।।

क्षत्रजाता विशेषेण स्थित्वा चैवार्थमण्डपे।
देवेशमभिसेवन्ते तदीया याश्च योषितः।।

संगताः शूद्रजाताश्च प्रतिलोमभवाश्च ये।
महामण्डपमास्थाय सेवन्ते पुरुषोत्तमम्।।

अनुलोमभुवश्चैव ये चान्ये म्लेच्छजातयः।
गोपुराद्बाह्यतः स्थित्वा सेवन्ते मन्दिरं हरेः।।

तारतम्यमिदं ज्ञात्वा सेवेत सततं हरिम्।

### ९.१३.३१ देवनिन्दानिषेधः

**प्र.३६. ६१२ - ६१७**

देवतानिन्दनं कुर्याद्यस्स पापी न मुच्यते।।

अन्यदेवसमं यस्तु मन्यते पुरुषोत्तमम्।
चण्डालयोनितामेति नव जन्मानि पञ्च च।।

अपह्नुत्य पुनर्देवांस्तद्द्रव्यादि हरेत्तु यः।
स भवेद्देवहा सत्यं जायते श्वादियोनिषु।।

तिरस्कृत्य तथा देवान् भगवच्छास्त्रमेव च।
कर्माणि स्वेच्छया कुर्यात्सोऽपि स्याद्देवहा नरः।।

कथायां कथ्यमानायां देवस्य मधुविद्विषः।
अनादृत्य च ये यान्ति ते नराः पापकारिणः।।

तोयहीनेऽतिरौद्रे च वने वै शून्यवृक्षताम्।
जायन्ते सप्त जन्मानि ततश्चण्डालतां ययुः।।

**९.१३.३२ देवगृहाधिपत्ये दोषाः**

**प्र.३६. ६१८ - ६३५**

देवेषु गोषु विप्रेषु देवागारेषु चैव हि।
वहेन्नैवाधिपत्यं यन्नासावृद्धिमवाप्नुयात्।।

दोषाश्च बहुलास्तस्मिन्नाधिपत्ये स्मृता बुधैः।
कामतोऽकामतश्चापि सर्वं तस्य विचेष्टितम्।।

पापायैव भवेत्तस्माद्भूतिकामस्तु तत् त्यजेत्।
सेवार्थिनां सकाशात्तु बलात्कारेण यः प्रभुः।।

गृह्णीयात्तु करं सद्यः पतेत्स सह तेन च।
देवस्य सन्निधौ भक्तैर्भक्त्या यत्तु समर्प्यते।।

पत्रं फलं वा मूलं वा स्वर्णं वासांसि चेतरत्।
दायाद्यमर्चकानां तु यो मोहादपनिह्नुते।।

स्वयं वाऽप्युपयुञ्जीत स पापी नरकं व्रजेत्।
विश्राणयन्ति हरये यद्भक्ता भक्तिभाविताः।।

तन्नाम्ना पूजकानेव जानन्ति फलभागिनः।
स्थिरजङ्गमयोः पूजा यतस्सम्पादिता भवेत्।।

तस्माद्भगवतो नाम्ना दत्तं यद्देवमन्दिरे।
विहायाभरणादीनि वासांस्यन्यपरिच्छदम्।।

देवालङ्कारयोग्यानि मूल्यवन्ति विशेषतः।
अर्चका एव गृह्णीयुः प्रतिबध्नीत नेतरः।।

यस्त्वधीकारगर्वेण देवागारमुपाश्रितः।

अकाले सेवितुं चेच्छेत्सोऽपि यास्यति दुर्गतिम्।।

अथवा सेवितुं चेच्छेत्कारणेनापि केनचित्।
उक्तेष्वेव तु कालेषु सेवेत मतिमान्नरः।।

अन्त्यार्चनावसाने यत् कवाटो बध्यते ततः।
पुनरुद्घाटनं यावत्प्रत्यूषे च भविष्यति।।

तावन्नैव हरिं सेवेदकालस्स विशेषतः।
प्रत्यूषाद्यन्त्यकालान्तपूजनेऽपि तु मन्त्रतः।।

तत्तत्काले कवाटस्य बन्धने विहितेऽपि च।
न तदा तावती हानिरवबद्धेऽप्यमन्त्रकम्।।

अथार्चनार्हकालेऽपि भक्तानां सेवनाय तु।
अकाला बहवः प्रोक्तास्तथा यवनिकोदिताः।।

तस्मादकालसेवां तु विधिना परिवर्जयेत्।
विषयाक्रान्तचित्तानां विष्ण्वर्चनमकुर्वताम्।।

कर्मभूमौ नृणां जन्म कर्मापि विफलं ध्रुवम्।
यो गुरौ मानुषं भावं शिलाभावं च दैवते।।

मन्त्रेषु जीविकाभावं हिंसाभावं मखेषु च।
पूजकेषु च पूजायां नीरसं भावमेति सः।।

सर्वथा निन्दितव्यो हि जीवितं तस्य निष्फलम्।

## ९.१३.३३ क्षमामन्त्रः

**प्र.३६. ६३६ - ६५७**

अथ वक्ष्ये विशेषेण क्षमामन्त्रविधिं परम्।।

अपचारेषु सर्वेषु यं जप्त्वा मुच्यते नरः।
अपराधः कृतो येन जानता स्ववशेन सः।।

क्षमामन्त्रसहस्रस्य जापेनापि न मुच्यते।
क्षमामन्त्रस्त्वशेषाघध्वंसनक्षम उच्यते।।

नारायण नमस्तेऽस्तु नमो भक्तपरायण।
नमोनमो नमस्तेऽस्तु नमस्तेऽस्तु नमोनमः।।

अज्ञानादर्थलोभाद्वा रागाद् द्वेषात्प्रमादतः।
अपराधः कृतो यस्तं क्षमस्व पुरुषोत्तम।।

सन्ध्ययोश्च दिवा रात्रौ जाग्रत्स्वप्नसुषुप्तिषु।
अपराधः कृतो यस्तं क्षमस्व पुरुषोत्तम।।

कायेन मनसा वाचा सर्वैर्वापि समुच्छ्रितैः।
अपराधः कृतो यस्तं क्षमस्व पुरुषोत्तम।।

तिष्ठता व्रजता चैव शय्यासनगतेन च।
अपराधः कृतो यस्तं क्षमस्व पुरुषोत्तम।।

स्नास्यता जपता वापि यजता जुह्वता मया।
अपराधः कृतो यस्तं क्षमस्व पुरुषोत्तम।।

भुञ्जता ध्यायता नूनं विषयानुपसेवता।
अपराधाः कृता ये तान् क्षमस्व पुरुषोत्तम।।

मया वा मज्जनैर्वापि मम बन्धुभिरेव वा।
अपराधः कृतो यस्तं क्षमस्व पुरुषोत्तम।।

आचार्येणार्चकेनापि भक्तैर्वा परिचारकैः।
अपराधः कृतो यस्तं क्षमस्व पुरुषोत्तम।।

गायकैर्नर्तकैर्वाऽथ वादित्राणां च वादकैः।
अपराधः कृतो यस्तं क्षमस्व पुरुषोत्तम।।

प्रणवादिविसर्गान्तं क्रियासु विधिपूर्वकम्।
अमन्त्रमर्चने दोषं क्षमस्व पुरुषोत्तम।।

उत्थानाच्छयनान्तासु क्रियासु विविधासु च।
श्रद्धालोपकृतं दोषं क्षमस्व पुरुषोत्तम।।

कःशक्नोत्यर्चितुं देवं त्वामनाद्यन्तमव्ययम्।
तस्मादज्ञानचरितं क्षमस्व पुरुषोत्तम।।

प्रार्थये देवदेवं त्वां प्रसीद भगवन्मयि।
प्रसीदतु रमा मह्यं तव वक्षस्थलालया।।

ईशाना जगतो देवी माता नित्यानपायिनी।
प्रसीदन्तु सुराः सर्वे प्रसादाद्युवयोर्मयि।।

स्वस्त्यस्तु कृपयाऽस्माकं युवयोः सुप्रसन्नयोः।
उपचारापदेशेन कृतानहरहर्मया।।

अपचारानिमान् सर्वान् क्षमस्व पुरुषोत्तम।
इति विज्ञापयेद्भूयो भक्तिसाध्वसभावितः।।

तदर्थनात्परं प्रीतः प्रसीदति खगध्वजः।
क्षमामन्त्रमिमं देयान्न चाशुश्रूषवे क्वचित्।।

गुह्याद्गुह्यतमो गोप्यस्सर्वदा गुरुभिः सदा।

***

# १०. तत्त्वज्ञानप्रकरणम्

## १०.१.१ परापरतत्त्वज्ञानम्

### वि. पु. ४९१ - ५२०

तस्य भावस्तत्त्वमिति तस्य परब्रह्मणः परमात्मनो नारायणस्य भावः। 'तत्वं नारायणः पर' इति श्रुतिः । तदवगमनं ज्ञानम्। तद्विदः ब्रह्मविदः। तस्मात्परमात्मा ज्ञेयः, जीवात्मा ज्ञाता, श्रुतयो ज्ञानमिति ब्रह्मवादिनो वदन्ति। तस्य ब्रह्मणो निष्कलस्सकलश्च स्वभावः।

निष्कलः परमात्मनोऽन्यत् न किंचिदस्तीति। क्षीरे सर्पिः. तिले तैलं, पुष्पे गंधः फले रसः, काष्ठे अग्निरिव अन्तर्बहिश्च तत्सर्वं व्याप्याऽऽकाशोपमः। 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थित' इति 'आकाशशरीरं ब्रह्मे' ति। अशरीरः शरीरेषु व्याप्य तिष्ठति, विश्वव्यापनशीलत्वाद्विष्णुः दृश्यादृश्यः अत्यच्छः अमलः नित्यः अचिन्त्योऽप्रमेयः निर्गुणो निश्चलो निरवयवो निराद्यंतो निर्विकल्पो निर्द्वंद्वोऽनिर्वचनः अतीन्द्रियः सुसूक्ष्मत्वादनिर्देश्यः सदसदिति ब्रह्मवादिनो वदन्ति। परं धाम परं ज्योतिः सर्वशः सर्वशक्तिमयः सर्वदेवमयः सर्वधर्ममयः सर्वाधारस्सनातनः ज्ञातृज्ञेयज्ञानहीनः ज्ञानघनः जाग्रत्स्वप्नसुषुप्तितुरीयस्थानगो बहिःप्रज्ञः प्रज्ञावस्थः स्थूलसूक्ष्मविभागेन वैश्वानरतेजःस्वरूपेण भुञ्जानः सर्वेषामात्मा गुहायां निहितः। 'अणोरणीयान्महतोमहीयानात्मा गुहायां निहितोऽस्य जन्तो' रिति श्रुतिः। तस्माद्धृदयकमलान्तराकाशोपलब्धवैश्वानरशिखायां त्रिगुणात्मको विष्णुः

परमात्मा तिष्ठति। 'तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः। स ब्रह्मा स शिव' इति श्रुतिः। एवं निष्कल शति विज्ञायते।।

अथ सकलः काष्ठे अग्निर्मथनात् ज्वलन्निव निष्कलात्मको विष्णुः ध्यानमथनेन भक्त्या संकल्पनात् सकलो भवति। तस्मादग्नेर्विस्फुलिङ्गमिव ब्रह्मेशानादिदेवतारूपैर्भिन्नत्वात् कुलालचक्रस्थमृदो घटशरावादिभेदा इव यद्यद्रूपं मनसा भावितं तत्तद्रूपो भूत्वा विष्णुः प्रकाशते। 'विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुतविश्वतस्पात्। सं बाहुभ्यां नमति संपतत्रैर्द्यावाभूमी जनयन् देव एक' इति श्रुतिः। तत्र सर्वव्याप्तशरीरः परमात्मैव सर्वभूतानां प्रभवरक्षणसंहतिनिमित्तशरीरी भवति। 'अग्निर्वै देवानामवमो विष्णुः परमस्तदन्तरेण सर्वा अन्या देवता' इति ब्राह्मणम्। तस्मात् प्रधानः परमोऽव्ययो विष्णुः। स एव पुरुषः स एव स्रष्टा, पाता, हर्त्ता अखिलस्य। तद्भिन्नाः पुरुषाः।

तद्विष्णोर्विभूतिः श्रीः। सा च नित्या आद्यन्तरहिता अव्यक्तरूपिणी प्रमाणाऽप्रमाणसाधारणभूता विष्णोस्संकल्पानुरूपा नित्यानन्दमयी। मूलप्रकृतिरूपा शक्तिः तद्भिन्ना। प्रकृत्यंशभूताः तद्भिन्नाः स्त्रियः। तदात्मिका माया प्रकृतिः। मायी विष्णुः। प्रकृतिपुरुषावेतावनादी। ताभ्यां लोकप्रवृत्तिः। विकारगुणाः सर्वे प्रकृत्युत्पन्नाः। कार्यकारणकर्तृत्वे हेतुः प्रकृतिः। पुरुषः सुखदुःखानां भोक्तृत्वे हेतुः। प्रकृतिस्थः पुरुषः प्रकृतिजान् गुणान् भुङ्क्ते।

सा प्रकृतिः द्विधा भवति चेतनाऽचेतनेति। अचेतना पञ्चभूत-मनोबुद्ध्यहङ्काररूपैऽरष्टधा भिन्ना। अन्या जीवभूता चेतनेति। तथा प्रकृत्या सदा संश्लिष्टाः पुरुषाः प्रकृतिस्थाः जीवात्मानः क्षेत्रज्ञाः बहवः।

तेऽपि नित्या अनाद्यविद्यासंचितपुण्यपापफलं भोक्तुं बहुविधं देहं प्रविश्य तत्तदात्माभिमानिनः तत्र शुभाशुभकर्माणि कृत्वा तत्तत्फलानुरूपं देहं पुनःपुनः प्राप्य वर्तन्त इति विज्ञायते।

## विष्णुलोकाः तेषु विद्यमानभगवद्रूपाणि

अथातः परमात्मनस्सकाशाद्धिरण्मयमण्डमभवत्। तदन्तर्गतानां सर्वेषामण्डानामुपरि सनातनमचिन्त्यं देवैरप्यनभिलक्ष्यं नित्यशुद्धमुक्तस्वभावपुरुषैरनुभूयमानं वैष्णवाण्डम्। तत्र विष्णुलोकाश्चत्वारः आमोदः संमोद, प्रमोदः वैकुण्ठमिति एकैकस्योपरि यथाक्रमेण भवति। तस्मिन् हेममयप्राकारगोपुरतोरणशतसहस्रैः कनककमलकुसुमादिभिरपि अलंकृते, अमृतजलपूर्णैश्शतसहस्रैश्च सरितां प्रभासमाने दिव्ये लोके सहस्रादित्यसंकाशं हेममयं द्वादशतलैर्युतविमानं, नित्यज्ञानक्रियैश्वर्यब्रह्मादिदेवऋषिभिः नित्य(दिव्य) परिजनैर्युतं मन्दिरम्। तस्मिन् व्योमनिलये परमात्मा स्वसंकल्पेन देवीभूषणायुधैः सह आमोदे विष्णुः प्रमोदे महाविष्णुः संमोदे सदाविष्णुः, वैकुण्ठे सर्वव्यापी नारायणः आसीनो भवेत्।

'तमीश्वराणां परमं महेश्वरं तं देवानां परमं च दैवत' मिति श्रुतिः। यदा यदा प्रजास्सृजेयेति सोऽकामायत तदा तदा स्वाभिमतानुरूपस्वरूपगुणस्वशक्त्या स्वलीलयैव इमं प्रपञ्चं कार्यकारणभावेन यथापूर्वं ससर्ज' इति श्रुतिः। सर्वेषां जीवानां प्रभोस्सिसृक्षोर्ब्रह्मणः स्वेच्छया भूतान्यसृज्यन्त। 'आत्मन आकाशः संभूतः आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी पृथिव्या ओषधयः ओषधीभ्योऽन्नम्। अन्नाद्भूतानि जायंते', इति श्रुतिः।

## चतुर्मुखस्योत्पत्तिः जीवात्मनां देहोत्पत्तिप्रकारश्च

एकदा प्रलयकाले भुजङ्गपतिभोगशयने शयितस्य नारायणस्य नाभिकमले ब्रह्मोद्भूतो भगवदंशश्चतुर्मुखो जगत्सर्वं सृजतीति विज्ञायते।।

ओषधीभ्योऽन्नमुपजायते, तदन्नं त्रिविधं भवति, एकं मूत्रं, एकं पुरीषं, एकं पुरुषाणां शुक्लं, स्त्रीणां शोणितम्। शुक्लशोणितयोः क्षीरे सर्पिरिव सर्वव्यापिनी मायाशक्तिर्भवति। पुरुषबीजमूलसंचितं शुक्लं स्त्रीकुचमूलसंचितं शोणितं च संयोगकाले दैवयोगेन वायुना गर्भालयं प्रविशति।

तत्रैकरात्रोषितं कलिलं, द्विरात्रोषितं बुद्बुदं, त्रिरात्रोषितं मांसलं, चतूरात्रोषितं पेशलं, पञ्चरात्रोषितं घनं,षड्रात्रोषितं व्यूहं, सप्तरात्रोषितं बन्धु, अष्टरात्रोषितं सुकुमारं, नवरात्रोषितं यावनं, दशरात्रोषितं वयसं, अर्धमासे अण्डाकृतिः, मासे शरीराकृतिः, मासद्वये शिरोबाहुप्रदेशाः, त्रिमासे जठरकटिदेशाः, चतुर्थे मासे पाणिपादद्वयं, पञ्चमे मासे रोमरूपाणि, षष्ठे मासे अस्थिसंघातं, सप्तमे मासे जीवप्रकाशः, अष्टमे मासे देहं करोति, नवमे मासे प्रचलनं करोति। तत ऊर्ध्वं जायते। स्नायुमज्ज्ञास्थीनि रेतोमयानि त्वग्रक्तमांसानि शोणितमयानि। एवं षट्कोशविकृतत्वग्रुधिरमांसमेदोस्थिमज्ज्ञाशुक्लमिति क्रमेणान्तर्भूतानि सप्तधातूनि। सप्तधातुमयं गात्रं भवति।

शुक्लाधिके पुरुषः शोणिताधिके स्त्री। द्वयोस्तुल्ये नपुंसकं भवति। पुंसो वा स्त्रियो वा परस्परभावेन तयोरेको गर्भस्य वर्ण इति विज्ञायते।

अथातः पृथिव्यादि महाभूतानां समवायं व्याख्यास्यामः। शरीरे यत्कठिनं तत् पृथिव्याः, यो द्रवः सोऽम्भसः, यदुष्णं तत्तेजसः, यत्संचरति सोऽनिलस्य, यत्सुषिरं तदाकाशस्य। श्रोत्रादीनि ज्ञानेन्द्रियाणि। श्रोत्रमाकाशात्। वायोः

स्पर्शः, अग्नेश्चक्षुः अद्भ्यो जिह्वा, पृथिव्याः घ्राणम्। एवमिन्द्रियाणां यथाक्रमेण शब्दस्पर्शरूपरसगन्धा विषयाः। वाक्पाणिपादपायूपस्थानि महाभूतेषूत्पन्नानि कर्मेन्द्रियाणि। तेषां क्रमेण वचनाऽऽदान गमनविसर्गाऽऽनन्दाश्च विषयाः।

चतुर्षु पृथिव्यादिमहाभूतेषु क्रमेणोत्पन्नानि मनोबुद्ध्यहंकारचित्तानीत्यन्तःकरणचतुष्टयम्। तेषां क्रमेण संकल्पविकल्पावध्यवसायोऽनात्मन्यात्मावबोधनम्, अनुभूतार्थस्मरणानि च विषयाः। मनःस्थानं गलान्तरं, बुद्धेर्वदनम्, अहङ्कारस्य हृदयम्, चित्तस्य नाभिरिति।

अस्थिचर्मरोमनाडीमांसाश्च पृथिव्यंशाः, मूत्रश्लेष्मरक्तशुक्लमेदस्वेदाश्च अबंशाः, क्षुत्तृष्णानिद्रालस्यमोहमैथुनानि अग्न्यंशानि, प्रचरणविलेखनोन्मीलन-निमीलनादीनि वाय्वंशानि, कामक्रोधलोभमोहभयान्याकाशस्य।

शब्दस्पर्शरूपरसगन्धाश्चैते पृथिवीगुणाः। तेषां गन्धविहीनाश्चत्वारः अपां गुणाः। गन्धरसविहीनास्त्रयः अग्निगुणाः। शब्दः स्पर्श इति द्वौ वायोर्गुणौ, शब्दमेकमेवाकाशस्य गुणः।

## सात्विकादिगुणाः

सात्त्विकराजसतामस इति त्रयो गुणाः। अहिंसासत्यास्तेयब्रह्मचर्य कल्पनाऽक्रोधगुरुशुश्रूषाशौचसंतोषाऽऽस्तिक्याऽऽर्जवानीति सात्त्विक-लक्षणानि। अहं कर्ता अहं वक्ता अहं भोक्तेत्यादीनि अभिमानगुणानि राजसलक्षणानि। निद्राऽऽलस्य मोहमैथुनस्तेयकर्माणि तामसलक्षणानि।

ऊर्ध्वे सात्त्विकाः मध्ये राजसाः अधस्तात्तामसा इति। सम्यग्ज्ञानं सात्त्विकं, धर्मज्ञानं राजसं, तिमिरोऽन्धं तामसमिति।

## जाग्रदाद्यवस्थाभेदाः

जाग्रत्स्वप्नसुषुप्तितुर्यमिति चतुर्विधाऽवस्था। ज्ञानेन्द्रियकर्मेन्द्रियान्तःकरण चतुष्टयचतुर्दशकरणयुतं जाग्रत्। अन्तःकरणचतुष्टयमात्रयुक्तं स्वप्नम्। चित्तैककरणयुता सुषुप्तिः। केवलजीवयुक्तमेव तुर्यमिति। (उन्मीलितजीवमध्यस्थ) परमात्मजीवात्मनोर्मध्ये जीवात्मा क्षेत्रज्ञ इति विज्ञायते। सोऽपि पञ्चमहाभूतदेहेन्द्रियभूतगुणान्तःकरणचतुष्टयानि इत्येतैः पञ्चविंशात्मकः पुरुषः। तस्मात्पञ्चविंशात्मको देह इति विज्ञायते।

## देहे भगवन्मूर्तीनां ध्यानम्

अथातो देहलक्षणं वक्ष्ये। स्वाङ्गुलीभिः षण्णवत्यङ्गुलो देहः। तद्द्वादशाङ्गुलाधिक प्रमाणः प्राणः प्राणायामेन समो भवति। गुदात् द्रव्यङ्गुलादूर्ध्वं देहमध्यम्। तस्मिन् हेमाभं त्रिकोणं वह्निमण्डलम्। तन्मध्ये बिन्दुनादेन सह रेफबीजं ज्वलति तन्मध्ये मण्डलपुरुषो यज्ञमूर्तिः पिङ्गलाभः द्विशीर्षः चतुःशृङ्गः षण्णेत्रः सप्तहस्तो दक्षिणे अभयस्त्रक्शक्तिखड्गयुतः, वामे वरदस्रुक्खेटयुतः त्रिपादः पीताम्बरधरः (श्रीवत्साङ्कः) किरीटकेयूर-हारादिसर्वाभरणयुक्तः दक्षिणवामयोः स्वाहास्वधाभ्यां सहितः सर्वदेवैः परिवृतः स्थितः।

## नाभौ द्वादशारचक्रं तत्र जीवः

तदूर्ध्वे नवाङ्गुलं कन्दस्थानं चतुरङ्गुलोत्सेधायामं, त्वगादि-सप्तधातुभिर्भूषितम् अण्डाकृतिकम्। कन्दमध्ये नाभिः। नाभौ द्वादशारयुतं चक्रम्। तत्र चक्रे पुण्यपापप्रचोदितस्तन्तुपञ्जरमध्यस्थो लूतिक इव प्राणारूढः प्रवर्त्तते (भ्रमति) जीवः।

## नाभेरूर्ध्वं कुण्डलिनी शक्तिः

तस्योर्ध्वे नाभौ तिर्यग्गता अधऊर्ध्वे गता अष्टप्रकृतिरष्टधा कुटिला नागरूपाऽविद्या मुखेन ऊर्ध्वद्वारं संरुध्य कन्दपार्श्वे स्थिता कुण्डलीभूता सर्पफणामणिमण्डलश्रियमुपेयुषी कुण्डलिनी शक्तिः आत्मनः फणेन ब्रह्मरुद्राख्यं सुषुम्नानाडीरन्ध्रमुपगूह्य तिष्ठति।

## हृदये सूर्यमण्डले भगवन्मूर्तिः

नाभ्या उपरि वितस्त्या हृदयम् । तत्र सर्वं प्रतिष्ठितम्। हृदये अर्कबिम्बम्। तस्मिन् सकारबीजान्वितं सहस्रज्वालायुतं ज्योतिर्ज्वलति। तन्मध्ये मण्डलपुरुषो विष्णुमूर्तिः तरुणादित्यसंकाशो हेममयो हिरण्यश्मश्रुकेशनखयुतः पीताम्बरधरः श्रीवत्साङ्कः चतुर्भुजः शङ्खचक्रधरः अभयकट्यवलम्बितहस्तः रक्तास्यनेत्रपाणिपादः सौम्यः सुप्रसन्नमुखः किरीटकेयूरहारकटिप्रलम्बयज्ञोपवीतादिसर्वाभरणभूषितः सृष्टिस्थित्यन्तकारणः देवीभ्यां पारिषत्कैः सहितः स्थितः।

## नासाग्रे चन्द्रमण्डले भगवन्मूर्तिः

नासाग्रे शुद्धस्फटिकसङ्काशं चन्द्रबिम्बम्। तस्मिन् ऋकारबीजान्वितम्, अमृतं स्रवन्तं श्वेतरोचिषं ध्यात्वा, तन्मध्ये मण्डलपुरुषो नारायणमूर्तिः शुद्धस्फटिक सङ्काशः पीताम्बरधरः श्रीवत्साङ्कश्चतुर्भुजः शङ्खचक्रधरः अभयकट्यवलम्बितहस्तः पद्मोदरदलाभनेत्रो रक्तास्यपाणिपादः किरीटकेयूरादिसर्वाभरणभूषितः स्मेरमुखः देवीभ्यां पारिषत्कैस्सहितः स्थितः।

## मूर्धनि मुक्तिद्वारम्

तस्योपरि मूर्ध्नि सुषुम्नाया अग्रे मुक्तिद्वारम् । तस्मिन् पद्मम्

अधोमुखमूर्ध्वमूलं षोडशदलयुतम्। तस्मिन् स्थितम् अमृतधाराभिस्सहस्रा-भिराप्लाव्यमानं मण्डलपुरुषवासुदेवं ध्यायेदिति विज्ञायते।।

## हृत्पद्मस्थभगवद्ध्यानविधिः

अथ कन्दादुत्थितं द्वादशाङ्गुलं सुज्ञाननालम् अणिमा महिमा लघिमा गरिमा प्राप्तिः प्राकाम्यमीशित्वं वशित्वमित्यष्टैश्वर्यदलोपेतं प्रकृत्यात्मककर्णिकं विद्याकेसरसंयुक्तमधोमुखं हृदयकमलं प्राणायामैर्विकसितमूर्ध्वमुखं भवति। तस्यान्तः कर्णिकामध्ये महानग्निर्ज्वलन् विश्वार्चि र्विश्वतोमुखः आपादतलमस्तकं संतापयति। तन्मध्ये पीताभा नीवारशूकवत्तन्वी वह्निशिखा। तस्याः शिखाया मध्ये प्रज्वलितज्योतीरूप एव स्वसङ्कल्पेन तप्तजाम्बूनदप्रभः पीताम्बरधरः पद्माक्षः रक्तास्यपाणिपादश्चतुर्भुजश्चक्रशङ्खधरोऽभयकट्यवलम्बितहस्तः श्रीवत्साङ्कः सुप्रसन्नः शुचिस्मितः सर्वाभरणभूषितः हृदिस्थितः परमात्मा दक्षिणवामयो र्विभूतिमायाभ्यां पारिषत्कैस्सह संस्थितः। 'नीवारशूकवत्तन्वी पीताभास्वत्यणूपमा तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः' इति श्रुतिः। तं विष्णुं जीज्ञासुः ध्यानयोगेन ज्ञानचक्षुषा पश्येत्। 'सदा पश्यन्ति सूरय' इति श्रुतिः। विश्वव्यापिनं विष्णुं ध्यानमथनेनाऽऽविर्भूतं तेजोभासुरं भक्त्या सकलं संकल्प्य, आवाह्य अभ्यर्चयेदिति। 'प्र वः पान्थमन्धसो धियाय ते महेशूराय विष्णवे चार्चत' इति श्रुतिः। तस्माद्विष्ण्वर्चनमेव द्विजैरहरहः कर्त्तव्यमिति विज्ञायते।

## नाडीसंख्याः तत्र मुख्यस्वरूपम्

अथातो नाडीचक्रं वक्ष्ये। कन्दोद्भूता द्विसप्ततिसहस्राणि नाड्यः, तासु मुख्याश्चतुर्दश। इडा, पिङ्गला, सुषुम्ना, सरस्वती, वारु(चारणा) णी,

पूषा, हस्तिजिह्वा, यशस्विनी, विश्वोदरा, कुहू, शङ्खिनी, पयस्विनी, अलम्बुषा, गान्धारीति। आसामादौ तिस्रो मुख्याः । तिसृषु सुषम्नैव प्रधाना। व्यक्ता वैष्णवी सात्वि(की) का मुक्तिमार्गेति विद्वद्भिः कथिता। सा कन्दमध्ये पद्मसूत्रप्रतीकाशा वीणादण्डान्तर्निर्गततन्त्री, अलाबुवद्वंशास्थिना सह मूर्धान्तं स्थिता। तस्या दक्षिणभागे दक्षिणनासान्तं स्थिता पिङ्गला। तस्यां भास्करश्चरति। इडा वामभागे वामनसान्तं स्थिता। तस्यां चन्द्रश्चरति। तौ राजसतामसौ विषामृतभागौ दिवारात्रौ स्याताम्। सुषुम्नायाः पूर्वभागे च ऊर्ध्वाधोगता मेढ्रान्तं स्थिता कुहूः। अपरे चोर्ध्वाधो गता जिह्वान्तस्थिता सरस्वती। पिङ्गलायाः पूर्वभागे चोर्ध्वाधोगता दक्षिणपादाङ्गुष्ठान्तं स्थिता यशस्विनी, अलम्बुसा च। अपरे दक्षिणनेत्रान्तं स्थिता पूषा। पूषालम्बुसयोर्मध्ये वामनेत्रान्तं स्थिता हस्तिजिह्वा। यशस्विनीकुह्वोर्मध्ये ऊर्ध्वगतसर्वगामिनी दक्षिण- पाण्यङ्गुष्ठान्तं स्थिता(चरणा) वारुणी। पूषासरस्वत्योर्मध्ये दक्षिणकर्णान्तं स्थिता पयस्विनी। इडायाः पूर्वभागे चोर्ध्वाधोगता वामपादाङ्गुष्ठान्तं स्थिता हस्तिजिह्वा। अपरे वामनेत्रान्तं स्थिता गान्धारी। हस्तिजिह्वाकुह्वोर्मध्ये अधश्चोर्ध्वगता सर्वगामिनी वामपाण्यङ्गुष्ठान्तं स्थिता विश्वोदरा। गान्धारीसरस्वत्योर्मध्ये वामकर्णान्तं स्थिता शङ्खनी। अलम्बुसाकन्दमध्येऊर्ध्वाधोगतास्सर्वगामिन्यः पायुमूलाग्रगता अन्यास्सिराश्च अश्वत्थपत्रसिरावत्समुत्पन्ना इति विज्ञायते।

### नाडीषु प्राणादिवायूनां सञ्चारः, तेषां मुख्याः

अथैतासु नाडीषु प्राणापानव्यानोदानसमानानागकूर्मकृकरदेवदत्तधनञ्जया इति दश वायवस्संचरन्ति। तेषु प्राणादयः पञ्च वायवो मुख्याः। तेषु प्राणापानौ मुख्यौ, एतयोः प्राण एव मुख्यः।

## प्राणादीनां स्थानं स्वरूपं च

प्राणस्थानमास्यनासिकयोर्मध्यं, हृन्मध्यं, नाभिमध्यं, पादाङ्गुष्ठाविति पञ्च। स च प्राणो राजावर्तमणिप्रभो निश्श्वासोच्छ्वासकरः हृत्पद्मं समाश्रित्यावर्त्य मुखनासिके करोति।

अपान इन्द्रगोपसमप्रभो गुदं समाश्रित्य, विण्मूत्रविसर्जनं करोति। समानः सन्धिगतः फेनवर्णः नाभिमाश्रित्य हानोपादानचेष्टादीनि करोति। उदानः किञ्जल्कसदृशः कण्ठमाश्रित्य अन्नपानादिपोषणक्रियां करोति। व्यानः व्योमाभः क्षीरे सर्पिरिव सर्वत्र व्याप्य करचरणशयनादिकं करोति। नागः श्वेतः कण्ठं समाश्रित्य उद्गारादीन् करोति। कूर्मो रक्तः नेत्रे समाश्रित्य निमीलनोन्मेषणादि करोति। कृकरः कृष्णः उदरं समाश्रित्य क्षुत्पिपासादीनि करोति। देवदत्तः पीतवर्णः सर्वगस्तन्द्रां करोति। धनञ्जयः श्यामाभः सर्वगः शोभादिकर्म करोति।

## जीवस्वरूपं तस्य कर्म जननक्रमश्च

जीवात्मा अञ्जनाभः नित्यशुद्धः बुद्धः बोधनिर्विकारः नित्याणुप्रमाणः सर्वगत इत्येवंभूतं देहं प्रविश्य शुभाशुभकर्माणि करोति।

तत्कर्म द्विधा भवति ऐहिकमामुष्मिकं चेति। तत्रैहिकं भोजनाऽऽच्छादन स्थानगमनाऽऽसनशयनादिकम्। आमुष्मिकम् अहिंसादानधर्मपरोपकारा (रभगवदाराधना) दि। पुण्यपापानि सर्वाणि भवन्ति देहयोगात्। देहावासने स्वकर्मानुरूपं परलोकं प्राप्य तत्तत्कर्मफलं भुक्त्वा क्षीणे फले निवृत्य आकाशं प्रविशति। वायुर्भूत्वा अग्निं प्रविशति। धूमो भूत्वा अपः प्रविशति। आपो भूत्वा अभ्रं प्रविशति। अभ्रं भूत्वा भूमौ वर्षति। भूम्यामोषधिवनस्पतीन्

प्रविशति। ओषधीभ्योऽन्नम् अन्नाच्छुक्लशोणिते च भवतः। ततः स्वविषयां योनिं प्रविशति। प्रतिदिवसवृद्ध्या परिणतो जायते च। एवं क्षेत्रक्षेत्रज्ञयोश्च परस्परं सम्बन्धादनन्तसंसारे स्थावरजङ्गमनरमृगपशुपक्षिजरायुजाण्डज-स्वेदजोद्भिज्जभेदा बहवो भवन्ति इति विज्ञायते।

### जीवसंसारहेतुः

अथ अयं देहे जन्म कृत्वा भार्यामयपाशनिबन्धितो भगवन्मायया मोहितः कामक्रोधलोभमोहमदमात्सर्यहिंसादीनि करोति।

योनिद्वारेण निष्क्रम्य पुनः पापीयसीं योनिमाश्रित्य पुनर्जायमानः स्वर्गनरकफलेषु कर्मसु प्रवर्तते। तस्माद्भगवन्मायया मोहितत्वात् भगवन्तं समाश्रित्य भक्त्या नारायणमुपासीत।

### संसारतरणोपायः

तदुपासनात् सोऽपि भक्तवत्सलत्वात् भक्तानुकम्पया मोचयति। तत आत्मा सम्यग्ज्ञानं प्रविशति। पश्चादाश्रमधर्मयुक्तो भगवदाराधनं करोति। तदाराधनेन संसारार्णवनिमग्नो जीवात्मा परमात्मानं नारायणं पश्यति। सोऽप्यपुनरावृत्तिकं दिव्यलोकं प्रसादयति। पश्चात्कृतकृत्यो भवति।

### मोक्षस्वरूपं तद्भेदश्च

संसारबन्धनवासनान्मुक्तिर्मोक्षः। तदपि समाराधनविशेषाच्चतुर्विध-पदावाप्तिः सालोक्यं सामीप्यं सारूप्यं सायुज्यमिति। आमोदप्राप्तिः सालोक्यं, प्रमोदप्राप्तिः सामीप्यम्, संमोदप्राप्तिः सारूप्यं, वैकुण्ठप्राप्तिः सायुज्यमिति। तच्च नित्यानन्दम् अमृतरसपानवत् सर्वदा तृप्तिकरं परमात्मनो नित्यनिषेवणं परंज्योतिःप्रवेशनम्। 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरय' इति श्रुतिः। भगवन्तं नान्यथा प्राप्नोतीति विज्ञायते।

## चतुर्विधं भगवत्समाश्रयणम्

अथ भगवत्समाश्रयणं चतुर्विधं भवति जपहुतार्चनध्यानमिति। सावित्रीपूर्वं वैष्णवीमृचम्, अष्टाक्षरं वा, भगवन्तं ध्यात्वा अभ्यसेत् स जपः। अग्निहोत्रादिहोमे यत् हूयते तध्दुतं होमः। गृहे देवायतने वा वैदिकेन मार्गेण प्रतिमादिषु पूजयेत् तदर्चनम्; निष्कलसकलविभागं च ज्ञात्वा अष्टाङ्गयोगमार्गेण परमात्मानं जीव आत्मना चिन्तयेत् तद् ध्यानमिति।

## अर्चनस्योत्तमत्वं मूर्तिभेदनिरूपणं च

तेष्वर्चनं सर्वार्थसाधनं स्यात्। तत्र परमात्मैव पञ्चधा भवति। 'स वा एष पुरुषः पञ्चधा पञ्चात्मे' ति श्रुतिः।

तस्मादाकाशादिमहाभूतानां (क्रमेण) परमात्मानि भेद एव। सभ्याऽऽहवनीयाऽन्वाहार्यगार्हपत्याऽऽवसथ्या इति पञ्चाग्निवत् 'पञ्चधाग्नीन् व्यक्रमद्विराट् स्रष्टे' ति श्रुतिः। प्राणादिपञ्चवायुभेदैरिव पञ्चमूर्तिभेदैर्भिद्यते इति 'पोपूयमानः पञ्चभिः स्वगुणैः प्रसन्नैः सर्वानिमान् धारयिष्यसी' ति श्रुतिः।

तस्मात् विष्णुपुरुषसत्याच्युतानिरुद्ध इति मूर्तीनां पञ्चानामादि-मूर्तिर्विष्णुः। तद्भेदाश्च चतस्रो मूर्तयः। 'तद्विष्णोः श्रमापनुदाय चतुर्गुणाये' ति श्रुतिः। तस्मात् 'ब्रह्मा' चतुष्पात् भवति। पादादर्धात् त्रिपादात् केवलाच्च क्रमेण धर्मज्ञानैश्वर्यवैराग्यैरिति विषयगुणैः चतुर्भिः मूर्त्तयो भवन्ति। आदिमूर्त्तेश्चतुर्मूर्तित्त्वात् क्रमेण विष्णुर्महाविष्णुः सदाविष्णुर्व्यापिनारायण इति चतुर्मूर्तयो भवन्ति। विष्णोरंशः पुरुषः, महाविष्णोरंशः सत्यः, सदाविष्णोरंशः अच्युतः, व्यापिनोंऽशोऽनिरुद्धः इति। धर्मादिब्रह्मगुणैश्चतुर्धा भिद्यते। पुरुषः

पुरुषात्मकः परमपुरुषः धर्ममय इति, सत्यः सत्यात्मकः ज्ञानस्सर्वतेजोमय इति, अच्युतोऽपरिमितैश्वर्यः श्रीपतिरिति, अनिरुद्धः महावैराग्यस्सर्वसंहार इति। एषां रूपं पुरा वर्णादिकथने विधिना चोक्तम्। एवं पञ्चमूर्तिनामभिर्भेदैः गुरूपदेशेन अष्टाङ्गयोगमार्गेण ध्यात्वा आवाह्य अर्चयेदित्याह मरीचिः।

## अष्टाङ्गयोगः

अथातोऽष्टाङ्गयोगं वक्ष्ये। जीवात्मपरमात्मनोर्योगो योग इत्यामनन्ति। यम-नियमासन-प्राणायाम-प्रत्याहार-धारण-ध्यान-समाधय इति योगाङ्गानि।।

## यमस्य गुणाः

तेषु यमः। अहिंसा, सत्यमचौर्यं, गृहस्थस्य स्वदारनिरतिरन्येषां सर्वत्र मैथुनत्यागः, दया, आर्जवं, क्षान्तिः धैर्यं, मिताशनं, शौचमिति यमगुणा दशधा भवन्ति।

## नियमस्य गुणाः

नियमस्तु। तपस्संतोष आस्तिक्यं दानं विष्णुपूजा वेदार्थश्रवणं कुत्सितकर्मसु लज्ञा गुरूपदेशश्रद्धा मन्त्राभ्यासो होम इति नियमगुणा दशधा भवन्ति। एतैर्विंशतिगुणैर्युक्तो योगाधिकारी भवेत्।

## आसनस्य भेदाः

आसनानि नवभेदानि। ब्राह्म-स्वस्तिक-पद्म-गोमुख-सिंह-मुक्त-वीर-भद्र-मयूराणि इति।।

दक्षिणपादमूर्ध्वं वामपादमधः कृत्वा जान्वन्तरे अङ्गुष्ठौ निगूह्य, अङ्के वामपाणिं तदूर्ध्वे दक्षिणपाणिमुत्तानं न्यस्य ऋजुकायो भ्रूमध्येक्षणमासनं तद् ब्राह्मम्।

सीवन्या उभयोः पार्श्वयोः गुल्फद्वयं निक्षिप्य पूर्ववदासनं स्वस्तिकम्। ऊर्वोरुपरि पादतले विन्यस्य पूर्ववद्धस्ततलद्वयं न्यसेत् तत् पद्मासनम्।

दक्षिणजानुं वामजानुं संश्लिष्टं निवेशयेत् (दक्षिणेतरं दक्षिणपार्श्वे, अदक्षिणं दक्षिणोरौ इति गुल्फौ निवेशयेत्) तत् गोमुखम्।

पूर्ववत् वृषणस्याधः सीवन्याः पार्श्वयोः गुल्फौ न्यस्य हस्तौ प्रसार्य जान्वोः स्थाप्य नासाग्रं निरीक्ष्य संवृतास्यो भवेत् एतत् सिंहासनम्।

गुल्फं सव्यं मेढ्रादुपरि विन्यस्य असव्यं तदुपरि न्यसेत् एतत् मुक्तासनम्।

दक्षिणं पादं वामोरोरुपरि न्यस्य वामपादोपरि दक्षिणोरुं न्यसेत्, एतत् वीरासनम्।

ब्राह्मं जान्वन्तरद्वयमग्रमङ्गुष्ठं निगूह्य भ्रूमध्येक्षणं गुल्फौ बृषणस्याधस्सीवन्याः पार्श्वयोः पादौ न्यस्य, पाणिभ्यां बध्वा भद्रासनम्।

करतले भूमौ संस्थाप्य कूर्परौ नाभिपार्श्वयोर्न्यस्य उन्नतशिराः पादो दण्डवद्व्योम्नि संस्थितो मयूरासनमिति।

## आसनस्योत्तमत्वादिकम्

एतेषु ब्राह्मस्वस्तिकपद्मासनान्युत्तमानि। गोमुखसिंहमुक्तानि मध्यानि। वीरभद्रमयूराणि अधमानि इति विज्ञायते।

## प्राणायामलक्षणम्

अथातः प्राणयामः। प्राणापानसमानयोगः प्राणायामः। रेचक-पूरक-कुम्भक इति स च त्रिविधो भवेत्। निश्वासविसर्गो रेचकः। निश्वासोध्मानं पूरकः। निश्वासनिरोधनं कुम्भक इति।

प्राणमपानेन संयोज्य देहमद्ये रेफबीजान्वितं वह्निमण्डलं प्रवेश्य तत्रस्थपुरुषं पश्यति। अग्निं प्रज्वाल्य अग्निना सममुदरस्थमनिलमिडया समारोप्य पूरयित्वा नासाग्रे ऋकारबीजान्वितम् अमृतं स्त्रवन्तमिन्दुमण्डलं तत्रस्थपुरुषं च नेत्राभ्यां पश्यन् मन्दं पिङ्गलया रेचयति। पुनरपि पिङ्गलया वायुमारोप्य पूरयित्वा सकारबीजान्वितम् अर्कमण्डलं तत्रस्थपुरुषं प्रविश्य (पश्येत्) इडया शनैर्विरेचयेत्।

एवं त्रिसंधिषु चतुर्मासमाचरेत्। पृथक्चिह्नोपलक्षितां नाडीशुद्धिमाप्नोति। प्राणमपानवायुना संयोज्य इडया षोडशमात्रैर्वायुमारोप्य अकारमूर्तिं संस्मरेत्। पश्चात् चतुष्षष्टिमात्रं पूरितं धारयेत्। यावच्छक्यं तावद् घारयति। पिङ्गलया द्वात्रिंशन्मात्रै रेचयेत्। पुनः पिङ्गलया षोडशमात्रैर्वायुमारोप्य मकारमूर्तिं संस्मरन् पूरितं प्राणं धारयेत्। अकारमूर्तिं ध्यात्वा चत्वारिंशत्प्रणवं जपेत्। पश्चादिडया रेचयित्वा पुनः पूर्ववदिडया वायुमारोप्य पूरयित्वा धारयेत्। प्रणवं संस्मरन् सव्याहृतिकां सप्रणवां गायत्रीम् अन्ते सशिरस्कां त्रिर्जपेत्। एवं त्रिसन्धिषु प्राणसंयमनं करोति।

ततोऽग्निमण्डलं प्रविश्य तत्रस्थपुरुषेण संयुज्य वह्निना सह वायुमारोप्य, पिङ्गलया आदित्यमण्डलमनुप्रविश्य (तत्रस्थपुरुषेण संयुज्य) पश्चादिडया वायुमारोप्य, चन्द्रमण्डलमनुप्रविश्य, तत्रस्थपुरुषेण संयुज्य, ततो वह्निना कुण्डलिनीमुखं तत्वा, वायुमारोप्य सुषुम्नया चोर्ध्वं नीत्वा कन्दमध्ये स्थितं हृदयकमलमूर्ध्वमुखं विकसितं कृत्वा तत्र परमात्मानं नारायणं पश्यतीति विज्ञायते।

## प्रत्याहारस्वरूपम्, तद्भेदाश्च

अथातः प्रत्याहरः पञ्चधा भवति। इन्द्रियाणां सर्वेभ्यो विषयेभ्यो बलादाहरणम्,

आत्मनि सर्वमात्मवदीक्षणं, विहितकर्मणां बहिर्विना मनसा कृतं, पादाङ्गुष्ठादिमूर्धान्तम् अष्टादशमर्मस्थानेषु वायुमारोप्य धारयित्वा स्थानात्स्थानादूर्ध्वतोऽधस्ताच्च समाकर्षणं, नाडीमार्गेषु वायुमारोप्य निरोधनमिति च।

## अष्टादशमर्मस्थानानि तत्प्रमाणं च

पाद-जङ्घा-गुल्फ-चितिमूल-जानूरुमध्य-पायुमूल-देहमध्य-मेढ्र-नाभि-हृदय-कण्ठ-तालुमूल-नासिकामूलाक्षिमण्डल-भ्रूमध्य-ललाट-मूर्धान इति अष्टादश स्थानानि।

एतेषां प्रमाणं पादमानं सार्धचतुरङ्गुलं, मेढ्रं, ततो दशाङ्गुलं जङ्घामध्यं, ततो दशाङ्गुलं चितिमूलं, तद्द्वयङ्गुलं जानु, ततो नवाङ्गुलमूरूमध्यं, नवाङ्गुलं पायुमूलं, तदर्धाधिकं त्र्यङ्गुलं देहमध्यं, ततो द्व्यर्धाङ्गुलं नाभिः चतुरङ्गुलम्, तदेकादशाङ्गुलं हृन्मध्यम्, ततो द्वादशाङ्गुलं कण्ठकूबरम्, षडङ्गुलं तालुमूलं, ततश्चतुरङ्गुलं नासिकामूलं, अक्षिमण्डलं द्व्यङ्गुलं , द्व्यङ्गुलं भ्रूमध्यं, ततो द्व्यङ्गुलं ललाटान्तं त्र्यङ्गुलं मूर्धेति।

## मर्मस्थानेषु वायुसंयमनप्रकारः

एतेषु स्थानेषु मनसा वायुमारोप्य; स्थानात् समाकृष्य निरोधं चोर्ध्वतोऽधश्च यथाक्रमेण करोति। इडापिङ्गलाभ्यां वायुमारोप्य कुण्डलिनीपार्श्वयोः आपूर्य, नासाभ्यामदुरस्थं वायुमारोप्य, पूरयित्वा, भ्रूमध्ये कूर्चौ समारोप्य धारयति। एवं नित्यं समाचरेत्। आत्मनः प्राणं सुषुम्नया भ्रूमध्यान्तं समारोप्य, यावन्मण्डलोदयं तावत् संयमनं करोतीति विज्ञायते।

## धारणलक्षणं, शरीरे पृथिव्यादिस्थानं, तत्र ध्येयं रूपं च

अथातो धारणानि अष्टधा भवन्ति। तेष्वात्मनि यमादिगुणयुक्तमनसः

स्थितिः, हृत्पद्मान्तराकाशे बाह्याकाशे धारणं च, पृथिव्यादिमहाभूतेषु पञ्चसु देवानां पञ्च धारणानि, हृत्पद्ममध्ये परमात्मानन्दविग्रहधारणमिति। पादादिजानुपर्यन्तं पृथिवीस्थानं तत्र लकारसंयुक्तं वायुमारोप्य, अनिरुद्धमूर्तिं ध्यात्वा धारयेत्। जान्वोः पायुपर्यन्तम् अपां स्थानम् तत्र वकारसंयुक्तं वायुमारोप्य, अच्युतमूर्तिं ध्यात्वा धारयेत्। पायोर्हृदयान्तमग्निस्थानम्। तत्र रेफयुतं वायुमारोप्य सत्यमूर्तिं ध्यात्वा धारयेत्। हृदयात् भ्रूमध्यान्तं वायुस्थानम्। तत्र यकारसंयुक्तं वायुमारोप्य, पुरुषमूर्तिं ध्यात्वा धारयेत्। आभ्रूमध्यात् मूर्धान्तं व्योमस्थानम् । तत्र हकारसंयुक्तं वायुमारोप्य विष्णुमूर्तिं ध्यात्वा धारयेत्।

एतेषां देवानां ध्यानस्वरूपम्-पूर्वं नाडीष्वकारसंयुक्तं वायुमारोप्य हृन्मध्ये प्रणवेन कार्यम्। स्वेस्वे संहृत्यकरणे प्रणवस्य नादान्ते परमानन्दविग्रहं परमात्मानं नारायणं शुद्धस्फटिकसंकाशं ध्यात्वा धारयेत्। एतां धारणां नियमादिसंयुक्तः नित्यमाचरेत् इत्याह मरीचिः।

## निर्गुणध्यानम्

अथातो ध्यानं वक्ष्ये। परमात्मनो जीवात्मना चिन्तनं ध्यानम्। तद् द्विविधम् । निष्कलं सकलमिति। निष्कलं देवैरप्यनभिलक्ष्यमदृश्यं स्यात्। सकलं द्विविधं निर्गुणं सगुणं चेति। निर्गुणं निष्कलस्वभावः। परमात्मनोऽन्यन्न किंचिदस्तीति। काष्ठे अग्निरिव सर्वं व्याप्य आकाशोपमः सर्वेषां आत्मगुहायां निहितः। अन्तर्बहिश्च संस्थितो दृश्यादृश्यस्थूलसूक्ष्मः अमलोऽत्यच्छः अप्रमेयो निरवयवो निरुद्योगो नित्योऽचिन्त्यो निष्कलः। तमेव प्राणायामप्रत्याहार-धारणादात्मसंस्कारं कृत्वा आत्मना पश्येत्। मध्यदेहान्मूर्धपर्यन्तं भ्रुवोर्मध्ये अन्तरात्मानं नारायणं सर्वजगत्कारणम्। अव्ययम् अव्यक्तम् एकरूपं

परंज्योतिर्ज्वलति अवभासयति। एवं निर्गुणध्यानम्। 'नारायणपरो ज्योति रात्मा नारायणः परः' इति श्रुतिः। तस्मात्प्रधानपरमोऽव्ययो विष्णुस्सदा ध्येयः।

निष्कलमेव प्राणायामैर्विकसितहृदयकमलान्तराकाशे वैश्वानरशिखामध्ये परंज्योतिर्ज्वालारूपवत् स्वयमेव पुरुषः कृष्णापिङ्गलः ऊर्ध्वरेता विरूपाक्षः विश्वरूपः परमानन्दविग्रहो भवेत्। तं परमया भक्त्या पश्येत्। तत्र सन्निहितो भवेत्। इति निर्गुणध्यानं भवतीति विज्ञायते।।

## सगुणध्यानम्

अथ सगुणध्यानं वक्ष्ये। प्राणमपानेन संयोज्य, तमनुप्रविश्य तत्र पुरुषं दृष्ट्वा, पुनः पिङ्गलया आदित्यमण्डलमनुप्रविश्य, तत्रस्थपुरुषं दृष्ट्वा ततश्चेडया चन्द्रमण्डलमनुप्रविश्य, तत्र मण्डल पुरुषं दृष्ट्वा ततो ज्वलिताग्निना कुण्डलिनीमुखज्वलनेन दग्ध्वा, सुषुम्नया चोर्ध्वं गत्वा, प्राणायामेन विकसितहृदयकमलान्तराकाशे वैश्वानरशिखामध्ये चतुरश्रं हेमाभं बिन्दुना सह यकारबीजान्वितं माहेन्द्रमण्डलं, तन्मध्ये अर्धचन्द्राकृतिं श्वेतं बिन्दुना सह वकारबीजान्वितं वारुणं मण्डलं ध्यात्वा, तन्मध्ये प्रणववेष्टितं सुवर्णाभमादिमूर्तिं स्मृत्वा, प्रज्वलितज्योतीरूपमेव भक्त्या सकलं संकल्प्य देवीभूषणायुधैस्सह परिषद्गणैस्सह कल्याणगुणनिधिं पूर्ववद् ध्यायेत्। एतत्सगुणध्यानमुत्तमम्। सर्वसिद्धिप्रदं सर्वत्र प्रयोक्तव्यम्।

हृत्पद्मान्तराकाशे वैश्वानरशिखामध्ये अग्निमण्डलं पूर्ववद् ध्यात्वा, तन्मध्ये परंज्योतिरेव सकलं संकल्प्य, देवीभूषणायुधैः परिषद्गणैस्सहवृतं यज्ञमूर्तिं पूर्ववत् ध्यायेत्। अग्निहोत्रादि होमम्। तदपि सगुणध्यानम्।

हृत्पद्मे वैश्वानरशिखामध्ये अर्कमंडलं पूर्ववत् ध्यात्वा, पद्ममध्ये

परंज्योतिरेव सकलं संकल्प्य, तरुणादित्यसंकाशं विष्णुं पूर्ववद् ध्यायेत्। एतत्सगुणध्यानं सर्वत्र प्रयोक्तव्यं सर्वसिद्धिप्रदम्।

हृदयकमलान्तराकाशे वैश्वानरशिखामध्ये सोममण्डलं पूर्ववद् ध्यात्वा, तन्मध्ये परंज्योतिरेव सकलं सङ्कल्प्य, शुद्धस्फटिकसंकाशं, नारायणमूर्त्तिं ध्यायेत्। एतत् सगुणध्यानं सर्वसिद्धिप्रदं सर्वत्र प्रयोक्तव्यम्।

एवं सगुणध्यानं चतुर्विधं भवति। एतानि वैदिकध्यानमार्गाणि। अन्यान्यवैदिकानि सर्वाणि जघन्यानि। तैः षड्भिः प्रकारैः भगवन्तं नारायणं नित्यमभ्यसेत्। सर्वं समाधिना पश्यतीति विज्ञायते।

**समाधिस्वरूपं तत्फलं च**

अथातः समाधिं वक्ष्ये। जीवात्मपरमात्मनोस्समावस्था समाधिः। यथा अनुष्णोपलमादित्यदर्शनादुष्णत्वमाश्रितमिव (तथा) परमात्मदर्शनात् प्रत्यगात्मा नित्यशुद्धबुद्धमुक्तस्वभावपरमानन्दमयत्वं प्राप्य, परमात्मानं नारायणं सदा पश्यत्यनुभवत्येव। अष्टाङ्गयोगमार्गेण नित्यमणिमाद्यैश्वर्यं च प्राप्नोति। जीवन्मुक्तो भवेत्।

**योगिनो देहत्यागप्रकारः**

अथ चान्त्यकाले सर्वद्वाराणि संयम्य, प्राणमपानेन संयोज्य, शोधयित्वा, सर्वेषु नाडीमार्गेषु निरुध्य 'हंसे' ति सुषुम्नया चोर्ध्वं गत्वा, हृदयाम्भोजे प्राणमारोप्य, तदन्तराकाशे परे ज्योतिषि मनोवृत्तिं सुसंयम्य, परमात्मानं पश्यन् भ्रुवोर्मध्ये प्राणमारोप्य, प्रणवाक्षरेण सबिन्दुनादेन समुत्थापयित्वा, प्राणमुत्सृजति। प्राणेन सह सर्वमात्मनि प्रलीयते। तदा परमात्मना सह वैकुण्ठमवाप्नोति।

## १०.१.२ ब्रह्माण्डविस्तारः

### ज्ञा.२. ३

अथ भुवनखण्डविधिं व्याख्यास्यामः। इमे लोकाः फलानां साधनानि। ततः परेष्वेव फलावाप्तिः। तस्मात् अस्मिन् लोके शुद्धे देशे मनोरमे कर्माऽरभेत।

जम्बूशाककुशक्रौञ्चशाल्मलिगोमेदपुष्करा इति सप्तद्वीपाः मेदिन्याः। क्षारक्षीरघृतदधिमध्विक्षुरसशीतोदधय इत्येते यथाक्रमेण द्वीपान्तरे सप्तोदधय इति। भूर्भुवस्सुवर्महर्जनस्तपस्सत्यलोका इति यथाक्रमेणैकैकस्योपरि लोका भवन्ति।

भूमेरधस्तात् अतलवितलसुतलप्रतलतलातलरसातलमहातल इत्येते पातालाः। ततः परमव्यक्तं तस्मिन्नव्यक्ते प्रवालाभस्त्रिलोचनो जटाधरः निरायुधः शुकपिच्छाम्बरधरः केयूरहारप्रलम्बयज्ञोपवीती कूटस्थं यत्परं तज्जिज्ञासया ध्यानयुक्तः कपिलो वसतीति तत्त्वदर्शिनो वदन्ति।

दक्षिणोत्तरतः पूर्वपश्चिमतश्चाशीतिसहस्रकोटियोजनो जम्बूद्वीपः द्वात्रिंशत्कोटियोजनपृथिव्या घनविस्तारसमावृता भूमिः क्षारसमुद्रेण, द्वीपाद् द्विपं द्विगुणितं बाह्याद् बाह्यं, समुद्राच्च समुद्रं शीतोदधितश्च बाह्यमप्येवं लोकाल्लोकान्तरं तावत्प्रमाणं विवरं सर्वतः परिवृतमित्येतदेकमण्डम्। अन्यान्यनेककोट्यण्डानीति वदन्ति।

जम्बूद्वीपे भारतहैमवतनैषधमेरुदैववैडूर्यश्वेतशृङ्गगान्धर्ववर्षाश्चेति दक्षिणादुत्तरान्तं नव खण्डा भवन्ति। हिमवद्धेमनिषधनीलश्वेतशतशृङ्गाश्चेति षडेते सीमापर्वताः पूर्वापरजलाशयौ विगाह्य प्रतिष्ठिताः। हिमाद्रेर्दक्षिणमासमुद्रान्तं भारतम्। हिमवद्धेमयोर्मध्ये हैमवतम्। निषधाद्धेमकूटान्तं नैषधम्। नील-निषधयोर्मध्ये मेरुः। तत्प्राक् पश्चिमसमुद्राद्दैववैडूर्ये। श्वेतनीलयोर्मध्ये श्वेतः।

श्वेतशतश्रृङ्गयोर्मध्ये श्रृङ्गः। श्रृङ्गादासमुद्राद् गान्धर्वखण्ड इति। शाके विंशतिः कुशे त्रिंशत् क्रौञ्चशाल्मल्योः पञ्चाशत् गोमेदे सप्ततिः पुष्करे नवतिः वर्षा इति विज्ञायते।

### १०.१.३ अवास्तव्या देशाः

**ज्ञा. ३. ५**

दर्दुरबर्बरमालवसिंहलश्रृङ्गिकदेशाश्चेत्येते भारतवर्षे पैशाचदेशाः। ते विप्रैर्न वस्तव्याः। सालमुद्गन्धिकनैधायककुचुमारा इत्येते हैमवते। घाटहारहाटकमुस्तोर्वर्य इत्येते नैषधे। भानुकापहास्यौ दैविके। शाकुण्डवादुकमल्पदाक्षिणकनीलाश्चेत्येते वैदूर्ये। साकुन्धारुणकपोत-पिञ्जालभागशातनभूतवासजेलायकवानगौलकवरिष्ठपञ्चभूमिकावासर-क्षोहाश्चेत्येते श्वेते। तैष्यप्रमर्दलम्भोमत्तस्त्रीवासाश्चेत्येते श्रृङ्गे। शाण्डिल्य-धुन्धुमारकापोतबडबामुखा इत्येते गान्धर्वे न वस्तव्या विषया भवन्ति। शाके काकणिकं कुशे पद्मापहारितं क्रौञ्चे मुखतुलकशाण्डिल्यकैटभस्फोटामुखाः शाल्मले कासीसवैराग्यौ गोमेदे काकावासभुजावसौ पुष्करे दारुण इत्येते विप्रैर्न वस्तव्या देशा भवन्तीति विज्ञायते।



